वदनं प्रसादसदनं सदयं हृदयं सुधामुचो वाचः।
करणं परोपकरणं येषां केषां न ते वन्द्याः॥

चारुदेवः शास्त्री।
६।४।८१

|| श्रीः ||

# हरिदास संस्कृत ग्रन्थमाला

२०१

|| श्रीः ||

# प्रस्तावतराङ्गिणी

( मध्यमा-शास्त्र्याचार्यादिपरीक्षार्थिनां विद्यार्थिनामुपयोगाय विनिर्मिता विविधविषयावगाहिनां ललितपदबन्धानां प्रबन्धरत्नानां मञ्जूषा )

इयम्

अम्बालास्थे लवपुरीये श्रीदयानन्दकालेजे संस्कृतसाहित्याध्यापकेन वाक्यपदीयस्य संस्कर्त्रा श्रीगान्धिचरितस्य प्रणेत्राऽनुवादकलोप-सर्गार्थचन्द्रिकाशब्दापशब्दविवेकव्याकरणचन्द्रोदयाद्यनेकेषां ग्रन्थानां निर्मात्रा श्रीरामकृष्णतनुजनुषा एम्. ए., एम्. ओ. एल्, इति विरुदभाजा

श्रीचारुदेवेन शास्त्रिणा

प्रणीता



चौखम्बा संस्कृत सीरीज आफिस, वाराणसी



१९७७

प्रकाशक : चौखम्बा संस्कृत सीरीज आफिस, वाराणसी

मुद्रक : चौखम्बा प्रेस, वाराणसी

संस्करण : चतुर्थ, वि० सं० २०३४

मूल्य : ८-००



के० ३७/९९, गोपाल मन्दिर लेन

पो० बा० ८, वाराणसी-२२१००१ (भारत)

फोन : ६३१४५

अपरं च प्राप्तिस्थानम्

चौखम्बा अमरभारती प्रकाशन

के० ३७/११८, गोपाल मन्दिर लेन

पो० बा० १३८, वाराणसी-२२१००१

(भारत)

THE

HARIDAS SANSKRIT SERIES

201



# PRASTĀVATARANGIṆĪ

( A TEXT BOOK OF SANSKRIT ESSAYS )

By

S'RĪ CĀRU DEVA S'ASTRĪ

M. A., M. O. L.

*Professor of Literature, D. A. V. College, Ambala.*



THE

Chowkhamba Sanskrit Series Office

Varanasi–221001 ( India )

1977

# निवेदना

सत्सु केषुचित्प्रबन्धकल्पलतिकेत्यादिषु निबन्धग्रन्थेषु कैमर्थिकी प्रवृत्तिरस्मदीयेति स्याद् विविदिषा विदुषाम् । तान् विनीतवद् विज्ञापयामः शिष्योपचिकीर्षैवात्र कर्मणि नः प्रयोजिकाऽभूदिति । एतेन नो ग्रन्थेनोपकरिष्यते विनेयवृन्दं सावीयश्चाभिविनेष्यते निबन्धनकलायामिति नोऽभिमानः । अयमात्मसम्भावनोत्थः स्यादध्यारोपोपादानो वा स्याद् विभ्रमनिबन्धनो वा स्यादित्यत्र सदसती विवेक्तारस्तत्त्वं प्रतिपत्तारः प्रवक्तार एव मानं न वयम् । इदं तावन्नापलाप्यम्—अस्तीहाभिनवायां नः क्रियायामभिनवः कश्चिदर्थोऽनुच्छिष्टश्च शब्दविन्यास इति । विषयोपसङ्ग्रहोपि नूत्नो रुच्योऽर्थवांश्चेति शक्यमापाततोऽस्या गुणवत्ता श्रद्धातुम् । इदं च श्रद्धापयामि गुणगृह्यान्विपश्चितो न ह्येतदवलोकने व्यापृतास्ते कालक्षेपस्य कृतेऽनुतप्स्यन्ते मान्द्यं वा समुत्साहस्य लप्स्यन्त इति । अतोतिरिक्तं नेशे वक्तुम् । अध्ययनाध्यापनयोः प्रसक्ताः कार्य्यान्तरेषु लौकिकवैदिकेषु चाभियुक्ता मान्यास्ते विचक्षणा इमां मे कृतिमवश्यमुपद्रक्ष्यन्ति गुणदोषतश्च विभक्ष्यन्तीति सम्प्रार्थये । यः खल्वत्र क्वचित्क्वचित्सीसकाक्षरदौर्बल्याद्रेफानुस्वारयोर्विलोपोभूयश्च सकारशकारयोः शकारषकारयोश्च व्यत्यासः काचित्कः स सुसमाधानः सुधीभिरिति न पृथङ्निर्दिष्टः प्रतिकायामिति विज्ञाप्य विरमति ।

अम्बालये	विदुषां विधेयश्
वैशाखस्य शुक्लप्रथमायाम्	चारुदेवशास्त्री

ओं नमः परमात्मने । नमो भगवते पाणिनये । नमः शिष्टेभ्यः ।

# उपोद्घातः

## प्रस्तावलक्षणम् ।

अथ किंलक्षणोऽर्थः प्रस्तावो भवति । उच्यते—प्रायेण यत्किञ्चिद्विषयकोऽनुज्झितार्थसम्बन्धो गद्यबन्धः प्रस्ताव इति समाख्यया प्रथते । वस्तुतस्तु कञ्चिद्विषयमालम्ब्य स्वाभिप्रायस्य स्वविमर्शस्य च लेखेन निबन्धनं प्रस्ताव इति युज्यते वक्तुम् । परमत्रार्थ एवास्य शब्दस्य व्यवहारो न नियम्यते लोकेऽन्यत्राप्युपचर्यते । यत्र स्वाभिप्रायादिर्नास्ति, केवलं तन्त्रान्तरेभ्यः समाहृत्यैकवस्तुविषयोऽर्थः स्वशब्दैरुच्यते तत्रान्यत्र चेतिवृत्ताख्याने सर्गसौन्दर्यवर्णने चेतनाचेतनार्थानामाकारादिवर्णने च दर्शनात् ।

प्रस्तावः खलु परिशीलनमन्तरेण न शक्यः सामञ्जस्येन प्रणेतुम् । अस्य प्रणयने शिक्षमाणेन[1] बहुवधेयं भवति । यद्यच्च सविशेषमवधीयमानमिच्छन्ति तज्ज्ञास्तत्तदिह सङ्ग्रहेणोपन्यस्यते—

**विषयैक्यम्**—प्रस्तावे खल्वेकं वर्ण्यं प्रतिपाद्यं वा स्यात् । तदेवैकं यथावद् वितनुयात्समर्थनेनापोहनेनोभयेन वा । यन्नाम प्रकृतं तत्तावदविभ्रान्तेन चेतसा गृह्णीयात् । लेखान्तं च यावत्संनिधापयेन्मनसि । यदप्यप्रसक्तानुवादि प्रसक्तविसंवादि वा सर्वं तत्परिहरेत् । एवं सत्यपि रुचिवैचित्र्यं दर्शननानात्वं च समाश्रित्य प्रस्तुयात् ।

**क्रमः**—प्रस्तावेऽर्थचिन्ताक्रमविशेषमनुरुध्येत । सिद्धान्तस्थापनया निश्चितार्थकीर्तनेन वा प्रस्तावं पर्यवसाययेत् । नात्र क्रमव्यत्यासेनाऽक्रमेण वाऽसमञ्जसं जल्पितं स्यात् । सहैव विषयैक्येणात्र सुविचिन्तितः क्रमविशेषोऽप्यवश्यं भवेत् । तस्मात्क्रमं तावच्चिन्तयेत् ।

**संक्षेपः**—प्रस्तावो नातिदीर्घः स्यात् । अप्रकृतार्थेन वाक्प्रपञ्चेन नास्य कलेवरं विवर्धयेत् ।

**शैली**—प्रस्तावे स्फुटार्थता, मधुरता, श्लक्ष्णता, नैसर्गिता च पदानां स्यात् । शब्दालङ्कृतिप्रियता चोद्वेगकरी रसिकानामिति तां नाद्रियेत । अनुप्रासाद्यपहृतधियां निबन्द्धॄणां न केवलं रसापकर्षोऽर्थापकर्षोऽपि । बह्वी चानौचिती प्रयोगेषु । अनायासकृतो विरलोऽनुप्रासादिस्तु न वार्यते । यथा कालिदासे—प्रजाः प्रजानाथ

---

१. शकेः सन्नन्ताच्छानचि रूपम् । शक्तेन भवितुमिच्छता ।

पितेव पासि मायूरी मदयति मार्जना मनांसि इत्यादिः । इदं च सविशेषमवदधीत सुमतिर्विनेयः—प्रस्तावेऽवान्तरवाक्यानि पृथगर्थानि स्युः, तेषां मिथोऽर्थसम्बन्धस्तु न क्वचिदपि हीयेत । वाक्यनिर्मितिरपि स्वाभाविकी विशदार्था च स्यात् । यो हि विशदमसंमोहं च विचिन्तयेत्सोऽभिव्यक्तार्थमुपनिबध्नीयान्नेतरः । अत्र कश्चिद्विपश्चिदपश्चिम आह—यदि प्रतिपाद्यं निखिलेन गृह्णीयास्ततो न विचारवैकल्यं यायाः, यस्माद्विचाराः सपदि पदरूपेण परिणमन्त इति ।

प्रातिस्विकता—प्रस्तावो नाम निबन्धॄणां प्रतिस्वं भावनिबन्धनं स्यान्न परदर्शनोपन्यासमात्रम् । स निबन्द्धुरात्मानमेव यथातथं प्रतिबिम्बयेदितीष्यते । इदं चोक्तं पुरस्तात्—कश्चिद्विषयमालम्ब्य स्वाभिप्रायस्य स्वविमर्शस्य च लेखेन निबन्धनं प्रस्ताव इति । एवं यदीयं स्वता न स्यात्तदा प्रबन्धरुच्यता न स्यान्नीरसतेव च प्रादुःष्यात् । तस्मात्स्वमभिप्रेतं परस्याभिमतमनभिमतं वा मुक्तसंशयमुपवर्णयेन्न तत्र संकुचेत् । न वा पराभिप्रेतपौनरुक्त्येन कृतितामात्मनः कलयेत् । यन्निर्ब्रूयात्तत्राहं विश्वसिमीति व्यक्तिं गमयेत् । यदुक्तं माघेन—

वह्वपि स्वेच्छया कामं प्रकीर्णमभिधीयते ।
अनुज्झितार्थसम्बन्धः प्रबन्धो दुरुदाहरः ॥ इति ।

यश्च भारविणा भीमभाषितं प्रशंसतो युधिष्ठिरस्य मुखे संक्रमितं वचः—

स्फुटता न पदैरपाकृता न च न स्वीकृतमर्थगौरवम् ।
रचिता पृतगर्थता गिरां न च सामर्थ्यमपोहितं क्वचित् ॥ इति ।

यच्चापीन्द्रोक्तमुपश्लोकयन्नर्जुन उवाच—

प्रसादरम्यमोजस्वि गरीयो लाघवान्वितम् ।
साकाङ्क्षमनुपस्कारं विष्वग्गति निराकुलम् ॥ इति ।

सर्वं तन्मनसि निधाय प्रस्तोतुमुपक्रमेत सुधीः । तथा हि क्रियमाणे सुश्लिष्टतरः सुन्दरतरश्च भवति निबन्धः ।

## प्रस्ताव-भेदाः ।

प्रस्तावास्तावत्पञ्चधा विभक्ताः—विचारात्मकाः, आख्यानात्मकाः, वर्णनात्मकाः, कल्पनात्मकाः, गुणदोषविवेचनात्मकाश्चेति । इदं चात्र नित्यं हृदि करणीयमिदं वर्गीकरणं तावदेवोपयोगं व्रजति यावत्प्रव्यक्तं प्रतिपद्यते तत्तद्विशेषाः

न्ताय मिथो भिन्ना इति। तत्तद्विशेषाणामङ्गानि कानिचिद् विशेषान्तरेष्वपि स्युर्नाम। तद्यथाऽऽख्यानपरे प्रस्तावेऽपि वहु वर्णनं स्यात्। ये विचारात्मका न भवन्ति प्रस्तावास्तेष्वपि भूयानल्पीयान्वा विचारस्तु भवत्येव, यस्मात्प्रस्तावो नाम स्वाभिप्रायस्य स्वरुच्यादेश्च लेखेन निवन्धनमेव भवति यथा निरूपितचरम्।

## विचारात्मकः प्रस्तावः।

यत्र न केवलं शाव्दं न वा प्रत्यक्षज्ञानमात्रमुपन्यस्यतेऽपि तु वस्तुचिन्तासमुत्थं मानसिकमेव भूयस्त्वेन निवध्यते स विचारात्मकः प्रस्तावः। अत्राचारसंहिताः सत्यम्, मैत्री, धैर्यम्, देशभक्तिरुद्योग इत्यादयोऽमूर्त्ता भावः प्रतिपाद्या भवन्ति। समाजसम्वन्धिनो राजनीतिनिवद्धा गृहगता धनिकता, दारिद्र्यम्, धनोपयोगः, सत्सङ्गतिर्विद्वन्मानः शासनपद्धतिरित्येवमादयो वा, तत्त्वचिन्तनपराः कर्माकर्मणोः स्वरूपम्, मनस एव वन्धमोक्षयोः कारणता, भोगेन कामानामनुपशम इत्यादयो वा ज्ञेयाः।

तत्तत्प्रकारकेषु विचारात्मकेषु प्रस्तावेषु तत्तद्गुणादेर्गौरवं तत्तत्सुचरितस्योपादेयता वाञ्छनीया। गुणादेरभावेन जायमानोऽपायश्च व्यञ्जनीयः। तस्य तस्योक्तार्थस्य समर्थनायापोहनाय वाऽऽख्यानमुपाख्यानं कथा वाऽऽख्यायिका वा यथापेक्षमुदाहार्या। यच्च समाजमधिकृत्योपन्यस्तं तत्र साम्प्रतिकी पुराणी वा समाजस्थितिर्भव्याऽभव्यावेति गुणवत्यगुणा वेति विमृश्यम्। तत्त्वचिन्तायां यद्विवक्षितं तस्य स्पष्टप्रतिपत्तये विस्तरेण निर्वक्तव्यम्। तर्कानुमाने प्रयोज्ये, निदर्शनैश्चोक्तार्थ उपोद्वलनीयः।

## आख्यानात्मकः प्रस्तावः।

आख्यानात्मकेषु प्रस्तावेषु किमपि वृत्तं वृत्तानि वा भूयसा शस्यन्ते। अत्र भूयसेति पदं साभिप्रायम्। न ह्याख्यानात्मके प्रस्तावे वृत्ताख्यानमात्रेण सकामता प्रस्तोतुः स्यात्। अत्र विवेकपुरःसरं प्रवृत्तेन प्रस्तोत्रा वृत्तमुपवर्णयता कथमिदं संवृत्तं किमिदं श्रेयसेऽभूदश्रेयसे वा, किमिदं सष्ठु संविहितमासीदपाष्ठु[2] वा, किमिदं परिहार्यमभूदुतापरिहार्यमित्याद्यविकलं विचार्यम्। पुंसां चरितादिवर्णने तद्गता गुणदोषा निपुणं परीक्ष्या अनाकुलं चोपन्यसितव्याः। सदसती अविविञ्चन्नतीतार्थमात्रमाचक्षाणो न कांश्चदत्र कृतितामियात्स्वस्य प्रस्तावकतामेव च जह्यात्। आख्यानात्मकैः प्रस्तावैरितिहासतथ्यान्यैतिह्यानि कथानकानि वा विषयीकरणीयानि

१. हानिः। २. असाधु।

यथा—पानीपतसमरः, अशोकराज्यम्, महापुरुषचरितानि यथा—महात्मनः श्रीगान्धिनो, भगवतः श्रीशङ्कराचार्यस्य, आत्मकथा यथा—जीर्णस्यातपत्रस्य, कथाश्च सालम्बनाः सत्या निरालम्बनाश्चासत्याः । इदञ्जातीयकेषु प्रस्तावेषु वृत्तक्रमो न हातव्यः । विशेषाणामल्पकानां विस्तरश्च नादर्तव्यः । इष्टानिष्टव्यतिकरा यत्प्रबोधयन्ति कथाश्च यद्यदुपदिशन्ति तत्तन्निर्देश्यम् ।

## वर्णनात्मकः प्रस्तावः ।

वर्णनात्मकाः प्रस्तावाः कंचित्प्रदेशं देशं पदार्थान्तरं वाऽऽकारादितो वर्णयन्ति । यथाऽरुणोदयः, सूर्यास्तमयः, वातूलः, वाराणसी, ग्रामोत्सवः पण्यवीथीत्यादयः ।

## कल्पनात्मकः प्रस्तावः ।

यत्राननुभूता अर्थाः केवलमुत्प्रेक्षाबलेन निबध्यन्ते स प्रस्तावः कल्पनात्मको भवति । यथा नौव्यसनम्, यद्यहं शिक्षामन्त्री स्याम्, जीर्णस्यातपत्रस्यात्मकथा । एवंविधेषु प्रस्तावेषु निबद्धाऽऽत्मानं तस्य तस्यार्थस्य द्रष्टारं कल्पयति तेन तेनार्थेन तादात्म्ये वा श्रयति ।

## विवेचनात्मकः प्रस्तावः ।

यत्र कवीनामन्येषां ग्रन्थकृतां वा कृतयो गुणदोषतः परिच्छिद्यन्ते स प्रस्तावो विवेचनात्मको भवति । अत्र कवीनां शैली निरूप्यते । किमसौ पृथक्पदप्रधाना भवत्युताहो समासबहुला । किमत्र व्यङ्ग्यार्थः प्रधानमुत वाच्यार्थः । किमिह शब्दाडम्बर उतार्थगौरवम् । किमत्रोदारः पदवाक्यन्यास आहोस्वित्क्लिष्टः । कोत्र रसोङ्गी, कश्च के वाऽङ्गानि । कीदृगत्र चरित्रचित्रमभूदित्यादयोर्थाः सम्यङ् निरूपणीया भवन्ति ।

## प्रस्तावप्रणयनसंभारः ।

यदा कश्चिच्छात्रः प्रस्तोतुं चिन्तयते तदा किं प्रस्तुयामिति नोपलभते । अत्र विषये मया किं लेख्यं कथं वोपक्रमितव्यमिति प्रायशो नायं जानीते । नात्र किमपि चित्रम् । अल्पश्रुतो हि च्छात्रो मितानुभवश्च । इदं च बहुना श्रवणेन निध्यानेन च शक्यं प्रतिविधातुम् ।

**ग्रन्थावलोकनम्**—भूयसा ग्रन्थावलोकनेन पुरुषः पूर्णतां यातीति विपश्चितः । अयमभिसन्धिः—यः खलु बहु विविधं चाधीते स स्वे मनसि नाना वृत्तानि नाना

विचारान्नाना तर्कान्नाना निदर्शनानि च यतस्ततः संगृह्णाति, अन्यद्वा वेदितव्यं समाहरति । यदीच्छसि चारु प्रस्तुयामिति तदा ग्रन्थावलोकनेऽभिरुचिमुद्भावय । विनोदार्थाः कथा एव पठिष्यसि चेन्न प्रस्तावनायाऽलं स्याः । तस्मादितिहासग्रन्थान् यात्राप्रवन्धांश्चरितवन्धान् विज्ञानसन्दर्भांश्चावहितं चिरं चाधीष्व । एतानद्धा विज्ञाय वन्धुरांश्च भावानुद्भाव्याऽऽचिनु बुद्धिम् । यद्येवमाचरिष्यसि तदा वैकल्यं तेऽपैष्यतिसाकल्यं चोपनेष्यति, येना निरुद्धं प्रसरिष्यसि प्रस्तावेष्वित्यवेहि ।

निध्यानम्—न च सर्वं वेद्यं पुस्तकस्यं पुस्तकैकलभ्यं वा भवति । अस्मानभितो वर्तमानाया जनतायाश्चेष्टाः सम्पश्यन्तस्तद्वचांसि च निशाम्यन्तोपि वयं वहु गृह्णीमः । तेन लोचने नित्यमुन्मिषिते कुरु श्रवणे च विवृते, येन दृश्यश्रव्ये अविकलं गृह्णीथाः । एवं स्वं ज्ञानराशिं सततं विवर्धय । यत्प्रत्यहं पश्यसि तत्समासतो वर्णयितुं शीलय । ये त्वया प्रायेण सङ्गता लोका ये च प्रायशो विलोकिताः वनोपवनादयः प्रदेशाः, यानि सौधानि, ये वा रथ्याव्यतिकराः, गिरयो द्रोणयश्च, मृगशकुनानां स्वभावादयोऽर्थास्ते वर्णनविषयतां नेयाः । परकृतैस्तत्तद्वस्तुवर्णनैर्मा स्म तोषं गमः । तांस्तानर्थान्स्वयमालोक्य वर्णय । यदा स्वयमुपद्रक्ष्यस्यर्थांस्तदा विज्ञास्यसि कियदहमीशे विभावनेन वस्तुस्वरूपमवगन्तुमिति, विस्मेष्यसे चात्मना ।

संभाषा—अतीतैर्वर्तमानैश्च मेधाविभिः कृता ग्रन्थाः । यदि वयं ततो ग्रन्थेभ्यो वहूपादातुमलं स्मस्तदा येऽस्मत्समकाला विज्ञास्तेषां यदि शृणुमस्तर्हि तथैवोपादेयमुपात्तं भवतीति का संशीतिः । एवं तर्हि संकथां सद्भिः सम्पादय । ये ये तत्रभवतां विदिता विषया अत्यन्तं परिशीलिता वाऽर्थास्तांस्तानधिकृत्य मामनुशिष्टेति तानधीच्छ । यत्र च तवाभिरुचिस्तत्र विषये सवयोभिः सतीर्थ्यैश्चिन्तां चर्चां वा प्रवर्तय । एवमपि वह्वविदितं विदितं भवति ।

## प्रस्तावप्रणयनप्रकारः ।

**विषयस्वरूपनिरूपणम्**—प्रस्तोतुं प्रक्रममाणेन सर्वप्रथमं विवरीतव्यस्य वर्णनीयस्य वा विषयस्य स्वरूपं निरूपणीयम्, मुक्तसंशयं ग्राह्यम्, येन विषयान्तरोपसंक्रमो मा स्म भूत । केचिद्विषयास्तावत्तया स्पष्टप्रतिपत्तयो भवन्ति यथा तत्र विप्रतिपत्तेः सन्देहस्य वाऽवकाश एव नास्ति । अपरे विमर्शापेक्षाश्चिन्त्यस्वरूपाः । तद्यथा रेलयात्राया लोके तद्व्यवहारे वा प्रभाव इति प्रस्तोतव्यो विषयः । इह रेलयात्रेति विषयो न, रेलसविधानकमपि विषयो न, न चेञ्जनोप-

ज्ञानं रेल्यानेतिहासो वा विषयः। एवं सत्यपि केचिच्छात्राः प्रकृतं शब्दन्यासं सहसा प्रपद्य प्रतिपाद्यं सम्यगपरिच्छिद्यात्रानुक्रान्तानि विषयान्तराण्यनुधावन्ति मुधा च समयाकुर्वन्ति[1]। रेलयानेन यात्रां परिशीलयन्तो लोकाः क्रमाल्लौकिकीराचारपद्धतीः परिवर्तयन्तीत्येव विषयः। यथा वा 'गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वय' इति विषये प्रस्तोतव्ये लिङ्गेन स्त्रीपुंस्त्वादि विवक्षितं न तु त्रिपुण्ड्रादि शिखासूत्रादि वेत्यनवगत्य प्रक्रमोऽस्थान एव स्यात्। अत्र विषयः स्पष्टतरं प्रतिपत्तव्यः। अन्यथा विषयान्तरानुधावनेन कालक्षेप एव स्यादनर्थकः।

**सामग्रीसंग्रहः**—यदा विषयो विस्पष्टमवबुद्धस्तदा तत्र किं निबन्धनीयमिति जायते चिन्ता। कदाचित्तत्सरलमिति सद्यः स्फुरति, कदाचिदविदितं कलया[2] वा विदितं भवतीति न तत्र सहसा शक्यते निबन्धुम्। समुचितायै विषयवर्णनायै विषयाभिव्यक्तिकराणि पुस्तकानि चर्चयितव्यानि। गुरुजनैश्च समं संमर्ष्टव्यं स्वयं वा विम्रष्टव्यं न जातु सहसोपन्यसितुं प्रवर्तितव्यम्। प्रतिभातेपि प्रथमोपन्यसितव्ये यावत्सर्वः क्रमवानुपन्यसनीयोर्थो बुद्धौ न संनिधत्ते न तावत्प्रक्रमितव्यम्।

यदा विषयं चिन्तयसि तदा केपि भावाः, कान्यपि वृत्तानि, कानिचित्तथ्यानि निदर्शनानि च ते बुद्धौ प्रतिभासन्ते। तानि यदि न गृह्येरंस्तदा यदाऽपेक्ष्येरंस्तदा नोपतिष्ठेरन् स्मृताविति महाननर्थः स्यात्। यथोत्पतन्तः [3]पतन्तः प्रगृह्य पञ्जरस्थाः क्रियन्ते तथैवेमानि भावादीनि प्रतिभातप्रध्वंसीनि पत्रमारोप्य वशे करणीयानि, नोचेत्काल उपयोक्ष्यमाणानि नोपतिष्ठेरन्। अत्र कर्मणि त्वया क्रम औचित्यं वा तावन्नादरणीयम्। कालान्तरेऽवसरस्ते भविष्यति प्रतिभातार्थानां साधुत्वविचारणायाः।

**निर्धारणम्**—यदा च मन्यसे संगृहीता मया पर्याप्ता अर्था नातोऽतिरिक्ताः संग्राह्याः सन्तीति तदा तेषां मध्ये के प्रकृतार्थान्वयिनः, केऽप्रकृताः, के च पुनरुक्तभूताः, के च तत्र समर्थनायापोहनाय वाऽपेक्षिततमा इति समीक्ष्य ते त उपादातव्या अपास्याश्चेतरे।

**क्रमः**—एवं विहिते विचारसरणिर्विचारणीया। निर्धारितानामर्थानामुपन्यासक्रमविशेषोऽन्तरमः कश्चिदास्थेयः। उपनतानामर्थानां विभज्य कमवि-

१. कालं क्षपयन्ति। 'समयाच्च यापनायामि'ति डाच्।
२. मात्रया। ३. पक्षिणः।

शेषेण स्थापनं गुरुप्रयोजनं भवति । यदि क्रमविशेषः सुविचिन्त्यादित एव नास्थीयेत तर्हि प्रस्तावोऽक्रमी विषयान्तरसंक्रमी गुरुलाघवव्यत्यासवान्पौनरुक्त्यदूषितश्च स्यात् ।

## मुख्यवक्तव्यांशनिर्देशस्तद्विकासश्च ।

एवं विषयं सुनिरूपप्य मनसि निधाय वक्तव्यं च प्रव्यक्तं प्रध्याय ये तत्र मुख्या विषयाङ्गभूतास्त्रिचतुराश्चतुष्पञ्चा वा अर्थास्तान्क्रमशो विन्यस्येत् । ततस्तत्सम्बद्धानवान्तरार्थान्प्रणयेत् । येन येन मुख्यार्थेन यो योवान्तरार्थोभिसम्बद्धस्तत्रैव तं निवेशयेन्न त्वौत्तराधर्येण । एवंलक्षणः संक्षिप्तः क्रमवदर्थविन्यासः प्रस्तावनिर्मितौ यथेष्टमुपकरिष्यति ते । परं नैष प्रस्तावो भवति । इदं तावत्सुश्लिष्टं कङ्कालमात्रम् । सम्प्रतीदं मांसोपचयेन प्रच्छादनीयमुज्जीवनीयं च । तथा कृतेऽयं प्रस्तावो भवति ।

## प्रस्तावाङ्गनिर्देशः ।

सर्वः प्रस्तावोऽवयवी पदार्थस्तस्यावयवनिर्देशः क्रमप्राप्तः साम्प्रतमुच्यते । प्रस्तावो नाम वाक्यसन्दर्भो भवति स्वरूपेण । तत्रेष्यते समानतात्पर्य्याणां वाक्यानां परिच्छेदाः स्युरिति । परिच्छेदाभावे प्रस्तावोऽच्यो भवति दुष्पठश्च । प्रतिपरिच्छेदमिदं चतुष्टयमवधातव्यम्—(१) एकार्थता । परिच्छेद ऐकार्थ्यमुपवर्णयेन्न नानार्थ्यम् । (२) वैचित्र्यम् । सर्वे परिच्छेदाः समानायामानेष्यन्ते, न च समानरचनात्मकाः । वैरस्यं हि तथा प्रसज्येत । (३) विचारपौर्वापर्यम् । यदेकेन परिच्छेदेन प्रतिपादितं तत्सम्बद्धं ततोर्थादापद्यमानं परिच्छेदान्तरेण प्रतिपादयेत् । (४) विषयाङ्गनिर्देशकं वाक्यम् । प्रायः परिच्छेदस्यादिममन्तिमं च वाक्यं सर्वप्रधाने भवतः । वहुत्र परिच्छेदेषु प्रथमं वाच्यं वर्ण्यं निर्दिशति, अन्त्यं च प्रतिपादितपूर्वं समस्य विन्यस्यति ।

प्रस्तावे त्रीणि मुख्यान्यङ्गानि भवन्ति—अवतरणिका, शरीरम्, उपसंहारश्च ।

**अवतरणिका**—अवतरणिका खलु लध्वीष्यते, नातिविस्तृता । अनातिविस्तृते प्रस्तावेऽवतरणिका सविस्तरा स्यादिति कथङ्कारमुपपद्येत । गृहस्य द्वारप्रकोष्ठो बृहत्तरः स्याद् गृहादिति कोऽसंमूढो रोचयेत । अवतरणिका विषयावतारणी स्याद् काममेकवाक्यात्मिका वा स्याद्वाक्यकदम्बात्मिका वा । यथेयं रुचिरार्था स्यात्तथा प्रयतेथाः । किं प्रतिपिपादयिषसि, को वाऽर्थः प्रतिपाद्यार्पकस्य वाक्यस्येति वाऽत्र देहि, तां विधां वा न्यस्य यां प्रस्तावेऽनुसर्तुमिच्छसि । विषयानुग्राहकं परकीयं वाक्यमाभाणकं वोद्धर, सामान्यार्थकेन वाक्येन वाऽऽरभस्वा तिसंक्षिप्तेन कथानकेन वा ।

**शरीरम्**—इदं हि प्रस्तावस्वरूपमेव । इदं हि नाम गेहं यस्यावतरणिका

मुखद्वारमुपसंहारश्च पक्षद्वारम् । प्रस्तावशरीरनिर्माणेऽनुपात आदरणीयः । सर्वे-स्यांशा यथार्हं स्थानं विकासं च लभेरन्निती्यते । 'संसर्गजा दोषगुणा भवन्ती त्यधिकृत्य निबध्नंस्त्वमाद्रियेथा दोषवर्णनं नातिविस्तृतं स्याद्गुणवर्णनं वाति-संक्षिप्तं स्याद्विपरीतं वेति । यस्त्वया मुख्यवक्तव्यांशनिर्देशः पत्रे न्यस्तः पाण्डु-लिपिरूपस्तमेव किमप्यनुज्झन्ननुसर ।

सर्वत्र प्रस्तावेऽनपेक्षितोर्थः परिहर्तव्यः । न च स एवार्थः पुनः पुनर्वक्तव्यः । नात्र सर्वो ज्ञातार्थः समुपन्यसनीयः । न वा ये वा यावन्तो वा शब्दास्ते विदि-तास्तेषामस्थाने संनिवेशेन प्रकर्ष एषणीयः, परीक्षकहृदये वा स्वां व्युत्पत्तिमङ्क-यितुमात्माऽऽयासनीयः । एवं हि क्रियमाणं न तवोपकरिष्यति, परीक्षकचित्तं च त्वयि विकरिष्यति, येनाल्पाङ्कलब्धिस्ते व्यवस्थिते प्रतीहि । तस्माद्यत्रैकेन पदेन शक्योभिधित्सितोर्थो गमयितुं तत्र पदद्वयं मा प्रयुंक्थाः । सर्वविधेषु प्रस्तावेषु संसारसारताप्रतिपादकैर्वचोभिर्नवतारणीयो विषयः, क्वचित्त्वेवंक्रियमाणमन-ल्पायोद्वेगाय भवति विपश्चितां यथा कर्ममहिम्नः प्रतिपादके निबन्धे ।

पदानां प्रयोगे वाक्यानां वा गुम्फने सविशेषमादृतः स्याः । येन येन पदेन वाक्येन वा ते मनोगतोभिप्रायः स्फारं स्फुरति तत्तत्प्रयुङ्क्ष्व तादृग्वा ग्रथान । यथा ते वाक्यानि विशदार्थानि स्युस्तथा यतस्व ।

इदं चाववेहि विषयानुरूपा ते रीतिः स्यादिति । गभीरार्थे विषये गौरवा-न्विता ते भाषणभङ्गिः स्यात्, प्रहासप्रधाने च लाघवान्विता विडम्बनाबहुला, न तु विपर्ययेण ।

**उपसंहारः**—यथाऽवतरणिका शुश्रूषां जिज्ञासां वा जनयेत्कुतुकं वोत्पादयेत्, तथैवोपसंहारस्तच्छमयेदिति युज्यते । यथा रुचिकरी प्रभावुका चावतरणिकाऽ-पेक्ष्यते तथोपसंहारोपि परितोषदः स्यादितीष्यते । अत्रोपसंहार उक्तपूर्वाणां वाचोयुक्तीनां संक्षेपो वा, सिद्धान्तोपन्यासो वा, शोभनतरः परकीयवाक्योद्धारो वा; स्वमेव वा प्रत्यायकं वचः स्यात् ।

इदं च विशिष्यानुशिष्योसि—सरला सरसोर्जिता च ते भारती स्यात् । परं तादृश्या गिरा भावनिबन्धनं न हि कस्यापि प्रकृत्या सिद्धम् । इदं हि शिक्षणीयं शीलनीयं च भवति । एषा हि कला । कला च नान्तरेणाभिविनयं सुग्रहा भवति । यथा च पोपाभिध आङ्गलः कविराह-कोमलकान्तपदावलिरनिरुद्धा वाग्धोरणी वा

न कस्यचिद्दैवात्सिध्यति, कलेति परिशीलनीया भवति। नृत्यं शिक्षितवन्त एव सलीलतममनायस्ततमं वा क्रामन्तीति। परकीयां वर्णनरीतिमुपन्यासप्रकारं वा मानुकार्षीः, यस्मात्ते लेखः स्वस्यात्मनो, निखिलेन प्रतिच्छन्दकः स्यादित्येव युक्तरूपम्।

## भाषासौष्ठवम्।

इदं चात्र प्राथमकल्पिकैर्मनसि करणीयमभ्युदेष्यद्भिः। निबन्धा हि स्वभावसङ्क्रमाय वाचकसत्तां कल्पयति। वाचको हि तदभिमुखं स्थित इति स परितोष्यः। सोभिसन्धिं स्वं विशदमनन्तरायं च ग्राह्यः। तेन यो व्यतिकीर्णार्थं लिखेन्नासौ वाचकं तमर्थं वेदयेद् व्यामोहयेत्तु केवलमिति वैशद्याय तेन यतनीयम्। अयमत्र वैशद्योपलम्भोपायः प्रशस्यति—यल्लिलेखिषसि तत्तावद्वाचा ब्रूहि, ततो लिख, ततश्च तदुच्चैश्चर्चय। एवं चर्च्यमानं प्रतीतिं ते जनयिष्यति साध्विदमसाधु वेति। शब्दविन्यासो मधुरः श्रवणसुखः संजात इत्यर्थप्रत्यायनमपि साधु समजनीति जायते प्रत्ययः। संस्कारहीनं वाक्यं पठ्यमानमपभाषितवत्स्वनति। संयुक्ताक्षरबहुलं कर्कशाक्षरप्रचुरं च दुष्पठं भवति। विचारपौर्वापर्यान्यथाभावोऽस्थाने पदसंनिवेशो वाप्युच्चैर्वाच्यमाने निबन्धे झटिति व्यक्तिमेति। अन्यद्वाप्यनौचित्यं सद्य उत्कटतां यातीति बहुगुणं वाचनं लेखस्य।

प्रायः सर्वो लोकोन्यत्रोद्युक्तोपि रसिकोपि लेखात्पराजयते, लेखं परिजिहीर्षति, कामं प्रभाषते, चित्राः कथाः कथयति, लेखेन तु स्वमर्थं निर्वक्तुं न रोचयते। अत एवाभणन्ति वक्तारः 'शतं वद, मा लिख मा लिखे'ति।

वैदर्भ्यादिरीतिर्नाम निबन्धुः शीलमिव भवति। भाषा तु यथाभ्यासं परिवर्तते। इयं हि विन्यस्ताक्षरा यथा रौष्ठवमेति न तथा केवलमुदीर्यमाणा। प्रवाचोपि लेखने संकुचन्ति। कथञ्चित्प्रवृत्ताश्चापशब्दप्रायं नीरसं विरसं पुनरुक्तवदनन्वितं च प्रणयन्ति। लेखने सततमभियुक्तो जनश्च्युतसंस्कृतिकानि पदानि परिहरति, संस्कारवन्त्यपि पदानि परीक्ष्योपन्यस्यति। इमानि साधूनि, इमानि साधुतराणि, इमानि च साधुतमानीति सम्प्रधार्य कृतान्यपि निवर्तयति यावत्परिवृत्त्यसहानि तानि सम्पद्यन्ते। अयमेव शब्दपरिपाक इति शब्दविदो विदुः। तथा चाहुः—

> यत्पदानि त्यजन्त्येव परिवृत्तिसहिष्णुताम्।
> तं शब्दन्यायनिष्णाताः शब्दपाकं प्रचक्षते॥

सत्स्वपि बहुष्वभिलषणीयेषु गुणेषु प्रसादो मधुरिमा च प्रायेण सर्वत्रैषणीयौ। प्रसादो नामाऽनन्तरायाऽर्थप्रतीतिरसन्दिग्धा च। यत्र प्रेक्षावतामवहितानां पाठकानां संस्कृते स्वान्ते विशुद्धे दर्पणतल इव प्रतिफलन्ति निबन्द्धुर्विवक्षितानि तत्र प्रसन्ना गिर इति व्यपदेशो विमर्शकानाम्। अयं च प्रसादः प्रतीतपदप्रयोगेण वृद्धव्यवहारानुगमेन कोषनतार्थानुरोधेन च शक्यो रक्षितुम्। एकत्र शास्त्रे प्रतीतानां तदेकविषयाणामपरत्र प्रयोगेण, समुत्सन्नप्रयोगाणां वा व्यवहारेण च्छन्दोमात्रगोचराणां वा लौकिके विषये परिग्रहेणोपहन्यते प्रसाद इत्यवसेयम्।

मधुरिमा नाम सुखश्रवत्वं सन्दर्भस्य वाच्यमानस्य। अयं च गुणः कोमलकान्तपदप्रयोगाज्जायते। सन्ति नाम केचिद्घोषवन्तो नादानुप्रदाना गकारघकारादयो वर्णाः गुंजनरवमिव कुर्वन्तो ङकारादयोनुनासिकाश्च। सन्ति च सानुनासिका निरनुनासिकाश्च यवलाः। ये चेषत्स्पृष्टप्रयत्नत्वात्तरला इति सहेलमुच्चार्य्यन्ते। एतेषां यत्र बहुलः प्रयोगस्तत्र माधुर्यमुद्धमति बन्ध इति विदग्धसंप्रत्ययः। वाक्ये पदक्रमजन्याऽपि भवति माधुरीति सम्प्रतिपत्तिः। येन नाम क्रमेणेयमुद्भाव्यते स न शक्यत इदन्तया निर्देष्टुम्। निबन्धने प्रवृत्तः सुमेधाः शैक्षः[1] स्वयमेवाभ्यूहति कालेन माधुर्यसमर्पकं कमनीयं कमपि तं क्रमम्। परिशीलनमेवात्र हेतुः। नात्राभ्युपायान्तरमस्ति। इदं चेह प्रतिपत्तव्यं लोकभाषासु यः पदक्रमः प्रायिको नासौ माधुर्याय कल्पत इति स तथा परिवर्त्यो यथा वाच्यमानः पदबन्धो मधुरमापतेन्मनसः। इदं च परिशीलनायत्तमिति पुरस्तादुक्तमेव न विस्तरमपेक्षते।

परिलघूनि वाक्यानि विशदार्थानि भवन्ति सुपठानि च। तत्र तिङन्तपदानि वाक्यमर्मभूतानीति तानि सुविचिन्त्य देयानि, रुच्यानि मधुरश्रुतीनि चोपादेयानि। तत्रापि सति सम्भवे सोपसर्गकाणि समादरणीयानि। सोपसर्गिका हि क्रिया रुचिरतरा भवन्ति नाम। रुचिवैचित्र्येप्यभीष्टतिङ्वृत्तयः सर्वेपि सन्तः इति यायावरीयः।

वाक्ये निपातानां यथास्थानं प्रयोगेणापि काप्यभिख्या समुल्लसति। 'जघान कंसं किल वासुदेव' इत्यत्र किलशब्देन यथा सम्पद्यते वाक्यं न तथेति श्रूयत इत्यादिना वाक्यखण्डेन। 'मृतो नाम भूत्वे' त्यत्र नामशब्देन यदाऽऽभिरूपकमापाद्यते वाक्यस्य न तन्मृत इति व्यपदिश्येत्येवमुपन्यासेन। लाघवमपि निपातप्रयोगकृतं बह्वादरणीयं भवति। सति निपातप्रयोगे वाक्यमेकं भवत्यसति चानेकमिति लाघवं

१. प्राथमकल्पिकः। अचिरप्रवृत्तस्छात्रः।

परिस्फुटमेव । अल्पाः शब्दखण्डा अमी उच्चावचेष्वर्थेषु निपतन्तीति बहूपकुर्वन्ति सन्दर्भस्य । क्वचिदनर्थका अपि वाक्यभूषायां शिष्टैः समाद्रियन्ते तद्यथा—'क इदानीमुष्णोदकेन नवमालिकां सिञ्चती'ति ।

उपसर्गाणां प्रयोगे सविशेषमवधातव्यं निबन्धने प्रबुभूषुणा । उपसर्गो विशेषकृदित्युक्तम् । न चैकेनोपसर्गेण सर्वत्र सम एव विशेष उपजन्यते । यदि प्रशब्दो ब्रवीतिना सह चरितो धात्वर्थप्रकर्षमाह तर्हि नायं नियमो वर्षतिनापि सहचरितः स तमेवार्थमभिदधीत । प्रोपसृष्टो हि वर्षतिर्वर्षणारम्भे वर्तते, तत्र प्रशब्द आदिकर्मणि । एवं प्रपूर्वः स्मरतिर्न प्रकृष्टेऽभ्यधिके वा स्मरणे वर्ततेऽपि तु स्मरणाभावे विस्मरणे प्रशब्दोऽत्र विरोधे वर्तते । तथा च केवलस्तिष्ठतिर्गतिनिवृत्तौ वर्तते, प्रपूर्वस्तु प्रस्थाने गमनारम्भे प्रयुज्यते । तत्राप्युपसर्गो धात्वर्थं विपर्यासयति । अन्यथाप्येषोर्थविपर्यासो लक्ष्यते—भिदिर्विदारणे पठितः, सम्भिदिस्तु नैयत्येन संयोजनं ब्रूते यथा सम्भेदो गङ्गायमुनयोः । दंश दशने इत्ययमपि धातुः समुपसृष्टः सम्भिदिवत्संयोजने वर्तते यथा सन्दंशः, सन्दष्टा जिह्वेत्यादिः । अति हि वैचित्र्यं क्रियते धात्वर्थेषूपसर्गैः । प्रयोगशब्दे प्रशब्दो धात्वर्थगतं विशेषमाह व्यवहारं चार्थम् । सम्प्रयोग इत्यत्र सम्शब्दो व्यवहारार्थमत्यन्तं तिरस्करोति सम्पर्कं चार्थमभिदधाति धातुसहकारेण । वहतिर्धारणे प्रापणे वा वर्तते । परमाङ्पूर्वो वहतिर्जननेर्थे प्रयुज्यते[1] ।

प्रायेण पृथक्पदत्वमेव बन्धस्याभिरोचनीयम् । समासवृत्तिस्त्वाश्चर्यमिवाश्रयणीया । सन्ति नामार्था ये समासैकगोचरास्ते समासेन निकाममभिधीयन्ताम् । यथा शृङ्गाटकमभिधातुं चतुष्पथशब्द एव शक्त इति स एव प्रयोगमवतरति, न तु चतुर्णां पथां समाहारः चत्वारः पन्थानः समाहृता इति वा । परं बहुत्र समासार्थो दुरुन्नेयो भवति । लोके स्वरप्रचारविरहात्तत्कृतार्थावसायस्याभावाद्बहुव्रीहितत्पुरुषयोर्विवेकदौर्लभ्याज्जायत एव सन्देहः सुमेधसामपि । विशयवत्यो हि वृत्तयो भवन्तीत्युक्तम् । तेनासन्देहमर्थाभिव्यक्तये व्यासेनार्थं ब्रूयान्न समासेनेति प्रतिपाद्यते विनेयः । अतश्च स समासं परिहरेदित्यनुशिष्यते । न ह्यसौ क्व समासेनार्थोऽभिधेयः क्व नेति साधीयो वेद । यत्र विपश्चितो ग्रन्थकृतोपि बहुधा विभ्रान्तास्तत्र सुकुमारमतयः कुमाराः प्रमाद्येयुरिति किं चित्रम् । "सर्वं परिक्षेप्यतपश्च मत्वा" ( बुद्धचरिते ७ । ) "तथापि तृष्णा रघुनन्दनस्य विनाशकाले विपरीतबुद्धिः ।" अत्रोभयत्राऽस्थाने



१ विस्तरस्त्वस्मत्कृतायामुपसर्गार्थचन्द्रिकायां द्रष्टव्यः ।

समासः। पूर्वत्र तपः परिक्षेप्यं मत्वेति व्यस्तं वचः शोभनं स्यात्। परिक्षेप्यमिति विधेयम्। विधेयेन च समासो नेष्टः। उत्तरत्रापि स एव दोषः। विनाशकाले बुद्धिर्विपरीता। भवतीति विवक्षितम्। न तु वैपरीत्यविशिष्टबुद्धिः कश्चित्पूर्वं प्रकृत इहास्ति। अन्यदपि बहु शक्यमुदाहर्तुम्। ग्रन्थविस्तरभिया तूदास्यते।

इदं चात्र समासवृत्तिमधिकृत्य विशिष्टमवधारणीयम्। यद्यपि मत्वर्थे बहुव्रीहिरित्यनुशासनं तथापि यो यावांश्चार्थो मत्वर्थीयैस्तद्धितैराख्यायते नासौ तावान्वा बहुव्रीहिणेति वेदनीयम्। आतपवन्ति शिखराणि हिमवत इत्युक्तेर्योऽर्थः प्रतीयते नासौ सातपानि शिखराणीत्युक्तेः। "भूमनिन्दाप्रशंसासु नित्ययोग" इति वचनात्पूर्वत्रातपनित्ययोगोपीङ्गितो भवति। अपरत्र कादाचित्कताऽऽतपस्य स्यान्नित्यता वेति नयतं नास्ति। एवं सधनो वणिक् इत्युक्ते बहुधनो वाऽभिप्रेतः स्यादल्पधनो वेति व्यवसितिर्न धनवानित्युक्ते तु बहुधन एव गम्यते नैयत्येन। क्वचिद्रूढिवशान्मत्वर्थीयान्तस्य बहुव्रीहेश्चार्थान्तरं भवति। नाथवानिति परतन्त्रो भवति,सनाथ इति सुशोभितः।

किं च यत्र केवलेन समासेन शक्यं निर्वोढुं तत्र तद्धितेन नार्थ इत्यपि बोद्धव्यम्। दुर्मदः, दीर्घसूत्रः, सर्वशक्तिः, सदाचार इत्यादिषु बहुव्रीहिणा निरूढेः कर्मधारयान्मत्वर्थीयेनार्थाभिधानेन न कार्यम्[1]। तेन दुर्मदी दीर्घसूत्री, सर्वशक्तिमान्, सदाचारीत्यादि परिहार्यम्। अत एवोक्तं दोषज्ञैः—

'न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकर' इति।

अन्यच्च। यत्र तद्धितवृत्त्या शक्यो विवक्षितोऽर्थोऽर्पयितुं तत्र समासवृत्त्या नार्थः यत्र चासौ समासवृत्त्या सुवचस्तत्र तद्धितेन नार्थः। एकत्र वृत्तिद्वयाङ्गीकारे गौरवात्। 'माघवतचापधरस्य, ऐन्दवमयूखचुम्बितमणिहारविभ्रम' इत्यत्र मघवच्चापधरस्य, इन्दुमयूखचुम्बितमणिहारविभ्रम इत्येव हृदयङ्गमं स्यात्। प्रास्थानिकानि मङ्गलानीति वोच्येत, प्रस्थानमङ्गलानीति वा, न तु प्रास्थानिकमङ्गलानीति तद्धितपूर्वेण समासेन। भारतवर्षेतिहासे इत्यस्य स्थाने भरतवर्षेतिहासे भारतस्य वर्षस्येतिहास इति वोच्येत, तथा ह्युपोढरसं भवतीति सहृदयाः।

इदं चात्र हृदि करणीयं न शिष्टा व्यधिकरणं बहुव्रीहिं सहन्तेऽन्यत्र जन्माद्युत्तरपदात्। तेन 'कलापिनः प्रनृत्यन्ति काले जीमूतमालिनि' इत्यत्र जीमूतमाल इति न शक्यं वक्तुम्।

---

१. प्रयोजनम्।

क्वचित्तु समासेनैवार्थोऽभिधीयमानो व्यवहारमनुपतति। अतिक्रान्त आचारमित्यात्याचार इत्युच्यते। आधुनिकास्तु केचिदत्याचारशब्दादिनिं कृत्वाऽत्याचारीति व्यवहरन्ति व्यवहारं चातियन्ति।

इदं चाप्यनिष्टमपहस्तयितव्यम्। स्वभाव एष च्छात्राणां यत्ते यत्र तत्र स्वशब्देन षष्ठीसमासं कर्मधारयं वा कुर्वन्ति, स्वशब्दविरहे कश्चिदर्थविरहो भवतीति प्रतियन्ति। सोऽमीषां भ्रमः। मातरं नमति, पितरं स्मरति, गुरुं नमस्यति, गेहं याति, अम्ब दयार्द्रदृष्ट्या परिपाहि माम्, भ्राता भ्रातरि स्निह्यतीत्यादिषु स्वशब्देन समस्तेनाऽसमस्तेन वा नार्थः। मात्रादयो हि सम्बन्धिशब्दाः। तेन या यस्य माता स तां नमति, यो यस्य पिता स तं स्मरतीत्यादिरर्थः स्वशब्दमन्तरेणापि स्फुटं गम्यते। अन्यत्रापि स्वशब्दमन्तराऽर्थप्रतिपत्तेरभीष्टायाः सम्भवात्स्वशब्दः शक्योऽप्रयोक्तुम्।

क्वचित्तु स्वशब्दमन्तरेण न शक्यं निर्वोढुम्। स्वजनः, स्वभाव इत्यादिषु स्वशब्दोऽर्थवान्, अर्थोपजननात्। स्वजनेन हि बन्धुरभिधीयते, स्वभावेन च स्वरूपम्। 'स्वधर्मे निधनं श्रेयः परधर्मो भयावहः।' अत्र चातुर्वर्ण्यं चातुराश्रम्यं वाऽधिकृत्य प्रतिनियतो धर्मः प्रतिवर्णं प्रत्याश्रमं च भिद्यत इति स्वशब्दोऽर्थवान्, परधर्म इति समभिव्याहाराच्च। स्वपक्षो रक्षणीयः। पक्षः स्वकीयो भवति परकीयोऽपि। स्वशब्दः प्रयुज्यमानः परकीयं व्यावर्तयतीति सार्थकः सः। 'स्वक्षेत्रे संस्कृतायां तु सुतमुत्पादयेद् द्विज' इत्यत्रापि क्षेत्रस्य स्वकीयपरकीयत्वे सिद्धे परक्षेत्रव्यावृत्त्यर्थं स्वशब्दोऽपेक्ष्यते। क्वचिदर्थोद्भूत्यर्थं स्वशब्दो व्यस्तं प्रयुज्यते—'स तस्य स्वो भावः प्रकृतिनियतत्वादकृतक' इति। एवं [1]निजशब्दविशेषयेऽपि बोद्धव्यम्। 'तत्किं निजे परिजने कदनं करोषि' इति।

इदं चापरं प्रयत्नतः परिहार्यम्। प्रायेण च्छात्राः साहित्यजुषः केचिच्छास्त्रिणोऽपि सुगृहीतोऽस्माभिरभिधानकोषः, स्वच्छन्दा वयं तासु तासु पर्यायोक्तिषु, पर्याप्ता वयं प्रयोगविकल्पैर्वैचित्र्यं किमपि जनयितुमिति प्रचिकाशयिषन्तो वाक्येष्वसकृत्प्रयुज्यमानानि न सहन्तेऽभिधानान्येकार्थकानि, विकल्पयन्ति चोत्तरत्र तानीति ते न साधुसमाचारा भवन्ति। एवं क्रियमाणे शास्त्रे यः प्रक्रमभङ्गदोषो निरूपितः सप्रपञ्चं चोदाहृतः स प्रसजतीति प्रेक्षावतामनुपदं प्रत्यक्षं भविष्यति। 'उदेति

---

१. निजशब्दो मुख्यया वृत्त्या सहजवचनः। तथाच बुद्धस्वामिकृतः श्लोकसंग्रहे प्रयोगः।

सविता ताम्रस्ताम्र एवास्तमेति चे'त्यत्र यद्येकत्र वाक्यखण्डे रक्त इत्युच्येत, परत्र च ताम्र इति तदा स्यादेव प्रक्रमभङ्ग उद्वेगाय विदुषाम् । यथा वा 'सुगन्धिना समीरेणारोग्यं निरोगतया च सुखं समुत्पद्यते । होमवह्निर्गन्धकसमिद्धो ज्वलनो वा दुर्गन्धं पवमानं बहिष्करोति सुगन्धं नभस्वन्तं चान्तः प्रवेशयति' इत्यस्मिन्सन्दर्भे भूयान्प्रक्रमभङ्गः । प्रक्रमभङ्गपरिहारेणैष सन्दर्भ एवंविन्यासो भवति—'सुगन्धिना समीरेणारोग्यम्, आरोग्येण च सुखं समुत्पद्यते । होमाग्निर्गन्धकाग्निर्वा दुर्गन्धि समीरं बहिष्करोति सुगन्धि चान्तः प्रवेशयती' ति ।

अयमपि दशकुमारचरितसन्दर्भ आलोच्यताम्—'न च शक्तः साध्यं साधनं वा विभज्य वर्तितुम् । अयथावृत्तश्च कर्मसु प्रतिहन्यमानः स्वैः परैश्च परिभूयते । न चावज्ञातस्याज्ञा प्रभवति प्रजानां योगक्षेमाराधनाय । अतिक्रान्तशासनाश्च प्रजा यत्किञ्चनवादिन्यो यथाकथंचिद्वर्तिन्यः सर्वाः स्थितीः संकिरेयुः । निर्मर्यादश्च लोको लोकादितोऽमुतश्च स्वामिनमात्मानं च भ्रंशयते ।' अस्त्यत्र प्रक्रमभङ्ग इति बद्धाञ्जलि विद्वत्सु निवेदयामः । यथा वर्तितुमित्यत ऊर्ध्वमयथावृत्त इत्युक्तं तेन च प्रक्रमसाम्यं भवति, अयथाचरित इत्युक्ते तु स्यादेव प्रक्रमभङ्ग इति विज्ञाय कविना न तथा प्रायोजि, तथोत्तरत्र कुतो नाकारीति बुद्धि नोपारोहति । प्रक्रमभङ्गं परिहृत्य परिशिष्टो ग्रन्थ एवं परिवर्त्यः—'न च परिभूतस्याज्ञा...... संकिरेयुः । संकीर्णस्थितयश्च प्रजा लोकादितः......भ्रंशयन्ते' इति ।

## औपचारिकाः प्रयोगाः ।

इदं हि प्रतिपन्नप्रायं विमर्शकैः शाब्दिकैरन्यैश्च विदग्धैर्मुख्येर्थे प्रयोगा न तथा स्वदन्ते यथा गौणेर्थे । एकस्यार्थस्यान्यत्र गुणक्रियाध्यासात्सादृश्यसमाश्रयेण प्रवर्तन्ते तत्र तत्रोपचाराः कवीनाम् । 'अग्निर्माणवक' इत्युक्तिर्यथार्थवती रुचिकरी च न तथा 'तेजस्वी माणवक' इति । निमीलन्ति पङ्कजानि, उन्मीलन्ति कुमुदानि । अत्र चक्षुर्धर्मौ निमेषोन्मेषौ पङ्कजेषु कुमुदेषु चाध्यस्य संकोचविकासौ तथोच्येते । तथा चोच्यमानो रम्यतरौ प्रतीयेते । क्वचित्तु मुख्येर्थे ग्राम्यत्वं गौणे च मनोज्ञत्वमुद्भवतीत्यनुभूतिः सचेतसाम् । तथा चोदाहरत्याचार्यदण्डी—

निष्ठ्यूतोद्गीर्णवान्तादि गौणवृत्तिव्यपाश्रयम् ।
अतिसुन्दरमन्यत्र ग्राम्यकक्षां विगाहते ।। इति ।

मुख्येऽर्थे निष्ठचूतादिश्रुतय उच्चारिता उद्वेगाय भवन्ति श्रोतॄणाम् । यावता निष्ठेवनादिकाः क्रिया जुगुप्सावहा भवन्ति, इमाश्च ताः स्मारयन्ति पुरः सन्निधापयन्तीवेति भवन्त्युद्वेजिकाः । अनिरुद्धप्रसरतादिं सामान्यधर्ममादायान्यत्राविष्करणादावर्थे प्रयुक्तास्तु सौभाग्यमधिकं वहन्ति । यथा—'निष्ठचूतश्चरणोपभोगसुलभो लाक्षारसः केनचित्' । 'वागस्या अमृतमुद्गिरति नयने च स्नेहं वमतः । सत्यमियं वामा । चन्द्रः सुधोद्गारीति किमत्र चित्रमि'त्यादि ।

औपचारिकाः प्रयोगाः सुभगंकरणा निबन्धस्य रस्यतरतामस्यापादयन्तीति च्छात्रप्रबोधाय कानपीहानुक्रामामो विवृत्या च सनाथयामः—

'पुनरुक्तवस्तुविरसः सर्गक्रमो वेधस' इति । पुनरुक्तं हि मुख्यया वृत्त्याऽसकृदुक्तं व्यर्थं वचो भवति । लक्षणया पुनः पूर्वेण समानमनपेक्षितमर्थमात्रमाह । 'व्यापारैः पुनरुक्तभूतविषयै' इति च भर्तृहरौ । 'रे रे पुनरुक्ताकार दुराचार निशाचरे'ति बालरामायणे । 'मत्सरिणस्तु परगुणेषु वाचंयमा' इति । वाचंयमो मुनिर्भवति । मुनिश्च मितवाक्तूष्णीं भवति मननपरत्वात् तेन वाचंयम इति तूष्णीमर्थ उपचर्यते । 'कविसार्थः समग्रोपि तमेनमनुगच्छति' इति । 'अप्रतिभस्य पदार्थसार्थः परोक्ष एवे'ति । सार्थशब्दो मुख्यया वृत्त्या वणिगादीनां सरतां समूहमाह । अत्र तु लक्षणया समूहमात्रम् । 'कुरु मामम्ब कृतार्थसार्थवाहम्' इति । सार्थवाहो हि सहयातां वणिजां नेतारमाह मुख्यया वृत्त्या, तत्साधर्म्यादन्योपि कश्चिदयातामपि सत्तमस्तथोच्यते । 'मन्महे किमपि तुन्दिलं महः' । तुन्दिलमिति तुन्दिभमाह मुख्यया वृत्त्या । तुन्दं जठरं प्रवृद्धमस्यास्तीति व्युत्पत्तेः । अतिशायने मत्वर्थीयः । अन्यदपि यत्किञ्चिदतिशयितप्रमाण प्रवृद्धं वा भवति तदपि तुन्दिलं भवति गौण्या वृत्त्या । 'न स्वप्नानुभवस्य कश्चिदपरः सब्रह्मचारी ममे'ति । सब्रह्मचारी नाम समानशाखाध्यायी भवति, एतादृशयोर्द्वयोः साहचर्यमनुक्तमपि गम्यते, तेनान्योपि समानकर्मा सहचरस्तथोच्यते लक्षणया । 'अयं मे सखा दुःखसब्रह्मचारीति कया गिरा तं स्तवीमि' । अत्रापि मद्दुःखे भागीति गम्यते । 'स्वरेण तस्याममृतस्रुतेव प्रजल्पितायामभिजातवाचि' अत्राभिजातशब्दो लक्षणया सुकुमारार्थपर्यवसायी । यो ह्यभिजातः कुले जातस्तस्य सौकुमार्यं सांसिद्धिको गुणः । 'नेत्रविप्रोषिताञ्जनं मुखम्' । 'प्रीतिनिर्वासितत्रपाः' । अत्र विप्रवासननिर्वासने चेतनधर्मावञ्जने त्रपायां चाध्यारोप्येते । असंनिहितेऽर्थे च विप्रोषितनिर्वासितशब्दावुपचर्येते । 'विस्मृतनिमेषेण चक्षुषा' । अत्र विस्मृतपदेन

विगतार्थतोच्यते। यद्धि विस्मृतं भवति तन्मनसोऽपेतं भवति। तस्मादृश्यादन्यदपि यदपेतं भवति तदुच्यते विस्मृतमिति। अपि चाऽन्तःकरणधर्मं विस्मरणं चक्षुष्यध्यस्य तथोच्यते, तथा ह्युच्यमानमावर्जकं भवति। 'तं व्यतिकरं निशम्य हृष्यन्ति नो लोमानि'। अत्र मनोधर्मो हर्षो लोमस्वध्यस्यते। अथवा यत उदञ्चन्ति लोमानि ततो हृष्यन्तीवेति जायतेनुमा। 'त्वद्दृष्टेरतिथीभवन्तु पञ्चालाः'। अतिथिरभ्यागतो भवति। अतिथय इवातिथय इत्यौपमिकः प्रयोगः। अतिथिरुपगन्ता भवति। इमे पञ्चालास्त्वद्दृष्टेः पात्रीभवन्त्वित्यर्थः। 'प्रत्यूषेषु स्फुटितकमलामोदमैत्रीकषायः'। अत्र मैत्रीशब्दो लक्षणया संसर्गमाह। प्रसिद्धं हि मित्रयोः साहचर्यम्। 'प्रसन्नो ब्राह्मणशेषः'। प्रसन्नः प्रसादगुणवान् विशद इत्यर्थः। यथा प्रसन्नं मनोऽकलुषं भवति तथा स्पष्टाक्षरोऽर्थः सन्दर्भः प्रसन्नो भवति, विमला आपश्च प्रसन्ना भवन्ति। 'भवति हरिणलक्ष्मा येन तेजोदरिद्रः'। अत्र दरिद्र इति क्षीणो हीनो वाऽभिधीयते। एवं मध्यो दरिद्रातीत्यत्र कृशमुदरमित्यर्थः 'मुष्टिग्राह्यं तमः'। अत्र मुष्टिग्राह्यमिति गौण्या वृत्त्या सान्द्रार्थमाचष्टे। यद्धि शक्यते मुष्टिना ग्रहीतुं तत्संश्लिष्टावयवं घनं भवति। 'पाणिप्रणयी कोदण्डदण्डः'। अत्र प्रणयिशब्देन लक्षणया सम्बद्ध उच्यते। यो हि अत्र प्रणयी प्रीतिमान्भवति स ते संसृज्यते, ततः प्रणयीति संसर्गवत्युपचर्यते। 'आसन्नसखीमुखेन'। अत्रासन्नशब्दः आप्तं विस्रम्भाजं वाऽऽह 'यो ह्यासन्नो भवति सोऽभ्यन्तरीक्रियते विस्रम्भालापेष्वि'ति लोकप्रसिद्धेः। नेदिष्ठो धर्मार्थसंहितासु'। अत्र नेदिष्ठो निपुण इत्यत्रार्थे लाक्षणिकः। यथाभ्यन्तरो निपुणार्थस्तथा नेदिष्ठ इत्यत्रार्थान्तरसंक्रमक्रमो न दुरूहः। 'उन्निद्राणि कुमुदानि, प्रबुद्धानि पङ्कजानि'। अत्रोभयत्र चक्षुष्क्रियाध्यासाद्भाक्तः प्रयोगः कामपि प्रीतिमावहति। 'महासेनेन दुःस्वप्नः स वञ्चितः'। अत्र वञ्चितो पिसंवादितो विप्रलब्धो वा भवति मुख्यया वृत्त्या। लक्षणया तु विफलीकृत इत्यर्थः। 'अथ निर्मक्षिकं भद्र मधु पातुं मनोरथः'। अत्र निर्मक्षिकमित्यस्य निर्विघ्नमिति लक्ष्योऽर्थः। मक्षिकाणामभाव इति मुख्यार्थप्रतिपत्तेः। 'कांचिद् वेलामुपास्य'। अत्रोपासा प्रतीक्षाऽभिप्रेता। यः किल प्रतिक्षते स चिरमेकत्रोपास्त इति साधर्म्यात्प्रतीक्षणार्थलब्धिः। 'तद्वक्त्रं यदि मुद्रिता शशिकथा'। अत्र मुद्रिता प्रतिबद्धेत्यनर्थान्तरम्। अस्तं गतेति यावत्। यद्धि मुद्रितं भवति न तदुद्घाटयितुं शक्यते यथा मुद्रितो लेखः। 'एवं व्याख्यायमानायां स्मृतौ श्रुतिर्व्याकुप्येत्'। व्याकोपोत्र विरोध इति गृह्यते। कुपितो

हि विरोधमाचरति यस्मा असौ प्रकुप्यति । 'दारिद्र्यं हि पर्यायो मरणस्य' । पर्याय इति पर्यायवचन इत्यस्य स्थाने संक्षिप्तं वचः । स च तुल्यार्थकोऽपरः शब्दो भवति मुख्यया वृत्त्या । इह लक्षणया तुल्यार्थे पर्यवसितः । 'वपुरिव यौवनवन्ध्यमङ्गनायाः' । अत्र फलशून्यवचनो वन्ध्यशब्दः शून्यमात्रे भाक्तः । 'महाञ्शापो मुक्तः' । न हि शापो मुच्यत उच्चार्यते हि सः । परं तदुच्चारणसमकालं जलाञ्जलिर्मुच्यते, तेन तत्साहचर्य्याच्छापोपि मुच्यत इति व्यवह्रियते । एवं सति 'वेदमधीत्य स्नायादि'ति स्मृतिरनुगृहीता भवति । अत्रानुग्रहः समर्थना भवति । यो ह्यनुगृहीतो भवति स उपस्तब्धो भवति । 'कमपरमवशं न विप्रकुर्युर्विभुमपि यदमी स्पृशन्ति भावाः' । अत्र स्पर्शेन स्पर्शपूर्वको विकार उच्यते । अत एव कर्तरि घञन्तः स्पर्शशब्दो रोगवचनः । 'मर्माणि स्पृशन्ति' । अत्र स्पर्शविशेषस्तोदनं व्यधनं वाधिप्रेयते । 'बाष्पदुर्दिनान्धकारितदृष्टिः' । अत्र दुर्दिनशब्देन लक्षणया वर्षमुच्यते । 'गन्धवदगन्धमादनमित्यागन्तुकः पाठः' । प्रक्षिप्त इत्यर्थः । असाम्प्रदायिक इति वा । यो हि सम्प्रदायादागतः स परम्परीणोऽनागतः । आगन्तुकशब्दो नवं बाह्यं सद्य आगतं चार्थमाह । 'दारुणं तमुदन्तं निशम्य साक्षिणोपि मोहिताः किमुत ज्ञातयः' । अत्र साक्षिण इत्यनेन लक्षणया तटस्था उच्यन्ते । यथा व्यवहारेऽर्थिप्रत्यर्थिनोः कतरो जयतीत्यत्रानादरः साक्षिणां तत्र तेषां ताटस्थ्यात्, एवमन्येपि तटस्थाः साक्षिण उच्यन्ते सादृश्यात् । निस्त्रिंशः खड्गो भवति, निर्गतस्त्रिंशतोऽङ्गुलिभ्यः इति व्युत्पत्तेः । स इवेति निस्त्रिंशः क्रूरोपि । 'ज्येष्ठे भ्रातरि म्रियमाणे मृगेन्द्रासनमारोहन्यवीयान्खलु खट्वारूढो भवेत्' । खट्वारोहणं विमार्गप्रस्थानस्योपलक्षणम् । सर्व एवाविनीतः खट्वारूढ इत्युच्यते । मुख्यया वृत्त्या तु योऽकाले तल्पं गच्छति ब्रह्मचर्यं च भ्रंशयति स खट्वारूढ इत्यभिधीयते । 'ऋणैः किल समाघ्रातः पुरुषो जायते त्रिभिः' । समाघ्राणं ( समन्ताद्घ्राणं ) लक्षणयाऽऽक्रमणकासादनं वाह । 'नियमविधित्वपक्षस्तु वज्रहस्तेनापि नापहस्तयितुं पार्यते' । अपहस्तयते हस्तेन निरस्यतीत्यनर्थान्तरम् । अत्र निरसनमात्र उपचर्यतेऽतितरां च शोभते । 'क्रिया हि द्रव्यं विनयति नाद्रव्यम्' । 'द्रव्यमयं माणवक' इति च । "द्रव्यं भव्ये" इति द्रव्यशब्दो भव्येऽर्थे निपातितः । अयं चास्य गौणोर्थ इति तत्त्वम् । द्रव्यं हि गुणक्रियाधारो भवतीति काणादाः । तत्साम्याद् यदि कश्चिद् गुण्यः कर्मठश्च भवति स उच्यते द्रव्यमिति । 'माणिक्यावलिकान्तिदन्तुरतरैर्भासहस्रोत्करैः । अत्र

दन्तुरशब्देनोत्कट उद्भूतो वाऽर्थ उच्यते लक्षणया उन्नतदन्त इति त्वभिधया। 'कियज्जलमनुभवतीयं कलशी' अत्रानुभवतिः संभवतिना समानार्थकः। यद्धि येनेन्द्रियेणानुभूयते सा तस्य विषयो भवति जलमपि कलशीकर्तृकाया धारणक्रियाया विषय इति कलशी जलमनुभवतीत्युच्यते साधर्म्यात्। 'अस्य ग्रन्थस्य सुप्रणीतया कयापि टीकया साचिव्यं करणीयम्'। साचिव्यशब्दः साह्यं साहाय्यं वाऽऽचष्टे गौण्या वृत्त्या। सचिवो हि राज्ञा सचते संगच्छते सम्मन्त्रणार्थमिति तथोच्यते। 'ईश इत्ययमनन्यचुम्बितश्चन्द्रचूड तदपि त्वयि ध्वनिः'। 'चुबि वक्त्रसंयोगे' इति पठितो धातुरत्र संयोगमात्रे लाक्षणिकः। 'इदमुज्जृम्भते बिम्बं भानोः'। अत्रोज्जृम्भत उद्गच्छतीत्यनर्थान्तरम्। जृम्भणे हि श्वासोद्गतिर्भवति गात्राणां चोर्ध्वमुखो विनामः। तेनोद्गमनसामान्यमादाय प्रयोगः।

इवतुल्यादय उपमावाचकाः प्रसिद्धाः। अन्येपि गोणवृत्तिव्यपाश्रयेणौपम्यमाहुः। ते कतिपयेऽत्रानुक्रम्यन्ते प्रबन्धचारिम्णः प्रकर्षाय। 'चक्षुर्मेचकमम्बुजं विजयते वक्त्रस्य मित्रं शशी'। 'कुवलयच्छायामुषा चक्षुषा'। 'सम्प्रत्येणेक्षणानां तिमिरभरसखी वर्तते वेषलीला'। 'केनान्येन विलङ्घ्यते विधिगतिः पाषाणरेखासखी'। 'यवसूचिसूत्रसुहृदः सुधांशोः कराः'। 'सब्रह्मचारी नवमेघरुच्याः'। 'गङ्गावर्तसनाभिर्नाभिः'। 'भ्रूसूत्रस्य सनाभि मन्मथधनुः'। 'कटाक्षविक्षेपाः शिशुशफरफालप्रतिभुवः।

> जमदग्निप्रतिच्छन्दः सरूपो यः किरीटिनः।
> सम्मितो रघुनाथस्य शिवराजो विराजते॥ इति।

न हि सहजैर्न प्रातिभेनालंकृताः पूर्ववासनानुगृहीता एव सुकृतिनः सिध्यन्ति प्रसन्नगम्भीरेषु वाचां गुम्फेषु, किन्त्वपरेपि वाक्परिशीलनप्रसिताः कामपि सिद्धिमधिगच्छन्तीत्यभिप्रायकं श्रीदण्डिनो वचः समुद्धृत्य प्रकृतमुपसंहरामः—

> "न विद्यते यद्यपि पूर्ववासनागुणानुबन्धि प्रतिभानमद्भुतम्।
> श्रुतेन यत्नेन च वागुपासिता ध्रुवं करोत्येव कामप्यनुग्रहम्॥" इति॥



# विषयानुक्रमणी

## प्रथमस्तरङ्गः

### ( विचारात्मकाः प्रस्तावाः )

## द्वितीयस्तरङ्गः

( संक्षिप्तशब्दार्थका विचारात्मकाः प्रस्तावाः )



## तृतीयस्तरङ्गः

( आख्यानात्मकाः प्रस्तावाः )

## चतुर्थस्तरङ्गः

(वर्णनात्मकाः प्रस्तावाः)



## पञ्चमस्तरङ्गः

(शास्त्रीयाः प्रस्तावाः)

॥ श्रीः ॥

# प्रस्तावतरङ्गिणी

## अथ प्रथमस्तरङ्गः

### विचारात्मकाः प्रस्तावाः

### (१) सत्सङ्गतिः कथय किं न करोति पुंसाम्

प्रथमतर एव सद्भिः सङ्गः प्रकर्षति नोऽवस्थितिम्। तद्यथा—प्रशस्य-गुणनिकेतनं कश्चित्सुजनोऽद्य वा श्वो वा गृहानस्मदीयान्सम्भावयिष्यतीति निशम्य सर्वे वयमुत्कलिकाप्रायास्तामेव दिशमवलोकयामो यतः स आगन्ता। एतदर्थं चागारं संमृज्यते, वाससी [1]विपरिधीयेते, सर्वं च [2]पारिणाह्यमनाकुलं यथास्वं निवेशमाशीयो[3] लभते। किमपि साध्वसं हृदि नो वर्तते, कियानपि सम्भ्रमश्च। उपश्लिष्टे[4] महाभागे तस्मिन्कथा विधया वर्तितव्यमिति [5]सोत्सुकमात्मानं पृच्छामः। सुजनविशेष इति गृहागतेन तेन सम्भाषापि समुन्नयति नः। तेन समं संलपन्तो वयं चिरानुभूतानि गुह्यतमान्यपि वृत्तानि विशदमभाग्नं च विवृण्मो वाङ्माधुरीमार्जवं च [6]सायस्कमुपेमः। हन्त यद्यागन्तुना साधुना क्षणिकः संसर्ग एवंजातीयकं फलं प्रसूते तदा सद्भिराप्तवाग्भिः सुहृद्भिर्महात्मभिः स चिराय परिशीलितः किं किं न प्रसुवीत। तदुक्तं कविना—

कल्पद्रुमः कल्पितमेव सूते सा कामधुक् कामितमेव दोग्धि।
चिन्तामणिश्चिन्तितमेव दत्ते सतां तु सङ्गः सकलं प्रसूते॥ इति।

अनुकरणधर्मा मनुष्यः। स यादृशैः संवसति तादृश एव भवति तैस्तै-

---

१. परिवार्येते बध्यन्ते। २. गृह्यमुपकरणजातम्। ३. आशुतरम्। ४. उपागते। ५. भावप्रधानो निर्देशः। ६. सद्योभवं तात्कालिकम्।

रन्यदीयैर्गुणदोषैरुपरक्तः । अतः सद्भिरेषणीयः संसर्गोऽसद्भिश्च परिहरणीयः श्रेयस्कामेनेति गुरवः । संसर्गशीलो मानवः । नहि स चिराय विविक्तमासेवते । अवश्यं तेन परेण संस्रष्टव्यम् । यदि सुजनैः [1]संसृज्यते तर्हि क्रमेणात्मानं परिष्करोति । सुजनो हि विमलधीर्भवति, साधु चिन्तयत्यर्थानविशदं च, अयमितरोऽपि तथागुणो भवति कालपरिवासेन । असौ दुर्विधोऽपि विधुरोऽपि विविधं व्यथितोऽपि सत्यं न जहाति, नानृतं ब्रवीति, सान्त्वं च ब्रूते, अयमप्यपरोऽतथाभूतस्तल्लक्षणे सत्पुरुषे वसंस्तद्गुणमाददानः शनैः शनैरभ्युदेति सत्ये च प्रतितिष्ठति । एवं च सता सङ्गस्य पुरुषस्य मान उन्नमति, पुण्ये रुचिरुदेति, पापाच्चोद्विजते मनः । कामक्रोधादयो मदमात्सर्यादयश्च दिशो विदिशश्च भजन्ते । तेनास्य चेतः प्रसीदति, कृत्येषु च विहितेषु विस्रब्धं प्रवर्तते । प्रख्यायते च लोके [2]नाभ्याख्यायते, उद्गीयतेऽसौ [3]नावगीयते, [4]प्रतीयते न त्वभिशङ्क्यत इत्यहो प्रभावः सत्सङ्गतेः ।

परं सत्सङ्गतिः कथमपि पुण्येन भवति । यदा च भवति तदा महते कल्याणाय कल्पते । यथा निर्धूतकल्मषाणां सौजन्यनिधीनां पुण्यपरिपाकोपचितधर्माभिरतीनां सन्निधिरुपकरोति लोकस्य न तथेतरत् किञ्चित् । तत्तत्पूर्वकर्माशयकषायितचेताः[5] पुरुषस्तत्र तत्रानात्मनीने कर्मणि गत्यभिनिविष्टः पित्रादिभिरनुशिष्यमाणोऽपि गुरुचरणैः प्रबोध्यमानोऽपि सख्यादिभिः सम्बोध्यमानोऽपि न गतिं भिनत्ति[6] न परिवर्तयति प्रवृत्तिं न विजहाति व्यसनेषु प्रसक्तिम् । यदा पुनरस्य केनापि महात्मना संसर्गो जायते, यदा चायं सत्सङ्गतिं शीलयते[7] तद्भावितानि चाकर्णयते तदाञ्जसा[8]ऽऽत्मनि प्रबुध्यते भयो वा जायते । न हि यस्य कस्यचिद्वचश्चेतसः प्रभवति संशृण्वानस्य[9] । नहि पित्रादिवाक्येऽप्युत्पथप्रतिपन्नस्य हितमेतदित्याश्वासो भवति, सत्यमद इति वा मतिरुदेति यावन्नागृह्यमाणकारणोऽलोलुप आप्तवाक् कश्चन व्याहरति । विरला एव तादृशा लोकोत्तराः सुचरितालोकितलोकाः, विरलतर एव च तैः सङ्गमः पुण्योदयमात्रप्रत्ययः[10] ।

---

१. दिवाकिरकर्मकः । २. दूष्यते, अभिशस्यते । ३. निन्द्यते । ४. विश्वस्यते । ५. प्राक्तनकर्मवासनावासितान्तःकरणः । ६. विकल्पयति, परिवर्तयति । ७. शील उपधारणे चुरादिः । उपधारणमभ्यासः । ८. सोत्रम् । ९. अकर्मकाच्छृणोतेः शानच् । १०. प्रत्ययो हेतुः ।

अत्राऽर्थे दन्तकथा प्रचरति लोके—भगवान्वाल्मीकिः किल पूर्वे वयसि कृष्णकर्माऽभून्न शुक्लकर्मा। स हि लुण्टाकवृत्तिमुपजिजीव, तथैव चाश्रितान्पुपोष। [1]परिपन्थमवस्थाय संचरतो जनान् बलात्स्वं मुमोष। मोषं प्रतिपन्नतां चासून्जहार। एकदा केचिदृषयः स्वैरं लोके विहरन्तस्तं प्रदेशमापुर्यत्रासौ मध्येपथं पर्यवस्थितः। आत्मानमेवाभिवर्तमानांस्तान् विलोक्य वाल्मीकिः समुद्धतमुच्चकैश्च स्माह–तिष्ठत तिष्ठत रे क्षुल्लकाः[2], नादत्त्वाऽर्थसन्दोहमितोऽपक्रमितव्यं नो चेदेषोऽहं यमसादनं[3] गमयामि वः, नेयं मिथ्या विभीषिका ममेति। एतन्निशम्य लोकस्याकारणसुहृदो [4]दुर्हृदोऽपि हितमभीप्सवस्ते भगवन्तोऽर्थ्या इमा वाचः समूचुः--भोः साहसिक! किमेतत्ते कृत्यं स्वस्यैव कारणादुत कुटुम्बस्याहोस्विदुभयोः। यद्युभयोस्तर्हि कथय ते कुटुम्बं तवास्मिन्दुश्चरिते भागि भवति न वेति। यत्त्वमहरहः किल्बिषं संचिनोषि तेन च कुटुम्बं बिभर्षि तत्र कियन्तमंशं तद्धर्तुमभ्युपैतीत्यस्ति युवयोः काचित्संविदिति निश्चित्य ब्रूहि। नास्त्यावयोः कश्चिदेवंभूतः [5]समयः कृतपूर्व इति वाल्मीकिः प्रत्युवाच। तमृषयो भूय इत्युदाजह्रुः--सद्यो याहि, तत्पृष्ट्वा च प्रत्यायाहि। नेतः प्रयास्याम इति। ततो मयि गते मा स्म यूयं पलायध्वमिति युष्मान्बृहत्यस्मिन्पादपस्कन्धे निबध्य यामीत्युक्त्वा ऋषींश्च [6]प्राध्वंकृत्य स गृहं प्रस्थितः। तत्र गतश्च स पुत्रकलत्रादीन्पप्रच्छ---किं नु खलु मदर्जितेऽर्थजाते यथा वः सर्वेषां भागस्तथा तदर्थं कृते पापसमुदयेऽप्यस्त्युत नेति। नेति तेऽभिव्यक्तं बभाषिरे इत्थं च स्वमुत्तरं विचचक्षिरे-वयं यथा तथा त्वदाहृतमर्थौघमुपजीवाम इति सत्यम्, पापसमाचारविपाके तु न वयं भागिनः, न तत्रास्माकं दायाद्यं प्रातिभाव्यं वा, कर्तैव लिप्यते पापकेनेति स्थितेरिति। तदर्थमनुगम्य स यथाप्राप्तं प्रतिवचनं श्रावयाम्बभूव। कारुणिकास्ते भगवन्तस्तमेव मधुरं श्लक्ष्णं चोपदिदिशुर्धर्मम्--सौम्य, इदानीमवेहि त्वया यथा तथाऽर्जिते परिमुषिते वा परद्रव्ये

---

१. 'परिपन्थं च तिष्ठति' (४।४।३६) इति सूत्रकारप्रयोगात्परिपथशब्दपर्यायः परिपन्थशब्दो लभ्यते। २. क्षुद्राः। ३. सदनमेव सादनम्। प्रज्ञादित्वादण्। ४. दुर्हृदिति 'सुहृद्दुर्हृदौ मित्रामित्रयोरि'ति साधु। ५. पौरुषेयी व्यवस्था। ६. 'प्राध्वं बन्धने' इति गतिः।

पुत्रादीनां भागोऽभिमतो न तु पापविपाके। स तु त्वामेवोपस्थास्यति कर्तारम्। त्वमेव च नाना [1]याम्या यातना अनुभविष्यसि। किं युक्त इद-मवस्थस्य ते पापभरो वोढुम्। विरमातो दुश्चरितप्रसङ्गात्। भद्रं ते विधे-याद्विधातेति। एतन्निशमनसमनन्तरमेव वाल्मीकिः सुप्तोत्थित इव धौत इव स्नपित इव विमलचेतास्तानृषीन्सहसा बन्धनान्निर्मुमोच, भक्तिप्रह्वः प्रणिपपात, विनीतवचसानुनिनाय। मर्षयत परमर्षयोऽनवबोधकृतं भगवतां व्यतिक्रमं मामकम्। अबोधोपहतस्य बालस्येव ममायमपचारः क्षम्यतामि-त्युक्त्वा परमर्षिभिराशीभिरभिवर्धितो विसर्जितश्च स्वं गेहं प्रतीयाय, सन्ततं सच्चरितनिरतः परमार्थचिन्ताभिरक्तश्च कालेन मुनित्वमन्वियाय।

यत्र क्वापि प्रतिभातसकलपदार्थेन परे ब्रह्मणि प्रबुद्धेन पुण्येन जनेन कस्यचित्सुकृतिनः संगतिर्भवति। तत्र तदीययाऽनुशिष्टया [2]प्रातिहार्यमिव किमपि संवर्तते। या नाम सिद्धिः शास्त्रश्रवणेन प्रणिधानेन तपसाऽना-शकेन च दुरापा तां सहसैव विन्दते तच्छिष्यतां गतस्तं त्रातारमुपस्थितो जनः। श्रीविवेकानन्दस्य महाभागस्य वृत्तान्तः कस्य न संस्तुतः[3] साक्षर-स्यैतद्देशजस्य। अयं हि विविधासु विद्यास्वभिविनीतः परं च प्रावीण्य-मुपगतः स्वदेशजेषु परदेशजेषु च दर्शनेषु, परां च निष्ठां गत इतिहास-पुराणादिषु, यत्र क्वापि महत्यधिकारे[4]ऽध्येष्योऽभूत्, यां कामप्युच्छ्रितां पदवीमधिरोढुं प्राभूत्। परं सुगृहीतनामधेयस्य तत्रभवतः श्रीरामकृष्णयतेः पावनेन संसर्गेणोपस्कृत[5] 'आत्मानमन्विच्छ निहितं गुहायामि'त्यनुशिष्टो लौकिके वस्तुन्यवस्तुत्वं प्रतिपाद्य निर्वेदं चोत्पाद्य परे ब्रह्मणि रतिं कारित-स्तारितश्च भवार्णवम्!

न केवलं जीवत एव पुरुषस्य सुजनेन सङ्गः श्रेयसे भवति, तेन पातित-देहस्यापि भूयसे कल्याणायेति रामायणे शम्बूकवृत्तान्ततोऽवस्यामः। शम्बूको नाम वृषलो दण्डकायां तपस्तप्यते, तस्य च तपसि नाधिकारः, तेन च मर्यादातिक्रमेण काले द्विजशिशुरुपरतः। राजापचारमन्तरेण न प्रजास्वकालमृत्युश्चरतीति विभावयञ्छ्रीरामोऽशरीरिण्या वाचा प्रबोधितो

---

१. यमाच्चेति वक्तव्याण्ण्यः। २. इन्द्रजालम्। 'मायाकारस्तु प्रातिहारिक' इत्यमरः। ३. परिचितः। ४. सत्कारपूर्वकं व्यापारयितुं योग्यः। ५. संस्कृतः।

वृत्तं कृत्यं चैवमादिष्टः—

शम्बूको नाम वृषलः पृथिव्यां तप्यते तपः ।
शीर्षच्छेद्यः स ते राम तं हत्वा जीवय द्विजम् ॥

ततः श्रीरामोऽयोध्यातो योजनानां शतानि क्रान्त्वा दण्डकां प्राप्तः शूद्र-मुनेः शिरश्छिनत्ति । स च तेन कर्मणा दिव्यपुरुषतां याति क्षणाच्च तस्य पुरत आविर्भूय महन्नाम समोपकृतं महाराजेनेत्यभिप्रायवद् इदमाह—
दत्ताभये त्वयि यमादपि दण्डधारे सञ्जीवितः शिशुरसौ मम चेयमृद्धिः ॥
शम्बूक एष शिरसा चरणौ नतस्ते सत्सङ्गजानि निधनान्यपि तारयन्ति ॥इति



## ( २ ) विद्वान्सर्वत्र पूज्यते

इह जगति सनिमित्ता संभावना चेतनाचेतनेषु नानिमित्ता । यत्र हि भूयस्त्वमर्थस्यार्थार्थिनस्तत्र भूयान्समादरोऽल्पीयानन्यत्र । तत्रापि केचिद् व्यवस्थितमेव क्रमं स्मरन्ति शास्त्रकाराः । तथा ह्याह भगवान्मनुः—

वित्तं बन्धुर्वयः कर्म विद्या भवति पञ्चमी ।
एतानि मान्यस्थानानि गरीयो यद् यदुत्तरम् ॥

एतदुक्तं भवति—वित्तादिना पञ्चकेन लोके मानास्पदं भवति मानवः, परं नात्र प्रत्येकं सममालापयते[1] । यो हि वित्तवांस्तस्य यावान्संमानस्ततोऽधिको बन्धुमतः, ततोऽपि प्रकृष्टवयसः स्थविरादेः, ततश्चापि श्रौतस्मार्तकर्म-प्रसितस्य, ततश्चापि भूयोविद्यस्येति क्रमोऽनुरुध्यते । विद्वान्सर्वान्धनिका-दीनतिरिच्याभ्यच्यर्थत इत्यत्र पर्यवस्यति स्मृतिः । इममेवार्थमनुवदति गौतमः—श्रुतं तु सर्वेभ्यो गरीयस्तन्मूलत्वाद् धर्मस्येति । अयमेव च प्रकृतो विषयः ।

प्रथमं तावद् वित्तवतां मानवत्ता परीक्ष्यते । वित्तं हि मानास्पदं भव-तीत्यत्र सम्पद्वचनः श्रीशब्दः शोभामप्यभिधत्त इत्येव लिङ्गम् । श्रीविधुरं चाश्लीलं[2] ग्राम्यमुच्यते । इदमवश्याभ्युपेयं लोके महाशाला महोपकरणा

---

१. पूजामधिगच्छति । 'लियः संमाननशालीनीकरणयोरि'त्यात्मनेपदम् ।

२. कपिलादित्वाल्लत्वम् ।

महाधना [1]महीयन्ते, कविभिरुपश्लोक्यन्ते, राजभिरधिक्रियन्ते, जनैश्चार्थिभिरुच्चैरभिष्टूयन्ते । सर्वो लोकोऽमून् गुरूनिव प्रत्युत्तिष्ठति, देवानिव भक्तिप्रह्वो नमस्यति, जनकादीनिव सबहुमानमालपति, सादरं कीर्तयति, सतश्चासतश्च तद्गुणान्प्रख्यापयति । वित्तसव्यपेक्षो हि लोको वित्तवन्तं समाद्रियत इति किमत्र चित्रम् । परं नास्य सार्वत्रिकी संमानना भवति । ज्ञातयो वा प्रतिवेशिनो वा सहोषिता वैकत्र ग्रामे पत्तने वा समानव्यवसाया वाऽर्थवन्तमर्थकृदिति महयन्ति, नेतरे भिन्नाभिजना विदेशाधिवासिनो निरपेक्षा वा । इयं चार्थवतः संमानना हृदयाभ्यनुज्ञाता न भवति । अर्थिता ह्यत्र प्रयोजिका । न चात्यन्ताय परिशुद्धा भवति । निन्दानुवेधोऽत्र बहुधा भवति । एवं हि विश्वसिति लोकः—

नाच्छित्त्वा परमर्माणि नाकृत्वा कर्म दारुणम् ।
नाहत्वा मत्स्यघातीव प्राप्नोति महतीं श्रियम् ॥

यश्च बहुबन्धुः स वित्तवतो भूयांसमादरं लभते । बहुबन्धुत्वं हि महद् बलम् । इदं हि भूयसोऽर्थान्साधयति भीतये च भवतीतरेषाम् । भीतिसमुत्थ एव बहुमानो लोकस्य बन्धुमति भवति । बहुवित्तोऽपि वित्रस्यत्यस्मात् किमुताऽवित्तः । एवं धनिकमपेक्ष्य भूयो मानितोऽपि बहुबन्धुर्न सर्वैः स्वदेशजैः परदेशजैश्च समं संमान्यते । विरलोऽस्य समादरोऽन्यत्र स्वग्रामात्पुटभेदनाद्वा[2] ।

वयःप्रकर्षोऽपि मानस्थानमिति [3]प्रवयाः पूर्वोक्तं द्वयमपेक्ष्याभ्यधिकं मान्यते भूयसा च लोकेन । एष हि परम्परीण[4] आचारो निरूढिं गतो यद् धनिको वा स्यादधनिको वा, बन्धुमान्वा स्यादबन्धुर्वा वयोवृद्धः प्रायेण पूज्यते । "ऊर्ध्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आयती"ति स्थविरोभ्युत्थेयो यूनाम् । अन्येषामपि तस्मिन्नुपश्लिष्यति संभ्रमोऽव्याहतः प्रसरति । अनुभूतलोकवृत्तान्तो दृष्टप्रियाप्रियोऽयमुपदेक्ष्यति नो मार्गमित्युपास्यते तरुणैः । परमस्यापि परिच्छिन्ना पूजा नाऽपरिच्छिन्ना । समानः

---

१. महीङ् कण्ड्वादिः । अकर्मकः । पूजां लभन्त इत्यर्थः । २. नगराद् । ३. वृद्धः । ४. परम्पराप्राप्तः । 'परोवरपरम्परपुत्रपौत्रमनुभवति' (५।२।१०) इति खः ।

संमानो भवति न विशिष्टः, सोऽपि [1]स्वानां मध्ये यादृशो यावांश्च भवति न तादृशस्तावांश्च परेषाम्, स्वे ग्रामे यथा न तथा ग्रामान्तरे।

क्रियावाञ्श्रौतस्मार्तादिषु [2]कर्मस्वेकायनगतो यथा मान्यते लोके न तथा धनिकादयः। षट्कर्मा ब्राह्मण इति यो विहितानि षट् कर्माणि श्रद्धयोपपन्नोऽव्याजमाचरति तस्य व्यतिरिक्ता[3]ऽपचितिर्भवति। एवं राजन्यस्य वैश्यस्य वृषलस्यापि। 'क्षत्रियैर्धार्यते चापो नार्तशब्दो भवे'दिति यः क्षत्रिय आर्तत्राणाय सततमुदायुधो भवति, शत्रूनपोहति, धर्मक्रियाविघ्नान्व्यपोहति, तस्कराद्युपद्रवं विद्रावयति; स कस्य मानास्पदं न स्यात्। शुक्लेन कर्मणाऽभिपूज्यते कृष्णेन चाभिभूयते। शूरवृत्तेन स्तूयते, कार्पण्येन च कुत्स्यत इति कर्मनिबन्धनौ मानापमानौ। तस्मात्कर्मणः प्राधान्यं गौण्यं तु वित्तादीनां व्यवस्थितं भवति।

धनिकादींश्चतुरः समपेक्ष्य विदुषो बहुतरा संमानना भवति सर्वत्र च सर्वकालं च। अत्र विद्वच्छब्देन भूयोविद्यो विवक्ष्यत इति पूर्वमवोचाम। यो हि किञ्चिज्ज्ञस्तस्य मानविशेषो न। बहवो हि किञ्चिज्ज्ञाः। सर्व एव लोको यत्किमपि वेद। तत्र सामान्यज्ञानमल्पज्ञानं वा समादरविशेषे नैव प्रयोजकतामियर्ति[4]। विशेषज्ञो बहुश्रुत एव धनिकादीनतिरिच्याऽभ्यर्ह्यते। युज्यते च तस्यैषाऽभ्यर्हणा। बहु चेह वेदितव्यमस्ति। ब्रह्मविविदिषया भगवन्तं सनत्कुमारमुपसन्नो देवर्षिर्नारदः स्वेन विदितपूर्वा विद्याः परिगणयाम्बभूव 'ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थमि'त्यादिना विस्तीर्णेन सन्दर्भेण। याज्ञवल्क्योऽपि चतुर्दश स्थानानि विद्यानां स्मरति। तद्यथा—

पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश॥ इति॥

एतदतिरिक्ताः कला अपि सन्ति चतुःषष्टिः। एतावतो विषयस्य ग्रहणोद्यमेनैव सर्वमायुरुपयुक्तं स्यान्न चैषोऽविकलो गृह्येत। आस्तां तावत्सर्वस्यास्य ग्राह्यस्य निरवशेषो ग्रहः। ग्राह्यैकदेशस्यापि यस्य कस्यचिन्मर्म-

---

१. ज्ञातीनाम्। २. एकाग्रचित्तः। ३. पूजा। ४. ऋ गतिप्रापणयोर्जुहोत्यादिः।

ज्ञानं न समाप्यते, न चैकत्रापि [1]काष्ठाज्ञानमवाप्यते । ततश्च [2]मूर्धाभि- षिक्तं ब्रह्मज्ञानमप्यधिगम्यं यदुद्दिश्य प्रोवाच भगवान्वासुदेवो गीतासु— "न हि ज्ञानेन सदृशं पवित्रमिह विद्यते" इति । अनेकविधमिदं शास्त्र- ज्ञानं कलाज्ञानं ब्रह्मज्ञानं वा न ऋते गुरूपसदनान्न चान्तरेण पुण्यपरि- पाकं सुसम्पादं भवतीत्यस्यातिरिक्तो महिमा । भूयान् हि क्लेशोऽनुभूयते तत्तद्विद्योपादाने । आह च—

> देवीं वाचमुपासते हि बहवः सारं तु सारस्वतं
> जानीते नितरामसौ गुरुकुलक्लिष्टो मुरारिः कविः ।

विद्यातो वित्तादयः सर्वे जघन्याः । विद्या ह्यलङ्कारो मानुष्यकस्य, विरूपस्यापि मनोज्ञकमापादयति । किं न स्मर्यते यदष्टावक्र इत्यन्वर्थ- नामा महर्षिः प्राग्रहरो विदां बभूव सर्वस्याभ्यर्चितश्च । सुगृहीता विद्या विविधमुपस्कुरुते[3] ग्रहीतुः[4] । सा ह्यस्य चेतः समादधाति, बुद्धिं प्रसादयति, लाघवमपनयति, गौरवं चोपनयति । असाधना असहाया अपि विद्वांसो यथा [5]निर्वृण्वन्ति न तथेतरे बह्वर्था बहुसहाया अपि । आगमिनो हि लोकोत्तरेण धैर्येण ब्रह्मवर्चसेन च व्यापदोऽपि सहर्षं सहन्ते, नात्मा- नमवमन्यन्ते न चापि निर्विद्यन्ते । एष सर्वातिशायी परभागो विद्यायाः । सैषा विद्यावतः [6]सर्वमहतीमर्हामाहारयेदिति किं चित्रम् ।

विद्यावतः समादरो न केवलं स्वदेशे परदेशेऽपि । तत्राभिजनो वा बान्धवो वा वयो वा न समीक्ष्यते । विशिष्टेऽस्य समादरेऽयं चापरो हेतुरुत्प्रेक्ष्यते—सर्वो [7]भूमिष्ठो जनो विद्यायां सविशेषमादृतो भूयोविद्यायै शश्वत्स्पृहयते, विद्यापारदृश्वनां महात्मनां स्वदेशजानां परदेशजानां च ज्ञानराशिं च स्वस्य स्वैरमुपभोग्यं मनुत इति । विद्वानपि स्वां विद्यां लोकस्य सर्वस्योपकृतये शिवेतरक्षतये परनिर्वृतये च जानीते, न च तत्र स्वत्वमभिमन्यत इति सर्वेभ्यो निर्विशेषं संविभजते । विद्या खलु धर्म-

---

१. परावधिकज्ञानम् । २. सुगमम् । ३. प्रतियत्न आत्मनेपदम्, तत्रैव च सुट् । ४. 'कृञः प्रतियत्ने' इति षष्ठी । ५. सुखमनुभवन्ति । ६. 'गुणात्तरेण तरलोपश्चे' ति षष्ठीसमासः । सर्वासां महत्तरामिति विग्रहः । ७. 'अम्बाम्बगोभूमिसव्ये'ति सकारस्य मूर्धन्यः ।

तत्त्वबोधिनी । अयं च तां वितरतीति कुतो न यथेष्टं मान्येत । इयं च समानना सर्वकालसाधारणी । यथा पुरा तथाऽद्यापि तामाचर्यमाणां पश्यामः । विज्ञाने परां कोटिमधिरूढा यहूदीजातीयाः केचन जातिमात्सर्यप्रयुक्तेन हिटलरेण परिमुषितसर्वस्वा निर्वासिताः परममेरिकावास्तव्यैरधीष्टाः[1] । साम्प्रतं चैतेऽमेरिकायाः कृते नक्तन्दिवमनारतं [2]समुत्तिष्ठन्ते बहु च सत्क्रियन्ते । एवमन्ये शार्मण्या विज्ञानरूषितात्मानो रूसाधिकृतै रूसमानायितास्तत्र [3]कर्मान्तेषु विनीतवद् व्यापारितास्तद्देशशेखरायन्ते । इदं चानुदिनं पश्यामो भारतवर्षस्थाः सुगृहीतनामधेयाः श्रीराधाकृष्णप्रभृतयो विद्यापारगा हरिवर्षादिषु बहु मान्यन्ते, हरिवर्षादिस्था बर्ट्रण्डरसलबर्नार्डशा-प्रभृतयश्चेह यथेष्टमव्याजं च संभाव्यन्ते ।

न केवलं शरीरेण स्थिता एव विद्वांसोऽभिपूज्यन्ते संस्थिता[4] अपि । अद्य बहुतिथः कालो वाल्मीक्यादीनां स्वर्यातानाम्, परमद्यापि ते यशःशरीरेण स्थिताः, अद्यापि सबहुमानं सशिरोनामं तन्नामधेयानि कीर्तयन्ति लोकास्तत्तद्देशजाः । इतश्चतुर्षु वर्षशतेषु जातमाङ्गलीयं कविवेधसं शेक्सपीअरमद्यापि भक्तिप्रह्वेन चेतसा स्मरन्ति तत्तद्देशवास्तव्याः । यत्सत्यं वैदुष्यस्य शास्त्रपारदृश्वतायाः प्रभावः परिच्छेदमत्यन्तमत्येति । नायं दिक्कालाद्यवच्छेदं सहते । यावता जन्मान्तरनिर्माणेऽप्यङ्गतां याति विद्योपात्ता । उक्तं च—

तं विद्याकर्मणी अन्वारभेते पूर्वप्रज्ञा चेति ।

प्रकृतिष्वस्खलितशासनं महार्थं महासेनं भुवः [5]परिवृढमप्यतिरिच्यते विद्वानादरेण किम्पुनः परिमितैश्वर्यानीश्वरान् । तस्य तु समादरः स्वदेशे सविशेषोऽन्यत्र च समानः । सोऽपि स्यान्न वा स्यात् । अनधिष्ठानात्तस्य दण्डभीतेरभावाच्च । अत्रार्थे पुरातनमितिहासमुदाहरन्ति—

विश्वजित्सम्राडलक्षेन्द्रो यदेमां भरतभुवं प्राप तदा कदाचिदस्य बुद्धिरभूद् दाण्डायनं नाम तक्षशिलोपकण्ठे तस्थिवांसं मुनिं पश्येयमिति ।

---

१. सत्कृत्य व्यापारिताः । २. उद्युज्यते । ३. आवेशनेषु = शिल्पशालासु । ४. मृताः । ५. अतिः कर्मप्रवचनीयः, तद्योगे द्वितीया ।

ततः तस्मै सन्देशं हारयामास–राजाधिराजोऽलक्षेन्द्रस्त्वत्सन्निधिं[1] स्पृहयतीति, तत्सम्भाव्यतां मदास्थानीति[2]। स चेमं सन्देशं प्रत्याख्यात्। ततः सम्राट् स्वयं तदन्तिकमुपागात्प्रार्थयत च किं तवोपकुर्यामिति। स महाभागः स्माह–त्वया स्वशरीरेणातपो मे वारित इत्येकतस्तिष्ठ, नाहमितोऽन्यत्कामय इति।

भगवता मनुना प्रणीत एतद्देशसमुदाचारोऽपि विदुष एव भूयान्त्समादरो भवति महीक्षितोऽपीत्यनुगृह्णाति। मार्गे [3]समापन्नयोः स्नातकनरेशयोः केन कस्य पन्था देय इति निदिशन्मनुः स्मरति–

स्नातकस्य च राज्ञश्च पन्था देयो वरस्य च।
तेषां तु समवेतानां मान्यौ स्नातकपार्थिवौ।
राजस्नातकयोश्चैव स्नातको नृपमानभाक्॥ इति॥

अतोऽवितथमाह नयकोविदः कोऽपि 'विद्वान्सर्वत्र पूज्यत' इति॥



## (३) परोपकाराय सतां विभूतयः

इह लोके बहवोऽर्थकामयोः प्रसक्ता अल्पे च धर्मेऽभिरक्ताः। अर्थो हि धर्मस्य च कामस्य च मूलमित्यभिमन्यमाना लौकिका अर्थमेव तावन्मृगयन्ते। "वयं स्याम पतयो रयीणाम्" (ऋ० १०।१२१।१०) "आ नो भजस्व राधसि" (ऋ० ४।३२।२१) इति बह्वृचा अपि प्रार्थयन्ते। [4]द्वयास्तत्र विभूतिमन्तः सन्तोऽसन्तश्च। ये तत्रभवन्तः सन्तः शुचीनां श्रीमतां गेहेष्वभिजायन्ते ते गर्भेश्वराः। परे पुनः सद्भिरभ्युपायैरजिह्मेन च वृत्तेनैश्वर्यं गता उच्चावचानि सुखोपकरणानि सकलयन्ति। उभयेऽपीमे केवलादिनो न भवन्ति। "केवलाघो भवति केवलादी" (ऋ० १०।११७।६) इत्याम्नायमनुरुन्धाना "भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणादि"ति स्मृतिं "जठरं को न बिभर्ति केवलम्", "काकोपि चञ्च्वा कुरुते नित्यं स्वोदर-

---

१. ईप्सिततमत्वविवक्षायां कर्मणि द्वितीया। २. आस्थानी=सभा। ३. संगतयोः। ४. वैकल्पिकी सर्वनामसंज्ञा। पक्षे 'द्वये' इति रूपम्।

पूरणमि''ति नीतिविदामनुशिष्टिं च समाद्रियमाणाः स्वमर्थं संविभज्य पात्रे [1]प्रतिपत्तिपूर्वकमुपभुञ्जते मा नः पाप्मा स्पृक्षदिति।

स्वभाव एवैष प्रकृष्टपुण्यानां सज्जनानां यदमी स्वमर्थजातं स्वं विभवं स्वां विद्यां सर्वं च स्वं गुणव्रातं परार्थमुपयुज्यमानमात्मश्रेयसे हितमुत्पश्यन्ति, न च तं तमर्थं वितरन्तस्तृप्यन्ति। इमे हि सन्ततं परार्थं स्यन्दमानाः स्रवन्तीः [2]पचेलिमेन फलभरेण [3]पत्ररथकुलं परिपुष्यतश्छायया[4] च संश्रितानां परितापं शमयतः पादपान्स्वस्य चर्यायामाचार्यीकुर्वन्ति। एते खलु धनं दानाय विद्या ज्ञानाय शक्तिश्चाशक्तपरित्राणायेति प्रतिपन्नाः परं चौदार्यमापन्नाः सर्वात्मना पराभ्युपपत्तौ[5] प्रवर्तन्ते। [6]किमीश्वरा वयं यदि परस्य कष्टाश्रितस्य समुद्धारे नेश्वरा इत्युदारमतयः स्वगतमालपन्ति। ''आपन्नार्तिप्रशमनफलाः सम्पदो ह्युत्तमानामि''ति कविभणितिं प्रमाणयन्तस्ते परेषां दारिद्र्यदलने [7]व्यलीकोपशमने शोकशङ्कूत्खनने च काममकिञ्चनतामुपेयुः, संशये वाऽऽत्मानं पातयेयुः, न पुनः कार्पण्यं निर्वेदं वा गच्छन्ति। उक्तं च—

उपकर्तुं प्रियं कर्तुं कर्तुं स्नेहमकृत्रिमम्।
सज्जनानां स्वभावोऽयं केनेन्दुः शिशिरीकृतः॥ इति।

अर्थिषु गलितविभवाश्चैते क्षीणा अप्यक्षीणा मनोज्ञतराः प्रतिभान्ति सहृदयान्दर्शकान्[8]। तदुक्तं हरिणा—

मणिः शाणोल्लीढः समरविजयी हेतिनिहतो
मदक्षीणो नागः शरदि सरिदाश्यानपुलिना।
कलाशेषश्चन्द्रः सुरतमृदिता बालवनिता
तनिम्ना शोभन्ते गलितविभवाश्चार्थिषु नृपाः॥ इति।

कविकुलपतिः कालिदासोप्याह—
पर्यायपीतस्य सुरैर्हिमांशोः कलाक्षयः श्लाघ्यतरो हि वृद्धेः॥ इति।

कस्य न विदितं सर्वस्वदक्षिणं विश्वजितं यज्ञमाजह्रे रघुरिति। तेन चास्य ववृधे महिमा न चिक्षिये। अत्रार्थे वृत्तान्तरमपि शक्य उदाहर्तुम्।

---

१. प्रतिपत्तिर्दानम्। २. पक्वेन। ३. पत्ररथः पक्षी। ४. हेतौ तृतीया। ५. अनुग्रहे। ६. 'किं क्षेपे' इति समासः। ७. व्यलीकं दुःखम्। ८. प्रतियोगे द्वितीया।

अनुश्रूयते—वङ्गेषु मेदिनीपुरमण्डलाभिजन आहतलक्षण ईश्वरचन्द्रो नाम विप्रो विद्यासागरोपाह्व इतो नातिविप्रकृष्टे काले कलिकातायां संस्कृत-कालेजाध्यक्षो बभूव । गुरुकुलक्लिष्टोऽक्लिष्टकर्मा शास्त्रपारावारकृताव-गाहः स महाभागः प्रजानां प्रजेशस्य च सममभ्यर्चितोऽभूत् पदं चोच्चैर-ध्यष्ठात् । श्रुतशीलाभ्यामुपपन्नः स [1]वदान्यतया [2]व्यश्रूयत । परःशतानि निर्धनकुलानि [3]धनपोषम[4]पुष्णाच्छतशश्छात्राणां च दुर्विधानां भोजना-च्छादने संव्यदधात् । दयार्द्रचेताः सो[5]ऽवरुद्धवदप्रकाश्यात्मानमनाख्याय च स्वं कुलमास्पदं वा दयनीयस्य सर्वस्य जनस्यादयत ।

एकदा प्रातर्विहाराय गृहान्निर्गतोसौ कमप्यसंस्तुतचरं जनं सततरुदि-तोच्छूननेत्रं 'हा हतोस्मि मन्दभाग्यः, न हि कश्चिदत्र श्रेष्ठी वा धनिको वा महाजनो वाऽसकृदभ्यर्थितोपि मामभ्युपपद्यतेऽद्यापी'ति विलपन्तमद्राक्षीद-प्राक्षीच्च—कल्याण[6] ! किं तवोद्वेगस्य कारणम् , केनार्थेन त्वमर्थीति । स जनः स्थूले अनुल्बणे वाससी वसानं विनीतवद् ब्रुवाणं पण्डितप्रकाण्डं तं महाभागं मद्विध एव दुर्विधोऽयं कश्चित्कौतूहलमात्रेण मदुगतमनुयुङ्क्ते, नायं मामुद्धर्तुं सहत इति समर्थ्य भोः पन्थानमनुयाहि, किं तवानेनार्थे-नेति प्रतिब्रवीति । ईश्वरचन्द्रो भूयोपि तमभ्यर्थयते ब्रूहि—किमर्थयसे, कथय कुतः कृच्छ्रा[7]त्पर्योप्तिमिच्छसीति । ततः पण्डितपुङ्गवस्य पूर्ववत्साहाय्ये-ऽसामर्थ्यं मन्वानः स प्रत्याह—किमिति मुधा खेदयसि माम् ? याहि दिशं यियासिताम् । अथ ते मुद्राः सन्ति राजत्यो मदर्थो यदेवं मामनुबध्ना[8]-सीति । परुषाक्षरा इमा गिरो निशम्यापि क्रुधं नागात्स महामनाः, यथा-पुरं सुमनाश्च श्लक्ष्णमवादीत्तमार्त्तम्—भद्र ! का ते क्षतिर्यदि मामाचक्षे स्वकं वृत्तम् । शक्यामि चेत्साचिव्यं ते करिष्यामीति । इत्थं प्रश्रितेनाभि-जातेन च वचसा प्रत्युक्तोऽसौ स्खलिताक्षर स्वमुदन्तमित्थमुदाहरत्— "कन्यकायाः परिणयस्य कारणादाधमर्ण्यं गतोस्मि । इदं ममैकं शरण-[9]माधीकृतं वर्तते । याचिता मयाऽसकृदेकैकशोऽत्रत्याः श्रेष्ठिनो विपणि-

---

१. दातृतया । २. प्रसिद्धोऽभवत् । ३-४. धनेनापुष्यत् । ५. प्रच्छन्नवत् । ६. भद्र । ७. परित्राणम् । ८. भूयो भूयः पृच्छसि । ९. बन्धके स्थितम् ।

नद्य द्विसहस्रीं रूप्यकाणामृणार्णम्[1]। परं नैकोपि मत्साहाय्यकमभ्युपागात्। अद्याधेः पूर्णोऽवधिः। श्वोभूते मदीयं निकेतनं समुद्घुष्य विक्रेष्यतेऽहं च सान्वयोऽतः सनिकारं[2] निष्कासयिष्य इति चिन्ता मामाचामति। अप्रतिविधेये विधातरि किं वा शक्यं कर्तुमन्यत्र परिदेवनाया इत्यवसानं मे कथायाः। इदमाकर्ण्य करुणया द्रुतचेताः स महात्मा किमप्यनुक्त्वा ततः प्रायात्। अन्येद्युर्नादशकमितायां प्रातस्तन्यां वेलायामधिकरणमासाद्य द्वे सहस्रे रूप्यकाणि तस्य जनस्य कृतेऽधिकरणाधिकारिणि न्यास्थत्सङ्कटाच्च तममूमुचत्। यदा च सोऽधमर्णोऽद्य गेहं मे परहस्तगतं भविष्यति विडम्बना च महती वर्त्स्यतीति ग्लानाननोऽधिकरणमुपैति तदाधिकरणिकलेखकस्तमभिवदति—उदित[3]मयेन ते, प्रियं ते श्रावयामि। विगणितं सर्वं तव ऋणं केनाप्यकारणबान्धवेन। इदानीं स्वस्थो भवेति। इद निशाम्यन् सोऽतर्कितोपनते तत्रार्थे सहसा प्रत्ययं नायात्, आश्वासितश्च तेन नियुक्तेन [4]हर्षसध्रीचीनस्याश्चर्यस्य परां कोटिमयात्। अचिन्तयच्चावश्यं स एव ममानुग्राहकः स्याद्यो मया द्विः प्रत्याख्यातः साधिक्षेपं चान्ते प्रत्युक्तः। कथंकारं तं पुण्यदर्शनमुपेयाम्। नाहं जाने कां रथ्यामावसति सः, कां वा कृत्यामनुतिष्ठति, क्व वाऽधिक्रियत इति। अस्तु। गृहाद् बहिरवस्थितो राजमार्गेणानेन यां दिशमभिप्रस्थितोऽसौ तामेव सम्प्रेक्षमाणस्तिष्ठामि, तावतिथ्यां[5] होरायां विहारनित्यः स चेदागमिष्यति क्षिप्रं तस्य पादारविन्दयोः प्रणिपतिष्यामि क्षमां च वरयिष्यामि। अपरेद्युः प्रगे विहरणशीलः स महात्मा नियतेऽनेहसि ततो निरगात्, सद्यश्च तत्पादयुगमगृह्णात्स उपकृतो जनः। मर्षय कृतागसमबोधोपहतं दुर्गतमिमं जनमित्यसकृदलापीच्चिरं च प्राशंसीच्चारुचर्यं तं देवदेश्यम्।

असन्तो विभूतिमन्तस्तु निरुक्तमाचारं न मानयन्ति। विभवो हि भूयसा खलीकरोति सुजनमपि। विरला एव हि विभूतिमन्तोऽनुत्सेकिनो विनीताः साधुसमाचारा भवन्ति। प्रायशः प्रभवन्तो धनवन्तः [6]कष्टायन्ते

---

१. ऋणापकरणार्थमृणम्। २. सावमानम्। ३. अयः शुभावहो विधिः, सौभाग्यम्। ४. हर्षसहचरितस्य। ५. तावतीनां पूरण्याम्। इथुक् प्रत्ययः। ६. पापं कर्तुमुत्सहन्ते।

न चात्मनाऽपत्रपन्ते । "कोर्थान्प्राप्य न गर्वितः" इति वचनं च चरितार्थ-यन्ति चरितेन । तेन तेषामर्थाः परेषां परिपीडनायैव जायन्ते नोपकाराय । परार्थमात्रे स्वार्थप्रणाशप्रसङ्गेऽपि ते घटेरन्[1], स्वार्थाविरोधेन वा परार्थ-[2]मुद्यच्छेरन्निति तावद् दूरोपेतम् । परार्थे प्रत्यूहं न कुर्वीरन्नित्येव बहुगुण कृत्यमेषाम् ।



## ( ४ ) दारिद्र्यदोषो गुणराशिनाशी

दारिद्र्यं नाम निर्धनत्वं निःस्वत्वमर्थकृच्छ्रमित्यनर्थान्तरम् । दरिद्रो हि दरिद्राति दुःखेन निर्वहतीति तथोच्यते, दुर्गतो दुर्विध इति पर्याय-द्वयेन चाभिधीयते । दारिद्र्यं हि सातिशयं भवति । एकस्य कृते यद्दारि-द्र्यमपरस्य तदेव धनिकत्वम् । यदैश्वर्यं भारतवर्षे कृषीवलस्य स्वप्नगम्य-मपि न भवति तदमेरिकाकोटीश्वरस्य दारिद्र्यमेव ।

इदं हि लोके दृश्यते सुभगोपि प्रवागपि शास्त्रविदपि [3]कला-चुञ्चुरपि चारुचर्योपि वित्तविहीनोऽवधायते । परिभवोपहारिणोऽनर्था इत्याहुः । दारिद्र्योपहतास्ते ते तस्य गुणा रजोवकीर्णानि मणिमौक्तिका-नीव शिशिरमथितानि पङ्कजानीव वा न शोभन्ते न चाद्रियन्ते । तथा चोक्तम्—"दारिद्र्यं नाम तिरस्करणी गुणानामि"ति । अर्थनिबन्धनी लोकयात्रेति यावानर्थेऽर्थवति च समादरो लोकस्य न तावानन्यत्रेति व्यवस्थितिः ।

दारिद्र्यं खलु गृहमेधिनो महते दुःखाय कल्पते । भर्तव्यास्तेन पुत्रकलत्रादयः । ते यदि दिनस्य द्विःपर्याप्तं भोक्तुं न लभन्ते, संलीन-कुक्षयः[4] स्तिमितदृष्टयः स्खलद्गतयः परिम्लानाकृतयः [5]संस्रस्तशिरोध-यश्चैतस्य नयनयोरयनं यान्ति, कथङ्कारं स क्षणमपि दिवा [6]निर्वेष्टुमर्हति सुखं नक्तं वा सवेष्टुम्[7] । यदा चायं पश्यतीमेऽनावृतकलेवराः शीतार्ता दन्तवीणां वादयन्ति तदा विदीर्यतेऽस्य हृदयम् । यदा चेक्षते पुत्रको मे

१. चेष्टेरन् । २. उद्युञ्जीरन् । ३. कलया प्रसिद्धः । ४. विलग्नोदराः । ५. पतितग्रीवाः । ६. उपभोक्तुम् । ७. स्वप्तुम् ।

क्रीडनकेषु तृष्यति न चाप्नोति, अधीतये पुस्तकान्यपेक्षते न च लभते, विद्यागृहीतये शुल्कमस्य देयं न च दातुमीष्टे। तदा हा हेत्युच्चैराक्रोशति चिरं चानुशोचति। एवं विषमस्थस्यास्य कुतः समाधिः, कुतस्तरां शान्तिः, कुतस्तमां च भगवद्भक्तिरिति सात्त्विकवृत्तेर्विपरिलोपो दुष्परिहरः।

दारिद्र्यं मनोरथानामतटप्रपात[1] इति च सुवचम्। यदुक्तं कविना—"उत्थायोत्थाय लीयन्ते दरिद्राणां मनोरथाः" स भूतार्थः। "पुलुकामो हि मर्त्यः"[2] इति। दरिद्रस्यापि समुत्पद्यन्ते मनसि कामा यथेतरेषाम्, परमुत्पन्नमात्रा एव प्रलीयन्ते। प्रातिवेश्यस्य मे [3]चक्रयानं वा प्रवहणं[4] वाऽश्वोरसं[5] वा करेणुरत्नं वाऽस्ति तन्ममापि स्यादिति जायतेऽस्यापि संकल्पः, न च फलति। उपेयोपायविरहात्। एवं नानारसानि भोज्यभक्ष्यपेयचूष्यलेह्यान्यास्वदमानं सधनमालोक्याधनस्यापि जायते तर्षः। नहि विरागोऽस्यार्थेषु वैरस्यं वा रसनीयेषु, येनार्थो नास्मै [6]स्वदेरन्। उत्सवेषु धनिकाः शुभ्राणि वसनानि [7]वसतेऽयं तु कन्थाकञ्चुको गेहादपि न निष्कसति[8] सापत्रपः। विदुषां समाजः समवैतीति तत्र गन्तुमुन्मना अपि बहुश्रुतोप्ययं दुर्वेष इति नोत्सहते समवैतुम्।

दारिद्र्यं नाम पराभूतेः परं पदम्। अयं हि पर्यायो मरणस्य। तदुक्तम्—

> जीवन्तोपि मृताः पञ्च श्रूयन्ते किल भारते।
> दरिद्रो व्याधितो मूर्खः प्रवासी नित्यसेवकः॥
> मृतो दरिद्रः पुरुषो मृतं मैथुनमप्रजम्।
> मृतमश्रोत्रियं श्राद्धं मृतो यज्ञस्त्वदक्षिणः॥ इति।

दरिद्रो ह्युपकर्तुकामोपि बान्धवानुपेतः शङ्कनीयो भवति तेषां याचितुमेवायं नः प्राप्त इति। अग्रतः स्थितमप्येनं दौर्गत्यतमसावृतं न पश्यन्ति जनाश्च स्वजनाश्च, परिहरन्ति चाजाधूलिमिव संत्रस्ता मार्जनीरेणुमिव दीपखट्वोत्थच्छायामिव चाशौचभीलुकाः।

---

१. अतटो भृगुः। २. इति श्रुतिः। ३. पुष्परथः = उत्सवादौ मङ्गल्यो रथः। ४. कर्णीरथः = पालकीति भाषायाम्। ५. उत्तमोऽश्वः। 'अप्राणयामुरस' इति टच् समासान्तः। ६. रोचेरन्। स्वदिरन्नार्थेऽकर्मकः। ७. परिदधते। ८. निष्क्रामति।

अन्यत्रापि लोके बहुविधं विडम्ब्यते दरिद्रः । अनागा अप्यागस्वीत्य-
नेना अप्येनस्वीत्यवज्ञायते । उक्तं हि—

शङ्कनीया हि लोकेऽस्मिन्निष्प्रतापा दरिद्रता । इति ।
अभिशस्तं प्रपश्यन्ति दरिद्रं पार्श्वतः स्थितम् ।
दरिद्रं पातकं लोके न तच्छंसितुमर्हति ॥ ( भा० शान्ति ८।१४ )

परस्मिन्नपराद्धेऽप्ययमेवापराद्ध इति मिथ्याऽभिशस्यते । सन्तोऽप्यस्य
गुणा न राजन्ते । तद्यथा-प्राज्ञोऽपि मूढ इति, प्रवागपि मूक इति, प्रतिभा-
न्वितोऽपि निष्प्रतिभ इति, क्रियास्वमन्दोऽपि मन्द इत्यवहेल्यते ।
अर्होऽपि गुरोरधिकारस्याऽविश्वास्य इति नाधिक्रियते ।

बह्वपायं दारिद्र्यमितीहैवाधस्तादुक्तम् । एष च बंहिष्ठोऽपायो[1] दारि-
द्र्यकृतो यद् ह्रीणत्वं नाम । उक्तं च—

दारिद्र्याद्ध्रियमेति ह्रीपरिगतो बुद्ध्या परित्यज्यते । इति ।

यद्ध्रिया परिगतस्य बुद्धिपरित्यागः स महाननर्थः । दरिद्रो हि यथा
परेभ्योऽपत्रपते तथा स्वेभ्यः, स्वेभ्यस्त्वपत्रपतेतरामिति सुवचम् । तेऽप्यस्य
दर्शनं परिहरन्त्ययमपि च तेषाम् इति विवशं विविक्तासनो भवति,
ततश्च बुद्धिरस्य भ्रश्यति विवेकश्च नश्यति ।

इदं चापरमनिष्टं दारिद्र्यकृतम्—अकिञ्चित्करौ कोपप्रसादौ दरिद्रस्य
भवतः । अनीशोऽयं दुर्विधो भवति निग्रहस्येत्यनव[2]ग्रहमपकरोत्येनं जनः ।
नहि कस्यचित्तस्मादरो[3] भवति । विक्लवोयं "बाढं कुपितः किं करिष्यति ।
उत्पतितोपि हि चणकः शक्तः किं भ्राष्ट्रकं भङ्क्तुम् । "पिठरं क्वथदतिमात्रं
निजपार्श्वानेव दहतितराम् ।" इति स्वे क्रोधवह्नौ स्वयमेव शलभायिष्यत
इत्येव परस्तस्मिंश्चिन्तयते । एवं यदि कचित्प्रसीदति दरिद्रः, नहि तावता
तस्यादरो भवति, अनुग्रहेऽप्रभुरसाविति । तदिदमवशत्वमस्य दैन्यं चेत्थ-
मुद्भावयति मृच्छकटिककारः—

पक्षविकलश्च पक्षी शुष्कश्च तरुः सरश्च जलहीनम् ।
सर्पश्चोद्धृतदंष्ट्रस्तुल्यं लोके दरिद्रश्च ॥ इति ।

---

१. हानिः । २. निरर्गलम् । ३. भयम् । ४. भृशम् ।

दारिद्र्यं षष्ठं पातकं भवतीत्याहुः। सत्यं शतधा विनिपतति दारिद्र्योपहतो जनः। "बुभुक्षितः किं न करोति पापं क्षीणा नरा निष्करुणा भवन्ति" इति यदुक्तं तदविप्लुतार्थम्[1]। प्रायेण स्वस्य दौर्गत्यं शिशुजनस्य करुणाक्रन्दं कलत्रस्य च कलहमसहमानोऽधनो जनः पदमपथे समर्पयति क्रूरं च समाचरति। भर्तव्यं मया कुटुम्बकम्, पाल्याश्च कृपणाः शिशुकाः, प्राणाश्च स्वे रक्षणीयाः कथंचिदिति चिन्तयित्वा साधुरसाधुर्वायमभ्युपाय इति चाचिन्तयित्वा प्रवर्तते कर्मसु। [2]कुम्भीलकतां वा [3]पारिपन्थिकतां वा घातुकतां वा प्रतारकतां वाऽऽस्थाय वृत्तिं वर्तयति भर्तव्यांश्च बिभर्ति।

द्विविधा दरिद्राः—एके जात्या दरिद्राः, परे समृद्धपूर्वाः सम्प्रति [4]प्रद्राणकाः। अत्र येऽदृष्टवैभवास्ते न तथा दुःखायन्ते यथा दृष्टनष्टवैभवाः। अमी हि चिरं निर्भरं च [5]कमलया परिष्वक्ता[6] न शक्ताः सहसा तत्परिष्वङ्गसौख्यसन्दोहं विस्मर्तुमिति दशाविपर्यासमनुचिन्तयन्तश्छेखिद्यन्ते नित्यं चात्मानमपध्वंसन्ते[7]। अयमेवार्थः कविनाऽपरथाऽनूदितः—

हृतनयनो हि विषादी न विषादी भवति जात्यन्धः। इति।

इदं चेह नानुपेक्ष्यम्—कश्चिन्महासत्त्वाः केचिद् दारिद्र्यभराक्रान्ता अपि [8]व्यसनशतशरण्यतां गता अपि कथं कथमपि लोकयात्रां निर्वर्तयन्ति न च धैर्यं हारयन्ति, न वा शीलं भ्रंशयन्ति, किन्तर्हि मलीमसां पद्धतिमनादायैवाविरतोद्योगमहिम्ना दारिद्र्यं दरिद्रयन्तः क्रमेणोन्नमन्तः परम[9]मभ्युच्छ्रायमाश्रयन्तेऽथ महीयन्ते। कस्य नाम न विदितो गार्फील्डमहाभागोऽमेरिकाराष्ट्रपतिः। अयं महाभागः कृषीवलकुले जातोऽत्यन्तं दुर्गतयोः पित्रोः सुतोऽभूत्। निसर्गसिद्धाभ्यां प्रज्ञामेधाभ्यामनारतेनोद्यमेनानिर्वेदेन च व्यपोह्य विघ्नविसरं[10] महतामपि माननीयं स्पृहणीयं च सभापतिपदं लेभे सुचरितैश्च "[11]लोकम्पृणैरभ्युदयिकैश्च जगति विश्रुश्रुवे"[12]। इदं "[13]चाकु-

---

1. अविपरीतार्थं सत्यमिति यावत्। २. सन्धिच्छेदकश्चौरः कुम्भीलकः। ३. परिपन्थं तिष्ठति, लुण्टाकः। ४. दुर्गताः। म्लानकुसुमानां मालेव कः। ५. लक्ष्म्या। ६ आलिङ्गिताः। ७. धिक्कुर्वन्ति। 'अपध्वस्तस्तु धिक्कृत' इत्यमरः। ८. व्यसनं = दुःखम्। शरण्यं = रक्षकम्। ९. उन्नतिम्। १०. विसरः समूहः। ११. लोकाप्यायनकरैः। १२. विश्रुतः = प्रख्यातो बभूव। १३. कौतुककरम्।

२ प्र०

तकरं भविष्यति च्छात्राणां यदुतैष विद्याशाले लब्धप्रवेशस्तत्र विद्योपादानेऽवहितचेताः शुल्कादिनिर्मोक्षार्थं वृत्त्यर्थं च परिचारकतामङ्गीकृत्यागारसंमार्गमकार्षीद् घण्टावादनं च । न च दारिद्र्यमशोचीद् दैन्यं वाऽयासीत । तत्रैव विद्यालये पठनं प्रारब्धं तत्रैवाध्यक्षतामलब्धेति दारुणमपि दारिद्र्यं नास्य प्रगतिं विहन्तुमहिष्टेति [१]दिगियं काचित्कस्य प्रकृतार्थव्यभिचारस्य ॥



## ( ५ ) सन्तोष एव पुरुषस्य परं निधानम्

सन्तोषो नाम [२]संनिहितसाधनादधिकस्यानुपादित्सा । अयं सुखदश्चेतोवृत्तिविशेषो नियमानामन्यतमः । शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानीति पञ्च नियमाः प्रकीर्तिताः । सुखार्थी लोको विषयेषु सुखमभिमन्यमानस्तांस्तानभिमतानर्थाननुधावति । नहि तस्य तस्यार्थस्य सम्प्राप्तिरायासमन्तरेण सुशका भवति । न केवलं शारीरः परिखेदः परिणमति, मानसोऽपि । तं तमर्थं गवेषयतः[३] पुंसः सर्वमायुः क्षीयते, इतश्चेतश्च धावतः परा [४]पारिप्लवता जायते, चिन्ता च महती सन्तायते[५], [६]आमनस्यं चातिवेलं[७] संवर्तते[८] ।

कश्चिदाह—सन्तोषो नाम चेतसः स्वास्थ्यमसन्तोषश्च विकार इति । अपर आह—यदि यन्मेऽभिरुचितं तन्मे नास्ति तदा यन्मेऽस्ति तदेव मयाऽभिरोचनीयमित्यापद्यते । एवमेव सुखितः स्यां विपर्यये त्ववस्थितं मे दुःखमिति ।

प्रकृते सन्तोषः पुरुषस्य परं निधानमित्युक्तम् । तत्कस्मात् ? यस्मान्निधानान्तराणि क्षयीणि, सन्तोषरूपमेव निधानमक्षय्यं तस्मात्परमिति व्यपदिश्यते । 'क्षयान्ता निचयाः सर्वे' इति च पूर्वे सूरयः । तत्त्वविदामपश्चिमः सुकरातोऽप्याह—सन्तोषः सहजमैश्वर्यम् , [९]सुखाहरणमहार्हवस्तुविनियाकृता कृत्रिमा [१०]निःस्वतेति ।

---

१. उदाहरणम् । २. संनिहितानि साधनान्यस्येति बहुव्रीहिः । अर्थोऽन्यपदार्थः । ३. अन्विष्यतः । ४. चञ्चलता । ५. सन्तन्यते । ६. दुःखं=वेदना । ७. भृशम् । ८. सम्पद्यते । ९. सुखस्याहरणम् , करणे ल्युट् । १०. दरिद्रता ।

इदमिह विज्ञेयं नहि विषयैषिणस्तत्तदर्थसंग्रहाक्षमस्य [1]कामिते तस्मिंस्तस्मिन्नर्थे दुरापे विज्ञातेऽम्ला द्राक्षा इति ब्रुवाणस्य संतोषो नाम कश्चिदस्ति । तैस्तैरनासादितैरर्थैः पर्याकुलचेतसस्तस्य न क्वचित्पर्यवस्थानमस्ति, कुतो निर्वृतिविशेषः सन्तोषशब्दाख्येयः । यस्तु महाभागः समर्थोऽप्यर्थोपार्जने—

यावता ध्रियते जठरं तावत्स्वत्वं हि देहिनः ।
अधिकं तु समागृह्णन्स नरः स्तेन उच्यते ॥

इति पुराणोक्तं प्रमाणयन्

अर्थानामर्जने दुःखमर्जितानां च रक्षणे ।
आये दुःखं व्यये दुःखं धिगर्थाः कष्टसंश्रयाः ॥

इति च तन्त्रकारवचनं श्रद्दधानोऽर्थसंग्रहं च क्लेशबहुलमापातरमणीयं परिणतिविरसं च मन्वानो यावदपेक्षमेव चाददानो विरतिस्वभावः स सन्तोषभाक् नेतरः ।

नहि निश्चेष्टतापरपर्यायः सन्तोषो नाम । सन्तोषो हि परितोषश्चेतस इत्युक्तं पुरस्तात् । स च निश्चेष्टेन दुरापः । 'शरीरयात्रापि च ते न प्रसिध्येदकर्मण' इति भगवदुक्तेरत्यन्तापेक्षितस्य [2]कशिपुनोऽपि[3]वैधुर्यादपरिहार्यं तस्यामनस्यम्[4] । न चाहिंसासत्ये अजुषमाणस्य[5] भवति सन्तोषः, तस्य दण्डार्थमपि सेवनसंभवात् । 'यमान्पतत्यकुर्वाणो नियमान्केवलान्भजन्नि'ति मनूक्तेः ।

इह लोके नहि [6]कश्चिद्धिषणाधिषणोपि पुरन्दरपराक्रमोपि सर्वमर्थं जगति वर्तमानं प्रतिपत्तुमीष्टे । यत्रार्थेऽनीशोपि समीहते तत्रात्मानं दुःखेनैव योजयते न सुखेन । तत्राशक्यार्थे व्याध्रियमाणस्यास्याधीयते[7] मनो [8]व्याधीयते च शरीरम् । इदं च परिस्फुटमुपलभमानः कश्चिदन्तस्तुष्टो गायति जात्यन्धः किशोरः—

अशक्यमिष्टं मयका यदाप्तुं तन्मा स्म हार्षीन्मनसः प्रसादम् ।
कामं दरिद्रो जतुषान्ध एव बालस्तु गायन्प्रमना नृपोऽस्मि ॥[9]

---

१. कर्मनिष्ठायां रूपम् । २. अन्नाच्छादनयोः । ३. विरहात् । ४. आमनस्यं मनःपीडा । ५. असेवमानस्य । ६. बृहस्पतिप्रज्ञोऽपि । ७. पीड्यते । ८. रुग्णो भवति । ९. सिद्धरकवेर्वचनं संस्कृतेनानूदितम् ।

सन्तुष्ट एव सुखी नेतरः । 'सन्तोषमूलं हि सुखं दुःखमूलं विपर्यय' इति मनोः स्मरणात् । योऽसन्तुष्टोऽनाशुतुष्टो वा स्यात्स्यादेव स परवान् । महती खल्वस्यार्थव्य[1]पाश्रयणेति तं तं सहायं समाश्रयते, तत्तदायत्तश्चास्य सुखानुभवो भवति । यः किल परायत्तस्तस्य कुतः सुखमिति सम्मर्शिनः शास्त्रे पठितिनः । 'परायत्तः प्रीतेः कथमिव रसं वेत्तु पुरुष' इति च कवि-वचनम् । यश्चानेकत्रार्थेषु संगृहीतेषु सुखं मृगयते तस्य नैकत्रापि सुखमिति महाननर्थः । यस्मात्केषुचन सङ्गृहीतेष्वप्यर्थेषु तस्य सन्त्यसंगृहीतान्य-र्थान्तराणीति कण्टकानुवेधोऽस्य भवति । यावदनपेक्षिता अनात्मनीना-श्चार्था इति बुद्ध्या नापविद्धाः[2], यावच्च तनुनाऽऽयासेन संगृहीता एतावन्त एव मे पर्याप्स्यन्तीति बुद्धिर्नोदिता ।

इदमत्र तत्त्वम्—सन्तोषो नाम वाञ्छाविच्छेदनं न । तत्र तु परमार्थे प्रबुद्धाः कर्मयोगिण[3] एवाधिकृताः । अल्पोपकरणतायां महोपकरणताया-मिवाभिरतिर्निर्विशेषः सुखनिर्वेशो वा सन्तोष उच्यते । यदि मे प्रातिवेश्यः काञ्चनीं शय्यामधिशेते कौशेयोपधान श्रयते, पत्रोर्णं[4] वस्ते, महानिकेते [5]केतयते, रुच्यं पयोदधियुतं च भोज्यं भुङ्क्ते तदाहं खट्वायां बाहुमुपधाय किं नालं निद्रातुम् । किं वा गाढेन वाससा[6] संव्याय गात्रं कुटीरमावसन्पञ्च-मेऽहनि षष्ठे वा शाकं पचन्न पारयामि शरीरं यापयितुमित्येवं स्वायत्तः कश्चित्सुधीर्निरतिशयं सुखं समश्नुतेऽक्षयं च । न चाधिकाधिकं सुखोप-करणमिच्छन्कश्चित्परमार्थतः सुखी भवति । कश्चिद्विपश्चिद्युक्ततममाह—यत्र विधिः किरीटं न वितरति तत्र सन्तोषस्तद् वितरतीति ।

असन्तोषश्चिन्तामणिरिति मनीषिणः । सन्तुष्टो जनः सर्वा व्यापदः सम्पद्रूपेण परिणमयति सर्वानलाभांश्च लाभरूपेणेत्यद्भुतमिव करोति । नहि दशापरिवर्तोऽस्य खेदाय भवति । दारिद्र्यं वाऽऽमयो वाऽऽशा-भङ्गो वाऽपायो वा नास्य मनःप्रसादमाविलयितुं सहते । अयं ह्यात्मना तुष्टो न परस्याभ्युदयायेर्ष्यति, न च परत्र गुणोत्कर्षाय वाऽभ्यसूति । यो हि यद्वेधा मदर्थं वृणुते तद्वरीयो न पुनर्यदहं वृण इति प्रतिपन्नः, यदेव

१. वाञ्छा । २. न त्यक्ताः । ३. कुमति चेति नित्यं णत्वम् । ४. कौशेयम् । ५. कित निवासे चुरादिः । ६. आच्छाद्य ।

विधात्रा विधीयते तदेव शुभायेति वाऽऽस्थितः स न क्षुभ्यति घोरास्वपि व्यापत्सु ;

सहज एव गुणः सन्तोषो नाम कस्यचिद्द्विप्रादेर्भूयान्भवति सन्तोषो वश्यादेस्त्वल्पीयान् । तथापि शक्योऽयमेधयितुं वैश्यादिनापि । य इच्छे-त्सन्तोषो मे भूयान्स्यादिति स आत्मानमनुयुञ्जीत य इमेऽर्था मम सन्ति त इमे किं यावन्तो मयाऽपेक्ष्यन्ते तावन्त एव, ततो न्यूना अतिरिक्ता वेति । बहुशः स उपलप्स्यते निपुणं परीक्षमाणः सम्प्राप्ता मया क्षेमप्र-कल्पका अर्थाः, नातोऽतिरिक्ता अपेक्ष्यन्त इति ।

यदा च विघ्नोऽपरिहार्यो व्यापद् इति तदा नार्थस्ताभिर्विषण्णा निर्विण्णा वा भवेमेति । अस्माभिः पुनरीश्वरानुग्रहोऽभ्युपगन्तव्यस्ततः कष्टतरा नोपनता इति । उच्-देशवास्तव्यस्य कस्यचित्पोतस्य गुणवृक्षका-न्निपतितस्य जङ्घाभङ्गोऽजनि तदा दुःखे विषादे वाऽनुभवितव्ये स पर्य-तुष्यदात्मानं च धन्यमवदद् ग्रीवा मे न क्षतेति । अयं हि सर्वावस्थागतस्य पुरुषस्य चेतसः प्रसादः परितोषः, यस्य षोडशीमपि कलां न स्पृशतीन्द्रि-यार्थसन्निकर्षजन्यं सुखान्तरम् । तस्मात्साधूक्तं सन्तोष एवेति ॥

## ( ६ ) कुशो कस्यास्ति सौहृदम्

यः कृशस्तेन समं लोको मैत्र्यं नेच्छत्यन्याय्यं च तत्राचरतीति प्रति-पाद्यो विषयः । कृशो हि बहुविधो भवति । कश्चिच्छरीरेण[1] कृशः परो [2]बन्धुतया कृशोऽपरोऽर्थेन कृशः, इतरः प्रज्ञया कृशः, कश्चनापरश्च मनसा कृशः कातरः । उक्तं च—

> यः कृशार्थः कृशगवः कृशभृत्यः कृशातिथिः ।
> स वै राजन्कृशो नाम न शरीरकृशः कृशः ॥

अत्र शरीरेण कृशस्य सापह्नवोऽङ्गीकारः । शरीरकार्श्यं कार्श्यान्तरेण

---

१. शरीरेणेत्यादिषु सर्वत्र 'प्रकृत्यादिभ्य उपसंख्यानमि'ति तृतीया । तथा च प्रयोगः—"यदा तु स्यात्परिक्षीणो वाहनेन बलेन च । तदासीत प्रयत्नेन शनकैः सान्त्वयन्नरीन् ॥" (मनु० ७।१७२ ) २. बन्धूनां समूहो बन्धुता । तया ।

समकक्षं नेत्येव विवक्षितम् । अपरविधमपि कार्श्यं भवतु नाम, नेह परिगणनमिष्यते । कृशे कस्येत्युक्तिर्यथा व्यष्टिविषयिणी सत्या तथा समष्टिविषयिण्यप्यदृष्टव्यभिचारा ।

लोको हि प्रायशः स्वार्थमनुसन्धाय मित्राणि करोति, यतः स्वार्थसिद्धिमुत्प्रेक्षते तत्रैव साम्मुख्यं धत्ते, वैमुख्यमितरत्र । निष्कारणः प्रेमा तु दुरापः । तेन ह्यर्थादापद्यते साधनसम्पन्नैरुपकरणक्षमैर्बहुबान्धवैः प्राज्ञैर्मैत्री, स्नेहरसानुस्यूतः संसर्गो वा । कृशस्य तु सर्वत्र परिहारः । नहि तेन कश्चित्संसृज्यते, अप्रयोजकस्तेन संसर्गः । न वा तस्य साहायकमाचरति, अप्रभुरसौ प्रतिसाहायकायेति । य आत्मना समर्थस्तस्य परेऽपि सामर्थ्यमधिकमुपजनयन्ति, योऽसमर्थस्तं विहिंसन्तीत्यचेतनेष्वपि दृश्यते । एतदेवोदाहरति कविः—

> वनानि दहतो वह्नेः सखा भवति मारुतः ।
> स एव दीपनाशाय कृशे कस्यास्ति सौहृदम् ॥

अनुदिनमनुरथ्यमधिपथमनुविपणि वा [1]व्यतिकरानीदृशानालोचयामो यैः कविभणितमिदमुपोद्बलितम्भवति । तद्यथा—यदि कश्चिद् धनिको वणिक् क्रेतारं प्रतारयति, स चेत्क्रेताऽधनो ग्रामीणो वाऽसहायः कृशाङ्गो नागरो वा भवति, तदा विपणिस्था अन्ये वणिज आगन्तवः पौराश्च तमेवापणिकं समर्थयन्ते, तस्य न्याय्याचारतां च प्रख्यापयन्ते, बहुविधं च तं क्रेतारं तर्जयन्ते—भो देवानां प्रिय ! किं न वेत्थ श्रियामीशिता, लोकस्य दुर्गतस्य समुद्धर्ता, विद्वज्जनस्य संभावयिता वदान्यतया च वन्दनीयतां गतो महाजनोऽयं त्वया मिथ्याभिशस्यते । अहो ते धार्ष्ट्यम्, अहो विवेकवैधुर्यम्, अहो [2]राभस्यम् । धिक् चापलम् । [3]अपध्वंस प्राणांश्चेदिच्छसि सुरक्षितान् । यदि कस्यचिद् धनिकस्य सूनुरपरेण दरिद्रसूनुना पांसुषु संक्रीडमानः[4] कलहायते, दरिद्रसूनुमाक्रोशति[5], तमवताडयति, वाससी वा तस्य दारयति तर्हि दरिद्र एवोपालभ्यते धनिकेन स एव

---

१. वृत्तान्तान् । २. वेगः, क्षिप्रकारिता । ३. ध्वंसतेर्गतिरप्यर्थः । आत्मनेपदं त्वनुदात्तेत्त्वलक्षणमनित्यमिति न कृतम् । शिष्टव्यवहारोऽप्यत्रानुकूलः । ४. क्रीडोऽनुसंपरिभ्यश्चेति तङ् । ५. अपवदति, शपति ।

निन्द्यते प्रतिवेशिजनेन। नहि कश्चन तस्य धनाढ्यस्य कदाचारं गर्हते।

एवमचौरा अपि निःस्वाश्चौरा इत्यभियुज्यन्ते, रक्षिभिः प्रगृह्यन्ते, बहुविधमवहेल्यन्ते, धनिकास्तु चौर्यमाचरितवन्तोपि नाभिशङ्क्यन्ते, साधव इम इति च सुष्ठु समाद्रियन्ते।

यश्च दुर्बल एकको वा तं बलिनो बहुबन्धवो वा कृशं काशं वाऽऽलम्ब्य कदर्थयन्ति, तं विगृह्णन्ति, प्रकामं चाभिभवन्ति, न चेतरे तस्य सहाया भवन्ति। महद् इदं पापकं यद् दौर्बल्यं नाम। दुर्बलो हि विडम्ब्यते सपलेन। ऊनं हि बाधतेऽधिकः। इदं चानुदिनमध्यक्ष्यते रेलयानेषु। सत्यप्यवकाशे दुर्बलाः प्रवेष्टुं न लभन्ते, सति च जनसम्बाधे प्रबलैः प्रणुद्यन्ते, बहुविधं चाक्षिप्यन्ते। प्रसिद्धश्चैतल्लक्षणो बहुलो व्यवहारो दुर्बलेष्विति नेह वितन्यते। सबलांस्तु सादरं पार्श्वे करोति लोको बहु च मानयति। मित्राणि च करोति।

यः खलु प्रज्ञया कृशो हिताहिते प्रविवेक्तुमनर्हस्तं वञ्चयन्ते जनाः प्रज्ञया बलवन्तः, तस्य बालिश्यमुपजीवन्ति, तमुत्पथेन नयन्ति, तमुत्सादयन्ति। यत्सत्यं सुमेधोभिः सर्वत्रोपभुज्यन्ते दुर्मेधसः।

यश्च मनसा कृशो मानसिकेन सत्त्वेन हीनः कातरः स वपुष्मानपि दुर्बलः। शारीरं बलं न तस्य किमप्युपकरोति। बालोपि सत्त्वेनोपस्कृतो निःसत्त्वं भीलुकं युवानं विप्रकरोति विविधं चोपद्रवति। धैर्यं हि दूरेणातिक्रामति शारीरं बलम्। इदं हि सत्तमं सामर्थ्यं मनुष्याणाम्। धीरस्य लोकः सहायो भवति नाधीरस्य। अधीरस्तु बहुतृणं[1] भवत्यवज्ञायते च।

यथा दुर्बला व्यक्तयो व्यवह्रियन्ते तथा समष्टयोऽपि। इदं नु कस्य न विदितं यदुत हरिवर्षद्वीपे[2] वासिभिराङ्ग्लैरितरैश्च सम्भूय तत्र तत्र दक्षिणाफ्रीकायां, दक्षिणामेरिकायाम्, ईथोपियायाम्, इण्डोनीशियायाम्, इतरत्र चोपनिवेशेषु सामुद्रेषु च तत्तद्वास्तव्या मौल्यः प्रजाश्चिराय सुष्ठु कदर्थिताः समुज्जासिताश्च। याश्चाल्पाः परिशिष्टास्तासां संव्यवहाराद्

१. बहुच्-प्रत्ययः। तृणप्राय इत्यर्थः। २. 'शयवासवासिष्वकालादि'ति सप्तम्या अलुक्।

बहिष्कारः, पाठालयेषु सङ्घशालेषु च प्रवेशप्रतिषेधः, दारक्रियायां चानर्हता, संस्कारोपस्थानेषु च परिहार्यता व्यवस्थापिता। येन परास्ता इव शिष्टविशिष्टसमाजेन, परिहृताः प्राप्तसंस्कारजननिवहेन, विडम्बिता अवधीरिताश्चागन्तुकेन गौराङ्गसङ्घेन ताः सन्तमसे[1] निलीना नाङ्गिनि न चाङ्गेषु मनागपि विकासं लभन्ते, पशुवृत्तिं च नातिवर्तन्ते, शनैः शनैश्चास्तमयन्ते। इत्थं साधु निदर्शितं भवति लोकोऽयं दुर्बलं न सहतेऽपि तु [2]प्रसहते। अतः सुष्ठूक्तं कृशे कस्यास्ति सौहृदमिति॥

## (७) सर्वंकषा भगवती भवितव्यतैव

यदा वयं रामस्य प्रव्रजनं बलेर्नियमनं हरेर्महाहिशयनं हरस्य च वृषारोहणं भिक्षाटनं च [3]परिभावयामस्तदा विधिर्बलवानिति सहसोच्चरन्ति वाचो मुखान्नः। प्राणिमात्रस्यानुग्रहनिग्रहयोः प्रभुस्त्रैलोक्यनाथस्तावच्छ्रीरामः नायं यो वा को वा प्राकृतः पूरुषः, तत्रापि विरिञ्चिसुतो भगवान्वसिष्ठोऽस्य पुरोधाः, तेन च सुविचिन्त्य निर्दिष्टोऽभिषेकस्य पुण्यो मुहूर्त्तः, तत्र चारब्धाः ससंभ्रमं[4] सोत्साहं च संभाराः। परं कृतेष्वाभिषेचनिकेषु[5] तेषु तेषु संभारेषु क्रियोद्यतेषु वसिष्ठप्रभृतिष्वृत्विक्षु समवेतासु प्रकृतिषु[6], नन्दन्तीषु च प्रजासु मन्थराप्रचोदितया कैकेय्या महाराजो भरताभिषेचनं प्रार्थितो रामस्य च प्रव्राजनमेवेति सज्जितः सर्वो विधिर्विसंवादितः। ततश्चाकृताभिषेक एव रामः ससीतः सलक्ष्मणो वनं प्रपेदे, तद्विरहविधुरो[7]ऽधृतिपरीपः [8]कश्मलमुपगतः श्रीदशरथश्च व्यापेदे सीता च जह्रे दशाननेनेति महती खल्वनर्थपरम्परोपनताऽभूत्। इयं च दैवकृता, नान्यकृतेति कः सुधीः सन्दिहीत। तथा हि—

> असङ्कल्पितमेवेह यदकस्मात्प्रवर्तते।
> निवर्त्यारब्धमारम्भैर्ननु दैवस्य कर्म तत्॥ इति।

तथा भक्तवत्सलो भुक्तिमुक्तिप्रदः [9]सुकृतामुद्धारयिता, दुष्कृतां च

---

१. गाढे तमसि। २. अभिभवति। ३. चिन्तयामः। ४. सवेगम्। ५. अभिषेचनप्रयोजनेषु। ६. अमात्येषु। ७. शोकनिमग्नः। ८. मूर्च्छाम्। ९. पुण्यकृताम्।

न्यग्भावयिता, श्रियः पतिर्भगवांश्चक्रपाणिरपि मध्येक्षीरार्णवं शेषमधिशेत इति दैवमाहात्म्यं विमृशन्तो विस्मयेन परवन्तो भवामः । एवं च सर्वमहान्भगवान् पिनाकपाणिर्यस्मिन्नीश्वर इति शब्दो यथार्थाक्षरोऽनन्यविषयश्च, योऽणिमाद्यष्टसिद्धियुक्तो युक्ततमो यतीनामुत्तमश्चेति नीयते, यस्य सर्वमङ्गलारम्भेषु गेयो विघ्नराजः सुतः, यस्य च [1]सर्वधनी राजराजः स्निग्धः सखा, सोपि दीन इव वृषभवाहनो विवसनोऽनिकेतनः [2]पितृसद्मैककेतनो भिक्षाशनश्चेति विधिरेव बलिनां बलिष्ठ इति निश्चिन्मः ।

यदा चेह पश्यामः सन्तः सीदन्त्यसन्तश्च नन्दन्ति, कृपणा ईश्वरतां भजन्ते वदान्याश्च दीनताम्, मन्दाः समृध्यन्ति प्राज्ञाश्च व्यथ्यन्तीति तदा नियतिः प्रभवतीति दृढं प्रतीमः । यत्सत्यं ललाटरेखाप्रमार्जनेऽनीश्वराः सामर्थ्यवन्तोऽ[3]प्यागन्तवोऽर्थाः । यदुक्तम्—

> लक्ष्मीकौस्तुभपारिजातसहजः सूनुः सुधाम्भोनिधे-
> र्देवेन प्रणयप्रसादविधिना मूर्ध्ना धृतः शम्भुना ।
> अद्याप्युज्झति नैव दैवविहितं क्षैण्यं क्षपावल्लभः-
> केनान्येन विलङ्घ्यते विधिगतिः पाषाणरेखासखी ।। इति ।

नियतो भोगः प्राणिनाम् । तदिदं नैयत्यं दैवनिबन्धनं नान्यनिबन्धनम् । समुद्राम्भसि वा मज्जतु, सुमेरुशिखरं वा गच्छतु, क्षितितलं वोत्खनतु, गिरिधातून्वा धमतु, मन्त्रं वा शप्नोतु, परं तावदेव च प्राप्नुयान्नरो यावदस्य भाग्यनियतम् । न [4]ह्यभियोगमनुसरन्ति धनानि दृष्टानि । येन व्यतिरिक्तेऽभियोगे व्यतिरिक्तानि लभ्येरन् । यावानस्याभियोक्तुर्भोगस्तावत्यर्थसम्प्राप्तिः । तदुक्तं कविना—

> कूपे पश्य पयोनिधावपि घटो गृह्णाति तुल्यं जलम् । इति ।

किं च यत्र यत्ननिरपेक्षा सुलभा सम्प्राप्तिरिष्टार्थस्य भवति तत्रापि कस्यचित्पराघृत्तभागधेयस्य[5] सा न दृश्यते । तथा चोक्तम्—

> सर्वाशापरिपूरके जलधरे वर्षत्यपि प्रत्यहं-
> सूक्ष्मा एव पतन्ति चातकमुखे द्वित्राः पयोबिन्दवः ।। इति ।

---

१. सर्वादेश्चेति वक्तव्याद्विनिर्मत्वर्थीयः । २. पितृसद्म = श्मशानम् ।
३. अनित्या बाह्याः । ४. यत्नम् । ५. पराधीनदैवस्य ।

यस्य खलूपस्थिता विपद् दुःखं वा भोक्तव्यमस्ति नहि ततो निर्मोक्षः सुदूरं गतस्यापि । उक्तं च हरिणा—

खल्वाटो दिवसेश्वरस्य किरणैः सन्तापितो मस्तके
इच्छन्देशमनातपं विधिवशात्तालस्य मूलं गतः ।
तत्राप्यस्य महाफलेन पतता भग्नं सशब्दं शिरः
प्रायो गच्छति यत्र भाग्यरहितस्तत्रैव यान्त्यापदः ॥ इति ।

इह लोके सर्वं कार्यं कारणपूर्वकम् । नेह किञ्चिद् यादृच्छिकमस्ति । यत्र क्वापि कारणं वा हेतुर्वाऽप्रतर्क्यो दुरुन्नेयो वा भवति तत्र यदृच्छेति व्यवहारो लौकिकानाम् । तदिदमसामर्थ्यं प्रतिपत्तॄणाम् । वस्तुतस्तु तत्तत्कर्मसिद्धौ दैवमन्तरायो भवति । दैवेन पौरुषमन्तर्यते । यथोक्तं भाष्यकारेण—समानमीहमानानां केचिदर्थैर्युज्यन्तेऽपरे नेति । कश्चिद्वैगुण्यं वैकल्यं वा परिहृत्य प्रसाधयितुमीहते कर्माणि न च सिद्धिमेति । परीक्षां प्रविष्टानां सुष्ठूत्तरितप्रश्नानां सतीर्थ्यानां कस्यचिदेकस्योत्तरपत्राणि नश्यन्ति परीक्षकमहाभागस्य हस्ताभ्याशं च नैव गच्छन्ति । स चैतस्य हेतोरनुत्तीर्णः परीक्षामित्युद्घुष्यते । कामं कस्यापि नियोगिनः प्रमादोऽत्र पत्रविनाशे हेतुस्तथापि तस्यैव च्छात्रस्य सोऽभून्नेतरस्येत्यत्र [1]दिष्टमन्तरा कोपपत्तिः ।

किं च सर्वाभिभावि प्रभुत्वं दिष्टस्य । प्रतिकूलं हि दिष्टं बुद्धिं विपर्यासयति महतो महीयसोपि पुंसः सहेलं विनिपातं समुत्सादं च साधयति । उक्तं च—"यं देवा इच्छन्ति विनश्येदयमिति नहि तं दण्डमादाय घ्नन्ति बुद्धिं तस्य हरन्ति वै" । कस्य नाम न विदितः शर्मण्यदेशनायको महाप्रभावो हिटलरः । अयं ह्यभ्रविनिर्गत आदित्य इव प्रतापवान्परप्रतापमसहिष्णुरमितोत्साहः साहसैकतनुरहार्यनिश्चयो धूमकेतुर्वाऽन्तको वा [2]निर्ऋतिर्वा भूतानामुपसर्गाय[3] विनाशाय च समुत्थितोऽभूत् । शिखरिणोऽप्यस्मात् समत्रस्यन्, सरितः सागराश्चाक्षुभ्यन्, भूभागाश्च [4]व्यह्वलन्, अनेन दारुणसमाचारेण प्रारब्धे महति सम्पराये वातरंहसेव [5]विषयाद् विषयं गाहमानैः [6]शाम्बरीप्रवीणैरपरैर्नैर्ऋतै[7]रिवास्य सैनिकैः प्रमथितानि परानी-

---

१. दैवम् । २. विनाशदेवता । ३. उपद्रवाय । ४. ह्वलते र्भौवादिकात्स्वलङि रूपम् । ५. देशात् । ६. माया । ७. राक्षसैः ।

कानि, मृद्रेदं भिन्नानि दुर्गाणि, अग्निवर्षेणाभिवृष्टानि विद्युत्प्रपतनोज्ज्वासितानीव परराष्ट्राणि स्वायत्तीकृतानि विविधं च कदर्थितानि। अवशिष्टानीतराणि प्रतियोद्धुमक्षमाणि सर्वभ्रंशभयाद् वृत्तिं वैतसीं संश्रितानि। एवं च प्रत्यभादव्याहतगतिर्जिष्णुरेष हिटलरः कृत्स्नामिमां महीं ससागरां सशिलोच्चयां जेष्यत्येकातपत्राङ्कां च शासिष्यतीति। परं नैषा भवितव्यताऽभूत्। दैवमस्य सहायं नाभूत्। व्यामुह्यदस्य धीः। अवसन्नंमन्यमनुक्षणं त्रस्यन्तं मरणमेव वा प्रतिपालयन्तमाङ्ग्लदेशमनाक्रम्य युद्धाय सन्नद्धः स्फीतो महान् रूसदेशस्तेन [1]प्रार्थितः। चिराय च तत्र लोमहर्षणं महज्जन्यमजनि कदनं चोभयोः सेनयोः। तत्र जिताहवस्य हिटलरस्य शूरतमाः संशप्तका[2] योद्धारो विक्रान्तवद् युध्यमाना अपि नाजिमजयन्, तत्रैव चोत्क्रान्तजीविता अभवन्। तदनु [3]जितकाशिभिः समिद्धोत्साहैः रूससैनिकैः शर्मण्यदेशस्तरसाऽऽक्रान्तो विजितश्च। हिटलरश्चा[4]भिषङ्गमसहमानः स्वयमेवात्मानमहिंसीत्। एतादृक्षमेव वृत्तमधिकृत्य कविना माघेनोक्तम्—

हतविधिलसितानां ही विचित्रो विपाकः। इति।

अति हि विधेरायत्तः पुरुषः। यस्सत्यं देविता विधिर्भुवनफलके प्राणिशारैः क्रीडति, कांश्चिदवाचः पातयति, कांश्चिदुत्तानान्। आश्चर्यमेष्यन्तमनर्थमनुविदधतीन्द्रियाणीति। तद्यथा तमेवार्थं वाग्व्याहरति यो व्याहृतः सम्भाविनमनर्थमितोऽभित्वरयति। तथाहि भरतमुनिकृते लक्ष्मीस्वयंवराख्ये नाटकेऽभिनीयमाने तेषु तेषु रसेषु तन्मयी लक्ष्मीभूमिकायां वर्तमानोर्वशी वारुणीभूमिकायां वर्तमानया मेनकया पृष्टा— सखि! समागता एते त्रैलोक्यपुरुषाः सकेशवा लोकपालाः। कतमस्मिंस्ते भावाभिनिवेश इति। ततस्तया पुरुषोत्तम इति भणितव्ये पुरूरवसीति निर्गता वाणी। तेनाभिक्रुद्धो गुरुस्तामभिशशाप-यस्मात्त्वया नानुविहितो ममादेशस्तस्मान्न ते दिव्यं स्थानं भविष्यतीति। ततः साऽधस्तादुगता मर्त्यलोकम्।

---

१. अभियातः। २. 'संशप्तकास्तु समयात्संग्रामादनिवर्तिनः'। ३. जिताहवैः। ४. पराभवञ्च।

इदं लक्षणं भवितव्यतानुविधायित्वमिन्द्रियाणां रामायणेऽपि शक्यं निदर्शयितुम् । सीतार्थं कनकमृगमनुधाविष्यन्रामो वत्स लक्ष्मण ! अवेक्षस्व सीतामित्युक्त्वा प्रायात् । प्रयाते तस्मिन् मारीचेन हा सीते हा लक्ष्मणेति रामस्वरानुकारी शब्दः संविहितः । तं निशम्य सीता लक्ष्मणं प्रचोदयन्ती निराह—वने विषमपतितं[1] भ्रातरं त्रायस्वेति । यदा च लक्ष्मणः—

न्यासभूतासि वैदेहि न्यस्ता मयि महात्मना ।
रामेण त्वं वरारोहे ! न त्वां त्यक्तुमिहोत्सहे ॥

इत्यवोचत्तदा तदभिप्रायमन्यथा गृह्णती क्रोधताम्रा जानकी परुषाक्षरमिदमगादीत्—

अनार्यकरुणारम्भ नृशंस कुलपांसन ! ।
अहं तव प्रियं मन्ये रामस्य व्यसनं महत् ॥
सुदुष्टस्त्वं वने राममेकमेको नु वर्तसे ।
मम हेतोः प्रतिच्छन्नः प्रयुक्तो भरतेन वा ॥ इति ।

एतदाकर्ण्यासहमानः सौमित्रिर्धिक् त्वां विनश्यन्तीं यन्मामेवं विशङ्कसे इत्युदीर्य निरगात्कुटीरात् । निर्गते च तस्मिन्नेकाकिनीमसहायां सीतां बलाज्जहार पौलस्त्यः । यदि सीताऽप्रतिरूपमनार्यमिदं वचो नावदत्तदा नेमां घोरां विपदमाप्स्यत् । सौमित्रेः शुचिशीलतां रामे च भक्तिमत्तां विजानत्यपि जानकी यत्तस्य चारित्रमशङ्कत मर्मस्पृशो वाचश्चावोचत तद्विधेः[2]प्राभवत्यं नाम ।

दैवे[3]पराचि बुद्धिर्विपर्यस्यति विवेकश्च भ्रश्यति पुंसामित्युक्तप्रायमपि भूयो वैशद्याय कविभणितिभिर्निदर्श्यते—

पौलस्त्यः कथमन्यदारहरणे दोषं न विज्ञातवान्
रामेणापि कथं न हेमहरिणस्यासंभवो लक्षितः ॥
अक्षैश्चापि युधिष्ठिरेण सहसा प्राप्तो ह्यनर्थः कथं
प्रत्यासन्नविपत्तिमूढमनसां प्रायो मतिः क्षीयते ॥

वहौ विशुद्धामपि जानकीं तां जहौ वनान्ते किल रामचन्द्रः ।
सा किं न शुद्धा स च किं न वेत्ता बलीयसी केवलमीश्वरेच्छा ॥ इति ।

---

१. संकटे पतितम् । २. प्रभवतो भावः प्राभवत्यम् = प्रभुता । ३. पराङ्मुखे ।

अप्रतिविधेयो विधाता । अस्मिन्वामे सर्वं स्वमर्थजातमपार्थकं भवति गुणग्रामश्चाकारणतां यातीति कविवचसोदाहृत्योपसंहरामो विषयम्—

अकारणं सत्यमकारणं तपो जगत्त्रयव्यापि यशोऽप्यकारणम् ।
अकारणं रूपमकारणं गुणाः पुराणमेकं नृषु कर्म कारणम् ॥
ज्वलन्ति वारीणि तपन्ति रात्रयो रवेर्न कुर्वन्त्यवलोकमंशवः ।
वहन्ति नः कर्मविपाकचोदिताः फलद्रुमा अव्यवकेशिनां[1] व्रतम् ॥ इति ।



## ( ८ ) संसर्गजा दोषगुणा भवन्ति

संसर्गशीलो मानवः । अवश्यमेव संस्रष्टव्यं तेन सता ऽसता वावा । इयं च संसर्गशीलता न केवलमविद्योपहतेषु जीवेषु परे ब्रह्मण्यप्यभिलप्यते शास्त्रकारैरारोपसमाश्रयेण । तदुक्तम्—'तदैक्षत, एकोहं बहु स्यां प्रजायेय' इति । सर्वो जनो विदुरो[2] वाऽविदुरो वा समाहितोऽसमाहितो वा नात्यन्ताय [3]वैजन्यमभिरोचयते । येऽपि प्रव्रजिताः प्रायेण विविक्तासना अरण्यौकसस्तोऽपीतरैर्मानुषैरुपश्लेषं कामयन्ते मुहूर्त्तकं वा घटिकां वा । मानुष्यकमतिवृत्ता देवत्वमाप्ता आश्चर्यभूताः केचनाविर्भूतब्रह्मप्रकाशा एवात्यन्तं विविच्यन्ते[4] स्वात्मन्येव च रमन्ते । परे तु सम्पादितसुकृतसन्दोहा अवदातचर्याः सुमेधसोपि नात्यन्तिकं संसर्गविच्छेदं सहन्ते, बलाच्चैकान्तेबद्धा नचिरेणोन्मायन्तीति विनिगमना[5] संसर्गशीलतायाम् । एवमवश्यम्भाविन्यपरिहार्ये संसर्गे-तन्निमित्तो गुणदोषसंक्रमो भवति । सद्भिः संसर्गे गुणाः सन्निष्ठाः संक्रामन्ति, असद्भिश्च दोषा असद्गताः । सदसत्संसर्गाज्जायन्ते गुणाश्च दोषाश्चेत्यभ्युपगमः ।

इदमिह सम्प्रधार्यं कैमर्थिक्यो दोषशब्दस्य दोषगुणा इति द्वन्द्वे पूर्वनिपात इति । अभ्यर्हितत्वाद् गुणशब्द एव पूर्वनिपातमर्हति । मन्ये गुणतो बलीयस्त्वमिह विवक्षितं दोषाणाम् । संसृज्यमानयोः प्रत्येकमितरस्मिन्गुणा अपि संक्रामन्ति दोषा अपि । परं दोषा यथा भूयस्त्वेन रभ-

---

१. वन्ध्यानाम् । २. विद्वान् । ३. रहः = एकान्तम् । ४. पृथग्भवन्ति । ५. एकत्र पक्षपातिनी युक्तिः ।

सेन च संक्रामन्ति न तथा गुणाः। दोषास्तु संक्रामका रोगा इवापरिहार्य-सङ्क्रमाः, गुणास्तु संक्रामेयुर्मो वा संक्रमिषुः। प्रवृत्तिरेषा भूतानां यदिमानि परकीयान्दोषानञ्जसा[1] गृह्णन्ति गुणांस्तु महता प्रयत्नेन दीर्घेण च कालेन। आङ्ग्लैश्चिरं कृतसंवासा अप्येतद्देशजास्तद्गुणलवमपि नाग्रहीषुः पर्यग्रहीषुश्च तद्दोषपूगान्। तद्यथा—आङ्ग्ला वेलातिक्रमं कृत्येषु न सहन्तेऽहोरात्रं विभज्याहारादिषु 'कालमनतिपत्योपतिष्ठन्ते, जन्मभूमौ जनन्यामिव [3]दृढाभक्तयस्तज्जान्येवोपयुञ्जते पण्यानि प्रोषिता अपि, यैः कैरपि संगताश्च स्वं नेपथ्यं स्वमभ्यवहारं स्वां वाचं न परिहरन्ते। इहस्थास्तु तद्गुणग्राममुपेक्ष्य तेषां मद्यामिषसेवनमनभिषेकजन्यं विरलाभिषेकजन्यं वाऽऽशौचं ब्रह्मचर्याभावं भोजनादौ देशकालविचाराभावं [4]स्त्रैणे च शालीन्याभावं च पश्यन्तः स्वयमपि तदीयं कुपूयचरणं[5] श्रिताः।

समं हि चेतनाचेतनेषु संसर्गप्रभावमध्यवस्यामः। अनुदिनं पश्यामोऽङ्गारागारे भ्राम्यतो जनस्य वासांसि कचराणि भवन्ति गन्धागारे पुनः सर्वाह्णं स्थितस्य शुचीनि सुरभीणि चेति। शौण्डिकोहस्ते पयोपि वारुणीत्यभिधीयते लोकेन। तत्र शौण्डिक्याः प्रायिकं वारुणीसाहचर्यमेव तद्बुद्ध्युत्पादे कारणम्। अलोहितोऽपि मणिरुपाश्रयवशाल्लोहितः प्रतीयते। लौहितीक इति चोच्यते। काञ्चनसंसर्गं काचोऽपि मारकतीं द्युतिं धत्ते, पद्मपत्रस्थितं तोयमपि मुक्ताफलश्रियम्।

दृश्यते हि लोके यादृशैः सहाध्यायैः संवसति छात्रस्तादृश एव स भवति। यदि क्रोडारतैरुद्वृत्तैर्व्यसनिभिः संगच्छते तर्हि क्रमेण तच्छीलस्तदाचारश्च सम्पद्यते। अस्यैव हेतोः प्रयत्नेन परिरक्षन्ति पितरः पुत्राननिष्टजनसम्पर्कात्, इच्छन्ति च तेषामिष्टसंप्रयोगम्। संचदया[6] दुर्जना इति परम्परीणो लोकवादः। महतामपि सङ्गदोषा भवन्ति किमुताल्पकानाम्। उक्तं च कविना—

> असतां सङ्गदोषेण साधवो यान्ति विक्रियाम्।
> दुर्योधनप्रसङ्गेन भीष्मो गोहरणे गतः॥ इति।

---

१. शीघ्रम्। २. अनविपत्य = अनतीत्य। ३. अप्रियाद्विड्विति पुंवद्भावप्रतिषेधः। ४. स्त्रीसंघाते। ५. कदाचारम्। ६. परिहर्तव्याः।

सुजनानामपि हृदयं पिशुनपरिष्वङ्गलिप्तमिह भवति ।
पवनः परागवाही रथ्यासु वहन्रजस्वलो भवति ॥ इति च ।

संसर्गो विशेषकृदित्यव्यभिचारिणी प्रेक्षावतामुक्तिः । मृगशावैः सममेधिता, शकुन्तकैः सहोषिता, वृक्षकेषु सोदर्येष्विव स्निग्धा, वल्लीषु सखीष्विव प्रणयिनी कण्वदुहिता शकुन्तला मूर्तिमती सत्क्रिया[1] वा, विग्रहवती मुग्धता वा , शरीरिणी ऋजुता वाऽस्तीति युक्तरूपं नाम ।

अन्यथापि संसर्गप्रभावं लक्षयामः । इष्टो वृद्धैः संसर्गः कुमाराणां यूनां च भीष्मेण पाण्डवानामिव ।

अभिवादनशीलस्य नित्यं वृद्धोपसेविनः ।
चत्वारि तस्य वर्धन्ते आयुर्विद्या यशो बलम् ॥

इति स्मरणात् । परमत्यन्ताय परिशीलितः सोऽनिष्टाय महते प्रभवति । यो बालो वा युवा वा बालैः सवयोभिर्युवभिर्वाऽसङ्गत्य सततं वृद्धेन जनकेन पितृव्येणान्येन वा सञ्चरते, तेनैव प्रायः संभाषते स वैकृतं किमप्यपूर्वं लभते । हीयतेऽस्य सहजं चापलं क्षीयते समुत्साहः शीर्यते च साहसम् । अजरन्नपि स जरत्कल्पो भवति । स इवायमपि चिरं बहु च चिन्तयत्यल्पं च करोति, अभयेऽपि भयं पश्यत्यस्थाने च शङ्कते, स्वार्थे च प्रायेण प्रवर्तते न परार्थे । एवं बाला बालिकाभिर्भूयः सम्पृक्ताः स्त्रैणं[2] यान्ति । एतेऽपि ता इव कर्कशस्वभावाः सुलभकोपा वक्रोक्तिनिपुणाः शालीनाः कातराश्च भवन्ति । [3]परिकर्मरुचयो वेषरसिकाश्च जायन्ते।

पातकिभिः संसर्गमपि पातकेष्वन्तःकुर्वन्ति शास्त्रकाराः । यदाहुः—

ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः ।
महान्ति पातकान्याहुः संसर्गश्चापि तैः सह ॥ इति ।

परमिदमवश्याभ्युपेयं न हि सर्वत्र संसर्गहेतुको गुणदोषसङ्क्रमो भवति । व्यभिचारो ह्यस्य संक्रमस्य लक्ष्यते । स्खलति नाम प्रकृतमिदं कवेर्वचनं परिपूतस्वभावेषु पुण्यचरितेषु केषुचिन्महानुभावेषु । ते हि

---

१. सत्कर्म । २. स्त्रीस्वभावम् । ३. अङ्गसंस्कारः ।

तथा यतात्मानो भवन्ति यथा सत्यपि विकारहेतौ न विक्रियन्ते । अत्रार्थे श्लोको भवति—

सत्सङ्गाद्भवति हि साधुता खलानां साधूनां नहि खलसङ्गमात्खलत्वम् ।
आमोदं कुसुमभवं मृदेव धत्ते मृद्गन्धं नहि कुसुमानि धारयन्ति ॥ इति ।
न त्यजन्ति रुतं मञ्जु पिका वायससंगमात् । इति च ॥



## (९) मन एव मनुष्याणां कारणं बन्धमोक्षयोः

बन्धः संसरणं पुराकृतकर्मण उपभोगाय योन्युपसंक्रमः शरीरेन्द्रियोपाधिमत्तेति यावत् । मोक्षो नामापुनर्भवः । एतयोर्द्वयोरपि मनः प्रधानं कारणमिति प्रतिपाद्यो विषयः । कथं तेजस्तिमिरवद्विरुद्धस्वभावयोरेकत्राधिकरणे दुर्लभयोर्बन्धमोक्षयोरेकं मनः प्रसवहेतुरिति पर्यनुयोगं संभाव्योत्तरं पठत्युत्तरार्धेन—

बन्धाय विषयासङ्गि मुक्त्यै निर्विषयं स्मृतम् । इति ।

नन्वविद्यया बध्यते जन्तुर्विद्यया तु प्रमुच्यत इति हि वेदान्तसिद्धान्तः । तत्कथं तमुपेद्य तमतिपत्य वाऽऽगन्तुरयमर्थः संगीर्यत[1] इति चेदुच्यते—नात्र प्रस्तुतेन वाक्येन तस्य [2]कृतान्तस्यापलापोऽभिप्रेयते । न ह्यविद्याया बन्धहेतुत्वमपह्नूयते विद्याया वा मोक्षैककारणत्वम् । इदमभ्युपेत्यापि क[?]क्रमो बन्धमोक्षयोः किंलक्षणं मनोऽत्रोपकरणीभावं यातीत्येव विवक्षितम् । कथङ्कारं मनो बध्नातीत्यनुदर्शितं श्लोकद्वयेन गीतासु—

ध्यायतो विषयान्पुंसः सङ्गस्तेषूपजायते ।
संगात्संजायते कामः कामात्क्रोधोऽभिजायते ॥
क्रोधाद्भवति संमोहः संमोहात्स्मृतिविभ्रमः ।
स्मृतिभ्रंशाद् बुद्धिनाशो बुद्धिनाशात्प्रणश्यति ॥ इति ।

विसिन्वन्तीम इन्द्रियाणि, विसीयन्ते वेन्द्रियाण्येभिरिति विषया इन्द्रियार्थास्तत्तदिन्द्रियग्राह्याः, ग्राहकाणि चेन्द्रियाणि । मनो हि संकल्प-

---

१. प्रतिज्ञायते । २. सिद्धान्तः ।

विकल्पात्मकमिन्द्रियाणां प्रवर्तने संयमने वा प्रग्रहरूपम्। एतत्साहित्य[1]-सव्यपेक्षैवेन्द्रियाणां प्रवृत्तिः। यदाऽयं पुरुषोऽन्यत्रमना भवति, नैष शृणोति, न पश्यति, न जिघ्रति, न स्पृशति। इत्थं प्राधान्यभाङ्मनो यदा विषयांश्चिन्तयति तदाऽयं पुरुषस्तेषु विषयेषु प्रसजति, तत्रासक्तिमान्जायते, नित्यं मनसि संनिवेस्तेषाम्। आसक्तिमतोऽस्य तेषु कामो जायतेऽयं मे स्यादयं मे स्यादिति। कामानां चानन्त्याद् वातेनाम्भसि नौरिव विक्षिप्यतेऽस्य मनो नैकत्र च क्षणमपि स्थितिं लभते। यदाऽस्य कश्चित्कामः प्रतिहन्यते, नहि सर्वे कामाः कस्यापि जन्मिनः समृध्यन्तीति नियमात्, तदाऽयं क्रुध्यति। क्रोधो नामामर्षः, तेषु तेषु कामविघातकेषु काष्ठागतःप्रद्वेषः। तेनास्य संमोहो व्याकुलीभावो वैचित्यं जायते। संमोहो हि निमीलनं संस्काराणाम्। तेन स्मृतिसम्प्रमोषोऽस्य भवति, प्रमुषितस्मृतेर्बुद्धिर्विप्लवते। विषयानुभवजनितसंस्कारप्रबोधनात्मिका स्मृतिः, तस्यामेवंजातीयकायां[2] नष्टायां बुद्धिरस्य भ्रश्यति। नायं स्मरति किं मया कृतं, कस्मात्कृतं, किम्फलकं कृतमिति कार्यकारणे अजानानो न सदसती विविङ्क्ते न च कार्याकार्ये अध्यवस्यति[3]। एवमस्याविवेकिनोऽनर्थोपनिपातो विनिपातो वा शतमुख उपतिष्ठते, जायस्व[4] म्रि[4]यस्वेत्येवायं[5]संसरति।

अथ कीदृङ्मनो मोक्षाय कल्पत इति निरूप्यते–उक्तं ह्येतत्प्रागिहैव—मुक्त्यै निर्विषयं स्मृतमिति। सत्यं मनसि निर्विषये विषयासङ्गं त्यजवति क्रमेण राध्नोति मनुष्यो मोक्षम्। निर्विषयता चेह तादृशीष्यते यादृशी कान्तासंमिश्रदेहस्य भगवतो भवस्य, यश्चाविषयमनसां यतीनां पुरस्तादिति कीर्तितः कालिदासेन। यदाऽयं विषयान्नानुध्यायति, सन्तोऽपि तेऽसन्त इव भवन्त्यात्मरतेस्तस्य महाभागस्य। एवमसत्सु तेषु कुत आसङ्गः, कुतस्तरां कामः, कुतस्तमां वा तद्विघातजन्या क्रोधाद्यनिष्टपरम्परा।

यावत्स्थितप्रज्ञता न सम्पाद्यते तावन्न विमुच्यते। स्थितप्रज्ञस्य का भाषेति पृष्टो भगवानर्जुनं सम्बोधयन्निराह—

---

१. साहित्यं साहचर्यम्। २. 'ईदूतोश्च सप्तम्यर्थे'— wait

३ प्र०

प्रजहाति यदा कामान्सर्वान्पार्थमनोगतान्।
आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते॥ इति।

इच्छाविघातो दुःखम्। तेन बुद्धिरस्योपहतप्रसादा भवति। परं यस्य बाह्योऽर्थः कश्चित्काम्यो नास्ति, कुतस्तस्य दुःखम्, वा चित्तविक्षेपस्तत्कृतः। निष्कामेण मनसा कृतसान्निध्यै रागद्वेषवियुक्तैरिन्द्रियैर्विषयांश्चरन्नपि न दुष्यति। कामप्रभवौ हि रागद्वेषौ कामोदयमनूदयेते, कामास्तमयमनु चास्तमयेते। असकृच्च भगवान् प्रबोधयति जिज्ञासून्—

इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ।
तयोर्न वशमागच्छेत्तौ ह्यस्य परिपन्थिनौ॥ इति।

यत्सत्यमेतौ मनसो मलः। विगतमले च मनसि प्रसादं गते पर्यवतिष्ठतेऽस्य बुद्धिः। पर्यवस्थितबुद्धिश्च स शान्तिमाप्नोति शाश्वतीं नेतरः। उक्तं हि—

आपूर्यमाणमचलप्रतिष्ठं समुद्रमापः प्रविशन्ति यद्वत्।
तद्वत्कामा यं प्रविशन्ति सर्वे स शान्तिमाप्नोति न कामकामी॥ इति।

बद्धमूला दृढं निखाताः पुंसां हृदि कामास्ते न सहसा शक्या उद्धर्तयितुम्[1]। यस्य धन्यस्येमे कालेनापयान्ति तस्य भीरप्यपयाति। अभयं च मोक्षः। यस्यार्थ्यं[2] किमपि नास्ति स किं बिभीयात्, कुतो वा बिभीयात्। नासौ कञ्चिद्रज्यते न च कमपि द्विष्टे। नास्य कश्चित्संमतो न वाऽसंमत इत्येवमभय प्रपद्यते।

यस्य महात्मनोऽभ्यासवैराग्याभ्यां विषयेभ्यो व्यपवृत्तं चेतो न किंचित्कामयते तस्य नूतनं भाग्यं नाप्नोति प्रारब्धक्षयमेव प्रतीक्षते। प्रारब्धे च क्षीणेऽत्यन्ताय विमुच्यते। उक्तं च—'तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये' इति। तस्मात्साधूक्तं मन एव मनुष्याणामित्यादीति।

---

१. उन्मूलयितुम्। २. प्रार्थनीयम्।

## (१०) नालम्बते दैष्टिकतां न निषीदति पौरुषे ।
## शब्दार्थौ सत्कविरिव द्वयं विद्वानपेक्षते ॥

दिष्टं दैवमित्यनर्थान्तरम् । 'पूर्वजन्मकृतं कर्म तद्दैवमिति कथ्यते' इति सुधियः । पौरुषं नाम पुरुषस्य कर्म प्रयोजनवाञ्शरीरायासः, न तु कायपरिस्पन्दमात्रं व्यर्थं वा चेष्टितम् । इह लोकयात्रागतेन मनुजेन योगक्षेमः साध्यः । स तु दैवेन केवलेन न प्रसिध्यति न च केवलेन पुरुषकारेणेति प्रकृतो विषयः । यथा सुकविः कान्तकोमलपदावलिं प्रसादं सौष्ठवं माधुर्यं चाद्रियते तथैवार्थगौरवं भावगाम्भीर्यं वेत्ति । नैकतरेण कृती भवति ।

इह द्वये मनुष्या [1]दैष्टिकाः पौरुषवादिनश्च । तत्र दैष्टिकास्तावदाहुः—'दैवायत्तमिदं सर्वम्' । 'भाग्यं फलति सर्वत्र न च विद्या न पौरुषम्' । 'नियतिः केन लङ्घ्यते' इति कृतं पौरुषेण वराकेण । नियता जात्यायुर्भोगा इति शास्त्रकाराः । कां योनिमापद्यते जीव इत्यत्र दिष्टमेव प्रमाणम्, कोऽस्य जीवनकाल इत्यपि दैवालम्बम् । कीदृशः कियांश्चास्य सुखदुःखयोर्भोग इत्यपि भाग्यायत्तम् । एतत्त्रितयं यत्नशतेनापि मनागपि प्रकर्ष्टुमपकर्ष्टुं वा न शक्यम् ।

कुलविशेषे संभवे या पुंरुषस्य परवत्ता तत्र न बहु वक्तव्यमस्ति । केचिच्छ्रीमतां शुचीनां गेहेषु जायन्ते केचिद्दारिद्र्योपहतानां मलीमसानां च । केचिज्जनुषान्धा विकलाङ्गा विकरालाकारा [2]अनेडमूका जडा वा भवन्ति, परे चक्षुष्मन्तो वपुष्मन्तो हृद्याकाराः सुमेधसो भवन्ति ।

आयुरप्येकान्तेन दैवाधीनम् । इदं हि "अरक्षितं तिष्ठति दैवरक्षितं सुरक्षितं दैवहतं विनश्यति" इति प्राकृतस्यापि पुरुषस्यानुभूतेर्विषयः । कदाचित्कश्चित्स्खलनमात्रेण मृतिमेति, परो भृगोरप्यवपतितः प्राणान्न जहाति । कश्चित्समुदितानामामयानामेकागारतामिव गतश्चिरं जीवति । परः [3]कल्योपि, [4]कल्पोपि, बलान्वितोपि रेलादियानेनाक्रान्तः कुमार एव वा युवैव वा सन्सपदि परासुतां याति । पितरौ च दुःखेनादभ्रेण योजयति । कश्चिदाग्नेयगुलिकावर्षेणाभिवृष्टोपि, शोणिततर्षिचक्रचन्द्रहासमण्डलमध्य-

---

1. दिष्टप्रमाणाः । 2. वक्तुं श्रोतुं चाक्षमाः । 3. निरामयः । 4. समर्थः ।

पतितोपि श्वापदेनाघ्रातोपि, व्यालेन दष्टोपि न मुञ्चति जीवितम्। इतरस्तु स्वस्तिमानेव गृहस्थित एव सुखं सुप्तः [1]पटलादिपातेनैव सहसोत्क्रान्तजीवितो भवति।

एवं सुखदुःखादिभुक्तावप्यस्य निर्विशेषं पारवश्यम्। समानमीहमानानां केचिदर्थैर्युज्यन्तेऽपरे नेति भाष्यकृदुक्तिर्नार्थं व्यभिचरति। तत्र नियतो भोग इत्येवोपपत्तिः। अन्यथा समानायां बुद्धिपूर्वकृतायां चेष्टायामेकत्रेष्टसम्प्राप्तिरपरत्र नेति कथं घटते। लोके खल्वपि पश्यामो येपि मेधया श्रुतेन विनयेन प्रश्रयेण च समानास्तेषामपि सुखदुःखे भिद्येते, तेषामपि समृद्धिव्यृद्धी न साम्यं भजेते, तेषामपि समुच्छ्रायावपातौ विशिष्येते इति। एको हि विविधाधिव्याधिचिन्तासमाकुलः क्षणमपि न [2]निर्वृणोति, परस्तु नित्यं प्रकृतिस्थशरीरः शान्तस्वान्तः सुखे रमते। एको हि सततमुद्युञ्जानोपि दरिद्राति, यं कमपि व्यवसायमालम्बते स एवास्य विपद्यते। भवितव्यतानुविधायीनीन्द्रियाणीति सुखापघातके दुःखापादके कर्मण्येवास्य क्रमते बुद्धिः, यतो व्यापदस्तत्रैवास्य प्रक्रामति पाणिपादम्, तां दिशमेवास्य सखायः सतीर्थ्याश्च कल्याणाभिनिवेशिनोऽपरे च निनीषन्त्यजानन्त एव। अन्यस्तु सर्वत्र समृद्धाभियोगो यत्कर्मारभते तदेवास्य फलति, निष्कर्मा वा यतस्तत उपनतेन दायेन पुत्रपौत्रादिपरिष्वङ्गसुखमश्नुवानः क्लेशलेशं न विजानाति। एकः खलु व्युत्पत्तिमानपि शास्त्राणां परपारदृश्वाऽपि, लोकवृत्तान्तस्य निकाममभिज्ञोपि, नयकोविदोपि लोकाल्लोकेशाद्वा स्तोकमेवादरं लभते, विरलामेव भुक्तिं विन्दतेऽनुच्चकैश्च पदमाटीकते। परस्तु तत्तद्गुणपरिकर्मितो महाभागः प्रजानां प्रजापालस्य च सममभ्यर्चितो भवति, उच्चैस्तमं पदमारोहति, [3]प्रकृतिपुरुषतां याति, लोकनायकतामेति। किं बहुना, इष्टानिष्टप्राप्तिपरिहारयोः परस्यानुग्रहनिग्रहयोश्च प्रभुः प्रकामं सुखमश्नुते। विस्मयनीयमिदं तारतम्यं भाग्यनिघ्नं नान्यनिघ्नमिति प्राभवत्यं भाग्यस्याकिञ्चित्करत्वं च पौरुषस्य व्यवस्थितं भवतीति। उक्तञ्च—

---

१. पटलं छदिः। २. सुखमनुभवति। ३. प्रधानपुरुषताम्।

नात्मनः कामकारो हि पुरुषोऽयमनीश्वरः ।
इतश्चेतरतश्चैनं कृतान्तः परिकर्षति ॥ इति ।

तदेतत्पौरुषवादिनो न सहन्ते, इत्थं च प्रत्यवतिष्ठन्ते[1]—कर्मैव सर्वार्थसाधकं पुंसाम् । कर्मजा हि सिद्धयो देवानामसुराणामपि । पौरुषमेव सर्वत्र फलति । अकर्मणस्तु मनुजस्य शरीरयात्रापि न प्रसिध्यति, स्फा[2]तिरत्यारूढिर्वा दूरेऽपास्ता। भाग्यैकसमाश्रया अपहस्तितपौरुषा[3] विनाथवज्जीवन्तो दृश्यन्ते पामराः । न हि कश्चित्क्षुद्रोपि जन्तुः स्वं भोज्यमासादयति यावन्न चेष्टते । कृमिकीटादयो मृगशकुनिप्रभृतयश्चाभियुज्य[4]वार्जयन्ति वृत्तिं नानभियुज्य । मदमलिनकरटाः करटिनोपि "स्तनयित्नुरवा[5]धीरिणः सर्वसत्त्वाभिभाविनः केसरिणोपि नानुद्यम्य पारयन्त्यात्मान[6] यापयितुम्[7] । किमुतान्ये । न हि कश्चिद् गुरूनशुश्रूषित्वा, यमान्नियमांश्चासेवित्वा विद्यालवमप्युपादत्ते, सरस्वत्यनुग्रहस्तु दवीयान् । दैवमात्रसमाश्रयं जनं निन्दन्ति दैवं प्रबाध्योत्तिष्ठमानं चाभिनन्दन्ति मुनयः—

विक्लवो वीर्यहीनो यः स दैवमनुवर्तते ।
वीराः सम्भावितात्मानो न दैवं पर्युपासते ॥
दैवं पुरुषकारेण यः समर्थः प्रबाधितुम् ।
न दैवेन विपन्नार्थः पुरुषः सोऽवसीदति ॥ इति ।

इदमत्र तत्त्वम् । अस्ति दैवम् , अस्ति चेह कर्मापेक्षितं चार्थवच्च । सत्यं दैवं पथ्यदनं[8] भवति संसारमापन्नस्य जीवस्य । दैवं नाम पूर्वजन्मकृतं कर्मैवेति पूर्वमवोचाम । तस्य तस्य कर्मणः फलभोगेनैव शक्यः क्षयः सम्पादयितुं नान्यथा । यानि फलं प्रसोतुमारब्धानि कर्माणि तानि प्रारब्धमित्युच्यते । इह जन्मनि योगक्षेमसिषाधयिषया यशःसंचिचीषया वित्तसंचिकीषया वा प्रवृत्तैरस्माभिरन्तराऽन्तरा पूर्वजन्मचरितानां विपाकोऽप्युपभोक्तव्य एव । न हि तस्य कृते लोकान्तरं कालान्तरं वा विशिष्टं पृथङ् नियतमस्ति । इयदेवास्माकं भाग्यपारतन्त्र्यं नातोऽतिरिक्तम् । इदं चावश्यमभ्युपेयं पूर्वकर्मानुरोधेनैव कुलविशेषे जनिर्जनिमताम् । परमाभि-

---

१. विलम्बन्ति । २. वृद्धिः । ३. संन्यस्तपुरुषकाराः । ४. उद्योगं कृत्वा । ५. गर्जन्मेघः । ६—७. शरीरयात्रां साधयितुम् । ८. पाथेयम् ।

जातस्यानभिजातस्य वा स्वायत्तः पुरुषकारः । तथा च कर्णस्य प्रत्युक्तिः—

सूतो वा सूतपुत्रो वा यो वा को वा भवाम्यहम् ।
दैवायत्तं कुले जन्म मदायत्तं तु पौरुषम् ।। इति ।

सुविचिन्त्य कृतानि साधनसंभारयुतान्यपि कर्माणि यद् विप्लवन्ते तद्विधेरेव विलसितम् । यदुक्तम्—

दैवे निरुन्धति निबन्धनतां वहन्ति ।
हन्त प्रयासपरुषाणि न पौरुषाणि ।। इति ।

यदपि क्वचिदयत्नादिवोपनमति, गतमप्यतर्कितं प्रत्यागच्छति, यत्नाद् व्यतिरिक्तं च लभ्यते सोपि दैवपरिणामः । यच्चावमते दुर्विधे मूर्खप्रायेऽन्ववाये जनित्वाऽप्यनारतेन स्वेनोद्योगेनानैश्वर्यमपास्य दौर्गत्यं निहत्य जाड्यं च निरस्य लोकस्य संमता भवन्ति तत्कर्मणो माहात्म्यम् । अर्थकृशा अपि विवशा अप्यनाथा अपि प्रज्ञां पौरुषं चालम्ब्य महतो महत्तराणि पदान्यधितिष्ठन्ति राज्ञामपि च समादृता भवन्ति । तथा हि महिदास ऐतरेयः शूद्रायां[1] जातो जड इति मलिन इत्येकजातिरिति विप्रैः श्रोत्रियैर्न्यक्कृतो यज्ञशरणाद् बहिष्कृतश्चिरं तपस्तप्त्वा भगवदनुग्रहभाजनं भूत्वा शब्दब्रह्मणि प्रबुद्धो ब्राह्मणं प्रोवाच, यच्च तदुपज्ञमित्यैतरेयमिति प्रथते ।

यूरोपखण्डेऽपि सन्ति काश्चिदुदाहृतयः पौरुषेणान्तरितस्य दिष्टस्य । कस्य नाम साक्षरस्यानक्षरस्य वा पौरस्य जानपदस्य वा [2]पार्वतस्यारण्यकस्य वा हालिकस्य भूमिहरस्य वा न विदिते हिट्लरो मुसोलिनीश्चेति नामधेये । तत्र हिट्लरो महाभागः सामान्येऽन्ववाये संभृतस्तुन्नवायसुतः[3] सन्नपि स्वमनीषासहायेन सन्ततेन पुरुषकारेण लोके यमुच्छ्रायमशिश्रियद् यदुच्चैस्तमं पदमध्यरुक्षत् तत्र को नामानभिज्ञः स्यात् । तस्यैव हृदयङ्गमः सखा मुसोलिनीरपि दुर्गतस्य पादूकृतः सुतोपि पौरुषमालम्ब्य दैवं पृष्ठतः कृत्वा इटलीराष्ट्रस्य नेतृत्वमापद् वन्दनीयतां च सर्वस्य राष्ट्रियस्यागात् ।

अतो दैवपुरुषकारोभयाश्रयिणो विवेकिनो नैकतराश्रयिणः, तथा हि साधीयोलोकयात्राप्रसिद्धिः ।।

---

१. शूद्रः । २. पर्वतीयस्य । ३ तुन्नवायः = सौचिकः ।

## ( ११ ) शीलं परं भूषणम्

अत्र केचिदर्था अलङ्काराः केचिदलङ्कार्याः केचिदुभयत्रिधा इति कविसम्प्रदाये लोके च निरूढाः । तत्र सूनृता वाक्, चन्द्रोज्ज्वलो हारः, पौण्डरीकं दाम, दीप्तिमन्नेपथ्यं, शिशिरा चन्दनचर्चा स्नानं चेत्यादयः सुजनतेत्यादयश्चालङ्काराः । अत्रार्थे श्लोको भवति—

> ऐश्वर्यस्य विभूषणं सुजनता शौर्यस्य वाकसंयमो
> ज्ञानस्योपशमः श्रुतस्य विनयो वित्तस्य पात्रे व्ययः ।
> अक्रोधस्तपसः क्षमा प्रभवितुर्धर्मस्य निर्व्याजता
> सर्वेषां खलु सर्वकारणमिदं शीलं परं भूषणम ॥

पयःकमलादीनां त्वन्योन्यं भूषणभूष्यभावः कविभिरुत्प्रेक्षितः । उक्तं च–पयसा कमलं कमलेन पयः पयसा कमलेन विभाति सरः ।
शशिना च निशा निशया च शशी शशिना निशया च विभाति नभः ॥ इति ।

शीलं तु भूषणान्तराणि सुदूरमधरीकरोति । इदं सततं भूषणं क्षयीणि भूषणान्तराणि । परिशुद्धा व्युत्पत्तिः कदाचिदुद्भासते कदाचिन्मन्दायते । परिष्कृता बुद्धिरपि कदाचित्क्रमते कदाचित्प्रतिहन्यते कृत्येषु । किञ्चेदं शीलं भूषणतां व्यभिचर्य न कदाचिद्भूष्यतां याति । न चात्रैव पर्यवस्यत्यस्य प्रकर्षः । भूषणान्तराणां सर्वेषां कारणमपीदं भवति । तदेवं महिमोपेतं किमिदं शीलं नाम । 'शुचौ तु चरिते शीलमि'त्यभिधानकृतः । 'शीलं स्वभावे सद्वृत्ते' इति च । वयं तु मन्महे शुचि चरितं सौजन्यादि-लक्षणं प्रज्ञानं भवति शीलस्य न तु तत्स्वरूपम् । शील तु पुरुषस्य किमप्यनीदृशमन्तःस्थितं निधानं वाऽक्षयं शक्तिस्रोतो वा नैज एवागन्तु-साधन उत्कर्षो वा 'यदवष्टम्भेन स समुद्र इव गाम्भीर्ये भवति हिमवानिव च स्थैर्ये, यन्महिम्ना च तथाऽभिरूपो दीप्रश्च भवति यथा सर्वस्याभिगम्योऽनाधृष्यश्च जायते । इदं हि परिच्छेदातीतं पुराकृतपुण्योपादानं किमप्यन्तःसत्त्वमस्ति यन्न शक्यते पिण्डीभूतं साक्षान्निदर्शयितुम् । यदुपाश्रयः पुरुषः पथा याति 'नापथा, यन्निबन्धनी सूर्योदयास्तमनवत्सम्पत्तौ'

---

१. यद्बालम्बेन । २. नाऽपथेन । ३. तन्न तस्यैवेति तन्नार्थे वतिः ।

विपत्तौ च महतामेकरूपता, यां राममधिकृत्योपश्लोकयत्यादिः कविर्भग-वान्वाल्मीकिः—

> न वनं गन्तुकामस्य त्यजतश्च वसुन्धराम्।
> सर्वलोकातिगस्येव लक्ष्यते चित्तविक्रिया ॥ इति।

सति शीले कविनालङ्कार्यत्वेनोपन्यस्ता ऐश्वर्यादयः स्वयमेवानुषङ्गादायान्ति, न तु तत्कृते यत्नः कार्यो भवति। यमर्थमन्ये बुद्धिगुणेन शास्त्रवैशारद्येनाप्रतिहतेन वचसां प्रवाहेण यत्नाधिक्येन च घटयन्ति तं शीलवानासेचनकेन[1] रूपेण संवननेन[2] वा परेषां प्रसाधयति। शीलं हि सन्निधिमात्रेणोपकरोति तद्वन्तम्। पराभिभावी लोकोत्तरः कश्चिदस्य [3]परभागो येनायं सर्वमपाकरिष्णुर्जिष्णुश्च भवति, चेतनाचेतनाश्चार्था अस्मिन्नानुलोम्येन वर्तन्ते। अथात्र कविभणितिर्भवति—

> वह्निस्तस्य जलायते जलनिधिः कुल्यायते तत्क्षणा-
> न्मेरुः स्वल्पशिलायते मृगपतिः सद्यः कुरङ्गायते।
> व्यालो माल्यगुणायते विषरसः पीयूषवर्षायते
> यस्याङ्गेऽखिललोकवल्लभतरं शीलं समुन्मीलति ॥ इति।

यदा च पुरुषः सकामो भवति कर्मसु तदा तद्धेतुस्तस्यान्तरेव मृग्यो न बहिः। शीलमेव स हेतुः।

सत्यनिष्ठता हि परा सीमा मानुष्यकस्य। सत्यनिष्ठतया च परेषु वृत्तिर्न्याय्यः। एतज्जन्या शक्तिर्नित्यान्वयिनी प्रतिरोधासहा च भवति यथा तापः प्रकाशो वा भौतिकः। शक्यं[4] खल्पला अन्तरिक्ष उत्क्षेप्तुम्। इदं च सत्यं यदुत्क्षिप्ताः सर्वेऽमी अवश्यमवपतिष्यन्ति। तथेदं खल्वपि सत्यं यत्र क्वापि स्तेये दण्डो न प्रणीतः परातिसन्धानेऽनुतोदे वा दमो वा बन्धो वा नादिष्टोऽभूत्तत्र कालान्तरे न्याय्यं शासनं[5] भवितेति। सत्यस्य नामैतादृशोऽधिकारः प्रभावश्च यदात्मानं [6]प्रतीतिविषयं कारयति लोकेन।

---

१. 'तदासेचनकं तृप्तेर्नास्त्यन्तो यस्य दर्शनात्'। २. वशक्रियया। ३. उत्कर्षः।
४. शक्यमिति लिङ्गवचनस्यापि सामान्योपक्रमात्। ५. दण्डः। ६. प्रतीतिर्विश्वासः।

इदं त्वैदम्पर्यं[1] यच्छीलं सुनीतिकृता व्यवस्थितिर्भवति या व्यक्तौ मुकुरे प्रतिफलिताऽभिव्यक्तं विलोक्यते ।

शीलवन्तो महात्मानो जनतायाः कार्याकार्यप्रविवेके लब्धवर्णमविभ्रममन्तःकरणं भवन्ति । शीलं नाम कियती शक्तिरित्यत्र शीलवतः परिस्थितिप्रतिरोधोऽतदनुरोधो वा लिङ्गम् । अनवदातचर्याः स्वचर्यां तथा समर्थयन्ते यथा परे तां संमन्येरन् यथा वाऽसौ व्यतिकरेषु पुरुषान्तरेषु च प्रतिफलेत् । कृपणाः कृतस्य कर्मणो लब्धिं रिष्टिं वा चिन्तयन्ति । ते हि हृद्याः कमनीया वा न भवन्ति हार्दं परकीयं चाकाङ्क्षन्ति । शीलालङ्काराः सर्वत्र स्वदोषानुद्दाह्रियमाणानिच्छन्ति । पूर्वे पुनः स्वस्य सत्यभाषितामार्हन्तीं[2] च व्यतिकरैः प्रसिषाधयिषन्ति । यो हि शीलविभूषितः ककुदं[3] नृणां भवति स पश्यत्युपसर्जनं व्यतिकरः स्वयमेव मामनुवर्तिष्यते, न मया सोऽनुवृत्य इति । यो हि मूर्तिमत्सौजन्यं भवति स विषमपतितोपि क्षेमेण निर्याति, यथा तथा जायमानेषु जनिष्यमाणेषु व्यतिकरेषु विघ्नव्यूहानपोह्य जयमन्वेति ।

यदि कश्चित्स्वविषये परकीयाद् दर्शनात्संत्रस्यति वेपते च, दारिद्र्यादुद्विजते दुश्चरितात्प्रतिवेशिनो वा बिभेति स भीरुः सद्य एवासतोपि [4]प्रतिभयानर्थानुद्भावयिष्यति ।

आर्जवं हि शाश्वतो जयः, स चाक्षोभ्यो हृद्युपशम इति तूष्णीमभिनन्द्यते । अयं चोपशमो नियतो नित्यमनुभूयमानो वा हर्षः ।

शीलवानेव कालोचितं जानाति व्यवहर्तुम् । स एव काल्यानि[5] प्रतिषेधाक्षराणि नैतदेवं विपरीतमेतद्, इदमसत्यमवद्यं नाहमेवमाचरितुमुत्सहे रुष्येस्त्वं मा वा रुषः, समस्थोहं स्यां विषमस्थो वेत्येवमाकाराण्युद्गरीतुमीष्टे, इतरस्तु सत्यमेवैतत्, तथाऽस्तु, बाढमनवद्यं ते दर्शनम्, एवमाचरिष्यामीत्येवमात्मकानि प्रकृतार्थानि वाक्यानि कृपणवद् ब्रूते स्वस्यानिष्टप्रकल्पकानि । शीलवांस्तु परेषामभिमतानि मतानि परम्परीणानि

---

१. इदम्परम् = एतदभिप्रायकम्, स्वार्थे ष्यञ् । २ योग्यताम् । ३. श्रेष्ठः ।
४. भीषणान् । ५. प्राप्तकालानि ।

दर्शनानि चरणानि वा फल्गूनीति वाऽनर्थकानीति वा नाभ्युपगच्छति न चानुतिष्ठति। एतेन विचाराचारापारतन्त्र्येण स्थितेऽनानुगुण्येनादाक्षिण्येन चासौ लोकस्य चिन्त्यो भवति। लोको हि तं दैवतवदर्हयेद् विद्विष्याद्वात्यर्थमित्येको विकल्पो विकल्पान्तरं नास्ति।

इदं चावश्यमभ्युपेयं न खलु कश्चिच्छीलसम्पत्तिं [1]निखिलेनोपवर्णयितुं सहते न वा पारयते शीलाङ्गभूतान् समुदितानानुक्रमितुं गुणान्। यत्सत्यमेतदर्थः प्रयत्नोऽप्युपहास्यो भवति। इदं हि कृष्णाङ्गारेण चपलाया[2] आलेखनं नाम। इदमननुकार्यं चानुपमेयं च। "गगनं गगनाकारं सागरः सागरोपमः" इतिवच्छीलं शीलेनैव सदृशम्। अयं हि विधातू रम्यतमः समुत्पादः प्रशस्यतमश्च। तस्मादुपपद्यतेऽनर्थक एनेन संघर्ष इति, अनर्थिका वास्यानुकृतिरिति। परो हि लाभो मनुष्यस्य यच्छीलोपपन्नेन पुण्येन जनेन [3]समापत्तिः। उक्तं हि—

कि मधुना किं विधुना किं सुधया किं वसुधयाऽखिलया।
यदि हृदयहारिचरितः पुरुषः पुनरेति नयनयोरयनम्॥ इति।

## (१२) नास्ति सत्यात्परो धर्मः

किं नाम सत्यमिति जिज्ञासायामाह—यथार्थे वाङ्मनसे सत्यम्। यदा यथाश्रुतं यथादृष्टं यथानुमितं यथाचिन्तितं वा वक्ति तदा सत्यं ब्रवीतीत्यभिलापो भवति। यदा चान्यत्पश्यत्यन्यच्चाख्याति यदा वा मनो वाचा विसंवदति तदाऽनृतमभिवदतीति भवति व्याहारः।

सत्यं हि यमानामन्यतमम्। यमाश्च पञ्च भवन्ति योगनिर्दिष्टाः—अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा इति। सर्वकालं सेव्या यमा इति सस्माराद्विधानकृन्मनुः—यमान् सेवेत सततं न नित्यं नियमान् बुध इति। सत्यमेव जयते नानृतं, 'सत्येन पन्था विततो देवयान' इति वाजसनेयिनां श्रुतिः सत्यस्य जैत्रतां[4] देवत्वावाप्तिसाधनतां चाभिव्याहरति। भूष्णु वै सत्यमिति च काठके समाम्नायते। सत्यवचस ऋषयो न हि

---

१. कार्त्स्न्येन। २. विद्युतः। ३. समागमः। ४. जित्वरताम्।

लोकस्य तथानात्मनीनं नामास्ति तथाऽनायमनृतमिति दृढमध्यवस्यन्ति । एवं हि ते भगवन्तो निराहुः—समूलो वा एष परिशुष्यति योऽनृतमभिवदतीति । अथैतन्मूलं वाचो यदनृतम् । तद्यथा वृक्ष आविर्मूलः शुष्यति स उद्वर्तते, एवमनृतं वदन्नाविर्मूलमात्मानं करोति स शुष्यति स उद्वर्तत इति च । महाभारतेपि—

> अश्वमेधसहस्रं च सत्यं च तुलया धृतम् ।
> अश्वमेधसहस्राद्धि सत्यमेवात्यरिच्यत ॥

इति सत्यस्याश्वमेधसहस्रादपि भूयःफलत्वमुक्तम् । अन्यत्रापि 'यो वै स धर्मः सत्यं वै तत् । तस्मात्सत्यं वदन्तमाहुर्धर्मं वदतीति, धर्मं वा वदन्तं सत्यं वदतीति' इति सत्यस्य धर्मस्य चाभेदमुदाहरति शातपथी श्रुतिः।

सत्येन परिशुद्धेन निश्छलेन भवितव्यम्, 'सत्यं न तद् यच्छलमभ्युपैती'त्युक्तेः । परत्र स्वबोधसङ्क्रान्तये हि वागुच्चार्यते । सा चेद्वञ्चिका भ्रान्ता प्रतिपत्तिविधुरा वा भवति न तत्सत्यं भवेत्, सत्याभासं हि तत्स्यात् । यथा द्रोणेन सत्यधनायुष्मन् कथय किमश्वत्थामा हत इति पृष्टो युधिष्ठिरस्तन्नामानं करिवरं मनसि कृत्वोत्तरयति—बाढमश्वत्थामा हत इति । तेन स्वस्य बोधस्य परत्र श्रोतरि द्रोणे न संक्रमो भवति, तस्यान्यथा प्रतिपत्तेः । अनेनानृतभाषितेन युधिष्ठिरस्य परं लाघवं समजनि । इतः पूर्वं यस्तस्य रथः पञ्चाङ्गुलमूर्ध्वो भुवस्तलादयात्स सम्प्रति भूतलं संस्पृशन्नेवागादितीतरनिविशेष एवाभूत् ।

असत्यं 'वक्तुर्जनस्य तु ज्यायसी [2]ज्यानिर्जायतेऽपीति निदर्श्यते—आसीत् कश्चिद् ग्रामे कश्चित्कुमारोऽसत्यवचाः । एकदा किल स काननं पर्यटन्पर्वतकं कमप्यारुह्याक्रन्दीत्—अभिधावताभिधावत भोः ! व्याघ्रो मामाघ्रातुमिच्छतीति । तन्निशमनसमनन्तरं धानुष्काः शाक्तीकाः कौन्तिका याष्टीकाश्च जानपदाः श्वापदशातनाय तस्य यूनश्च परित्राणाय तत्रैव तूर्णतरं प्रयाता उपेताश्च । क्वासौ क्रूरकर्मा श्वापद इति च तमप्राक्षुः । प्रहसन्स प्रत्यगादीत्—नेह कश्चिदस्ति, मया तु क्रीडितं युष्माभिरिति । इति गिरं

---

१. वाक्कीत्ये नून् । अत्र पुमांसत्यमित्यत्र द्वितीया । २. हानिः ।

निशम्य दूयमानमानसा मा स्मैवं पुनश्चापलं [1]करोरिति च तरुणं तर्जयमानास्ते [2]यथायथं गृहान्प्रतियाताः। अन्यदाऽरण्यानीं विचरतः सत्यमेव तस्यान्तिकमुपागाद् गिरिगह्वरान्निष्क्रान्तः केसरिकिशोरकः। एवं सति स पूर्ववदाचक्रन्द-अभिधावताऽभिधावत भोः! व्याघ्रो मामाघ्रातुमिच्छतीति। परमद्योपहसत्येष हताशः कितव इति मन्वाना ग्रामीणा ग्रामाभ्यन्तर एव तस्थुः, नैकोऽपि तमभ्यवपत्तुं निर्ययौ। एवमात्मना द्वितीयो[3]ऽकृतसाहाय्यः स [4]तपस्वी क्षणेनैव कवलीकृतः कण्ठीरवेण मडमडायितश्च।

सत्येनोपचीयते पुरुषस्य महिमेत्यत्रौपनिषदं वृत्तमाचक्षते। सत्यकामो जाबालः किल हारिद्रुमतं गौतममेत्योवाच—'ब्रह्मचर्यं भगवति वत्स्यामि, उपेयां भगवन्तमिति। किंगोत्रोऽसी'ति तेन पर्यनुयुक्तः सत्यकामः प्रत्याह—आवेदितोऽहं मात्रा—"यौवने बह्वहं चरन्ती त्वामलभे साऽहं न जाने किंगोत्रोऽसी"ति। एतदाकर्ण्य प्रकर्षपूरितचेता महर्षिरभ्युवाद—'नैतदब्राह्मणो निर्वक्तुमर्हति। समिधमाहर सौम्य! उप त्वा नेष्ये न सत्यादगाः' इति।

अयं व्यतिकरो दृढमिदं व्यवसाययति[5] मानोन्नतिं दिशदपि सर्वसंव्यवहारनिबन्धनमपि श्रेयःसाधकतममपि सत्यं न येन केन यदा तदा पार्यते वक्तुम्। कुशला आश्चर्या[6] अस्य जगति वक्तारः। प्रायशोऽनृताभिरुचयो मानवाः। यत्रानृतोद्ये रतिर्वा न भवति यथा कवीनाम्, अर्थलब्धिर्वा न भवति यथा [7]नैगमानाम्, तत्राप्यपार्थके तस्मिन् किं नु प्रयोजकमिति दुर्ज्ञानम्। इदं तावदभ्युपेयं सत्या वाङ् न तथा प्रीणाति प्राकृताञ्जनान्यथाऽसत्यसम्पृक्ता। को नाम सन्दिग्धे यद्यसत्याऽऽत्मनि संभावना च दूराधिरोहिण्याशंसा चाऽनुपपत्तिमानर्थानां गुरुलाघवावसायश्च कामानुगं स्वस्यायतेरुत्प्रेक्षणं च वितथानोति फल्गूनीति च चेतसः समुत्सार्येरंस्तर्हि नितान्ततान्तं दृढमाकुञ्चितं च तच्चेतश्चेतनावतां स्यात्, न च कस्यापि मनागपि मुदे स्यात्। इदं च शास्त्रकारैरप्युपेयते—

---

१. स्मोत्तरे लङ् चेति लङ्, तत्र मध्यमपुरुषैकवचनम्। २. यथास्वम्। ३. एककः। ४ वराकः, शोच्यः। ५. निश्चाययति। ६. विरलाः। ७. वणिजाम्।

न नर्मयुक्तमनृतं हिनस्ति न स्त्रीषु राजन्न विवाहकाले ।
प्राणात्यये सर्वधनापहारे पञ्चानृतान्याहुरपातकानि ।। इति भारते ।

अयं तु परमार्थः—सत्येऽभिनिवेशः परा सीमा सौजन्यस्येति । इदं चावश्यं प्रतिपत्तव्यं सत्यमपरिशीलयद्भिरनृतिकैरपि—इह लोके सत्यनिष्ठता प्रगुणा व्यवहृतिश्च बहुमानाय भवति मानुष्यकस्य[1], सत्यानृतयोर्मिथुनीभावस्तु हेम्नि रजते वा कुप्यसंमिश्रणसंनिभ इति । कामं तत्सम्मिश्रणं तयो रूपे रूपाभ्युच्चयं कुर्यात्पेशलतरं च क्वणनं जनयेत्, तदर्घं तु लघयत्येव[2] । एवं व्यामिश्रेण वचसाऽभ्यधिकं रोचमानेपि मधुरतरश्चापतन्नपि सद्यः प्रच्यवते, मानेन च हीयते मानुषः । जिह्माचरणं नामाहेः सर्पणमिव भवति । सर्पो ह्युरखोदरेण वा पतितो गच्छति । एवमनृती ह्रीणोऽवमतोऽथावाङ्मुखो याति ।

न ह्यनृतमिव हेपणं लोके पापान्तरमस्ति । अनृतिको हि पापतमो लोके । सोऽनृतं वदन्नन्तर्यामिणमात्मानं प्रथममवधीरयति ततो मनुष्येभ्यः संत्रस्यति । एवं जघन्यो जनिमतां भवति ।

अनृतिकश्च सर्वस्तेयकृद्भवतीति स्मरति भगवान् मनुः—

वाच्यर्था नियताः सर्वे वाङ्मूला वाग्विनिःसृताः ।
तांस्तु यः स्तेनयेद्वाचं स सर्वस्तेयकृन्नरः ।। इति ।

इदमिह विचार्यं प्राणात्यये वा सर्वधनापहारे वा परोपघातप्रसङ्गे वाऽनृतोद्यमभ्यनुज्ञायते न वेति । यथेदं भारतेऽभ्यनुज्ञातं तथा दर्शितं प्राक् । योगसूत्रभाष्यकारा अपि भारतानुसारिणः । यदाहुः—सर्वभूतोपकारार्थं प्रवृत्ताऽवञ्चिकाऽभ्रान्ता वाक् सत्यं न भूतोपघाताय प्रवृत्ता । यदि भूतोपघातपरैव स्यान्न सत्यं भवेत्पापमेव भवेत् । तेन पुण्याभ्यासेन पुण्यप्रतिरूपकेण कष्टं तमः प्राप्नुयादिति । मुनिवृन्दारको महात्मा श्रीगान्धी त्वत्र विप्रतिपद्यते । एवं हि स महाभागो निराह—यदि सत्यानुवृत्तिः प्रवालशय्याशयनमिव स्यात्, यदि सत्ये स्थितिरसहित्वा क्लेशामपातयित्वा वाऽऽत्मानं संशये साध्येताव्यवहितश्च सुखनिर्वेशः स्यात्तदा

---

१. मनुष्यसमूहस्य । २. लघूकरोत्येव ।

ऽस्य जगतो रामणीयकं न स्यात्। अस्माभिः सत्ये संलग्नैर्भाव्यं द्यौरपि पतेच्चेत्। नायं गरीयानर्थः सत्यं चेदनुवर्तमाना वयं सहैव भारतवर्षेण सर्वां जगतीं हारयेमेति। आत्मा हि परमोर्थः, स गोपायितव्यः, कामं सवमन्यद्धीयेतेति। इदमेव साधीयो दर्शनम्। एवमेव च सत्यस्य सर्वमहत्त्वमुपपन्नं भवति।

## (१३) धर्मो रक्षति रक्षितः

चरितो धर्मो धार्मिकं रक्षतीति प्राञ्चोऽर्वाञ्चश्च समं प्रतिपन्नाः पण्डिताः। तथा हि वनं प्रव्रजन्तं रामं वत्सला कौसल्या स्माह—

यं पालयसि धर्मं त्वं प्रीत्या च नियमेन च।
स वै राघवशार्दूल धर्मस्त्वामभिरक्षतु॥ इति।

इह तावद् विवेच्यं कोऽसौ धर्मो नामार्थो यो रक्षितः संस्तद्वन्तं तदुपपन्नं जनं रक्षतीति। 'यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्म'इति काणादाः। अत्र कुतोऽभ्युदयादेः प्रसिद्धिर्भवतीति शब्देन नोक्तमिति धर्मजिज्ञासा न शमं याति। व्याख्यानतस्तु यागदानाद्यनुष्ठानजनितो धर्मोऽभ्युदयहेतुरष्टाङ्गयोगानुष्ठानजनितश्च निःश्रेयसहेतुरिति विशेषप्रतिपत्तिर्भवति। आपस्तम्बस्तु 'नेमं लौकिकमर्थं पुरस्कृत्य धर्मांश्चरेत्। निष्फला ह्यभ्युदये भवन्ति। तद्यथाऽऽम्रे फलार्थे निमिते' छाया गन्ध इत्यनूत्पद्येते एवं धर्मं चर्यमाणमर्था अनूत्पद्यन्ते। नो चेदनूत्पद्यन्ते न धर्महानिर्भवति' इत्याह। एतेन धर्मस्याभ्युदयप्रयोजनतां प्रतिषेधति। चोदनालक्षणोऽर्थो धर्म इति जैमिनीयाः। वेदबोधितकर्तव्यताको यागादिर्धर्म इति हि तदर्थः। श्रुत्युक्तो विधेयार्थो धर्मः स्मृत्युक्तश्च तदुपजीविनः। ततश्च धर्मो द्विविधः श्रौतः स्मार्तश्च। जैमिनीये धर्मलक्षणे वृत्तं नान्तःपततीत्यव्याप्तिः। किंवृत्तोऽधिक्रियते, वृत्तभ्रंशे शीलभ्रंशे वा तस्य तत्तत्कर्म समृध्यति न वेति नावधारितम्। यस्मान्मानुष्यकोपपादके वृत्तशीले नैव क्रोडीकरोति। 'आचारहीनं न पुनन्ति वेदा' इत्यन्यत्र स्मरणाज्जैमिनीयानां चाभिमतत्वादयमत्राभिसन्धिस्तेषां प्रतिभाति—

१. आरोपिते।

धर्मशब्दो हि मुख्यया वृत्त्या पारलौकिके यागादौ वर्तते, लोकाभ्युदयिके सदाचारे तूपचर्यंत इति । इष्टापूर्तं धर्म इत्यनवद्यं मदुपज्ञं धर्मलक्षणम् । नेदं ग्रन्थारूढमिति, साद्यस्कमागन्तुकमिति वा न सहसा परास्यं भवति । अनेनसंग्रहेण जैमिनीयं लक्षणं निखिलेन परिगृहीतं भवति । नैकदेशोऽप्यस्य हीयते । पूर्तग्रहणेन चात्र तल्लक्षणं यथेष्टमाप्याययते । तेन च वृत्तशीले अप्यास्कन्देते[1] इति सर्वमवदातं भवति । पूर्तेन नामेष्टं सनाथ्यते इति स्पृहणीयतरं तज्जायते ।

'शुचौ तु चरिते शीलमि'ति यदा शीलशब्दार्थस्तदा वृत्तशब्देन नार्थः । यदा पुनः शीलशब्देन स्वभावोऽभिधीयते तदा वृत्तशब्दः समभिव्याहृतोऽर्थवान्भवति । यो हि विधिवत्पावकं जुहोति देवांश्च यजते लोकाभिप्रेतसिद्धये चोद्युङ्क्ते, पथा याति न चापथा स धर्मं चरतीति धार्मिक इति समाख्यया प्रथते । 'आचारः परमो धर्म' इत्याचारस्य धर्मे प्राधान्यं स्मरति मनुः ।

अस्ति नाम काचिदाचारपद्धतिर्विधिनिषेधोभयात्मिका स्मृतिकारैः प्रणीता सद्भिश्चानुष्ठानेनानुगृहीता । सन्ति चेह केचित्पुण्यपरिपाकनिर्धूतपाप्मानो महात्मानो ये स्मृतिनैरपेक्ष्येण प्रवृत्ता अप्रचोदिता एव तद्वचनैर्निसर्गत एव तांस्तानाचारान्परिपालयन्ति । ते भगवन्तः प्रमाणभूता आचारेऽनुवृत्त्याः ।

यो ह्याचारलक्षणे धर्मे व्यवस्थितः स शुचिर्भवत्यर्थं, शुचिः काये शुचिश्च वाङ्मनसयोः । स सर्वत्राप्तवाङ्मैत्रः करुणोऽनभिद्रोहश्च भवति । स परदारान्मातृवत्स्वसृवच्च पश्यति, परस्वेषु च न गृध्यति । स्वार्थं समीहमानोऽपि परार्थं न प्रणिहन्ति, प्रत्युत परार्थं घटमानः स्वार्थमपि हिनस्ति । इदंलक्षणेन धर्मेण न केवलं लभ्यते अतो बलोपजनश्चाप्यस्य भूयाञ्जायते । निर्भीकताप्यसाधारणी प्रसूयते । मृत्योरपि नोद्वेगः समुत्पद्यते । 'प्रायेणाकृतकृत्यत्वान्मृत्योरुद्विजते जन' इति हि भारतेऽभ्युक्तम् । एवं बलान्वितं तं धार्मिकं को धर्षयेत् को वा धृष्णुयाद्दुर्धिसितुम् ।

---

1. आक्रम्येते, संगृह्येते इत्यर्थः ।

धारणाद् धर्म इत्याहुः। इदं च कालत्रयेऽप्यबाधं वचः। धर्मो हि चरितो धार्मिकं धारयति रक्षति। धार्मिकाणां हि लोकयात्रा नैकान्ततः सुखमयी भवति। प्रायशः पुरातनेष्वितिहासेषु धर्मप्रवचनेषु चोदाहृतास्तास्ताः कर्कशाः परीक्षा या धार्मिकानन्तराऽन्तरोपानम, याश्चान्तेते महाभागाः समुदतरन्। शिबिर्नाम महाराजः किल कारुणिक आतिथेयः शरण्यश्च बभूव। प्राणव्ययेनापि शरणागतं ररक्ष। एकदा देवैश्चिन्तितमयं धर्मे परीदयतामिति। ततोऽग्निः कपोतरूपमास्थाय तं राजानं प्रत्युत्पपात, इन्द्रश्च श्येनो भूत्वा तं कपोतमनुससार। प्रथमं कपोतो राजानमुपपेदे, श्येनेनानुसृतोऽहं त्रातारं त्वामुपस्थितोऽस्मीति च निजगाद। राजा चैतच्छ्रवणसमनन्तरं तस्मा अभयं ददौ। पश्चादुपनतः श्येनो नृपतिमभ्युवाद—इदं मे भोज्यं मेऽर्पय। धार्मिकस्त्वं नार्हसि [1]मद्भोज्यमामष्टुंमिति। राज्ञा प्रत्यूचे—अयं कपोतो मां शरणमागतो मयाङ्गीकृतः, अभयं चास्मै प्रतिश्रुतमिति नायमिदानीं शक्यते विहातुम्। अन्यदामिषं तत्संमितं परिग्रहीतुमर्हसीति। परं श्येनो नेदं वचः [2]प्रतिपेदेऽभिदधे च नाहं शकुन्तान्तरस्य पश्वन्तरस्य वा मांसं परिग्रहीष्यामि, यदि कपोतं परीप्ससि[3] तर्हि स्वशरीरात्तत्तुल्यं पललमुत्खाय मे देहीति। अन्यथा ममाऽपरितोषः, तव चाधर्मेण संसर्गः प्रसक्तः। तथास्तु ममैव देहान्मांसं समुत्खन्य तुलायां धरामि, कपोतेन तुल्यभारं च ददामीति धर्माभिरामः शिबिः प्रमनाः प्रत्युवाच। महच्चाश्चर्यमाविर्बभूव—यथा यथा च भूपतिर्मांसशकलान्युत्कृत्योत्कृत्य तुलायां दध्रे तथा तथा स कपोतो भारेण सर्वं तदतिशिश्ये। अन्ते कङ्कालशेषः शिबिर्गत्यन्तरमपश्यन्नात्मना तुलामारुरोह। तदा दिवौकसः साधु साध्विति प्रवदन्तो जयतु जयतु सतामग्रणीः शिबिरिति च घोषयन्तः पुष्पवर्षं ववृषुः शङ्खांश्च दध्मुः। कपोतश्येनावपि कृतके स्वे रूपे विहायेन्द्राग्नी[4] इति प्रादुरभूतां शिबिं च दिव्ययानमारोप्य नाकमनैष्टाम्।

एवं सत्यं रक्षन्हरिश्चन्द्रो राजर्षिः प्रथमं राज्याद् भ्रष्टस्ततो दक्षिणां याचित आत्मानं सहधर्मचारिणीं च राज्ञीं चाण्डालाय विक्रीतवान्। पुत्र-

---

१. आच्छेत्तुम्। २. अङ्गीचकार। ३. परित्रातुमिच्छसि।
४. अग्निश्चेन्द्रश्च। अजाद्यदन्तमितीन्द्रशब्दस्य पूर्वनिपातः।

शोकेन च महता परिप्लुतोऽप्यात्मानं जुगोप, न क्षणमप्यवससाद, न मुहूर्तमपि व्यामुमोह, न चात्महत्यां चिचिन्त[1]।

ये हि धार्मिका इति प्रथिता विपद्भिर्दुस्तराभिराक्रान्ता धैर्यं जहति, विमुह्यन्ति वा, विलपन्ति वाऽऽत्महत्यां चिन्तयन्ति वा ते धर्मकञ्चुकाः, न धार्मिकाः।

कदाचिदबुधप्रायेऽकारणद्विषि लोकेऽस्मिन्धर्मनिष्ठस्य लोकोपकरणीकृतकायस्यापि सुजनस्य प्राणापहारो दृश्यते दुर्जनकृतः। तत्र धर्मो धार्मिकं न गोपायतीति प्रतिभासते। परमिदमत्र रहस्यं वाच्यम्। न हि शरीररक्षैव रक्षाशब्दवाच्योऽर्थः। इदं हि दर्शनमर्वाग्दृशाम्। अपरमेव पश्यन्ति लोका न परम्। ध्रुवस्यात्मनोऽर्थेऽध्रुवाः प्राणा यान्ति चेत्कामं यान्तु। आत्मस्वरूपं तु विशुद्धं रक्षितं तिष्ठति। नार्जितो धर्मः केनापि शक्य आच्छेत्तुमुच्छेत्तुं वा।

एव चात्र वक्तव्यम्—यथा रक्षितो धर्मो रक्षति रक्षितारं तथा हतोऽपि धर्मो हन्त्येव हन्तारम्। दृश्यते हि लोके पापसमाचाराः कञ्चित्कालमभ्युदयन्ते पुत्रिणः पौत्रिणश्च जायन्ते पदं चोच्छ्रितं लभन्ते परमन्तेवसीदन्ति व्यथयन्ति नितान्तं चोत्सीदन्ति। पापभरस्यासहानि महान्त्यपि कुलानि [2]कृत्याहतानीव ध्वंसन्तेऽभ्रविलायं च विलीयन्ते। उक्तं च भगवता मनुना—

> नाधर्मश्चरितो लोके सद्यः फलति गौरिव।
> शनैरावर्तमानस्तु कर्तुर्मूलानि कृन्तति॥
> न चेदात्मनि पुत्रेषु न चेत्पुत्रेषु नप्तृषु।
> न त्वेव तु कृतोऽधर्मः कर्तुर्भवति निष्फलः॥ इति।

---

१. चिती संज्ञाने इतीदित्करणाद् विकल्पितणिचकः। २. मारी नाम देवता।

## ( १४ ) किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः

[1]गीतासूपनिषत्सु 'चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागश' इत्युपोद्धत्य कर्मगहनतां प्रतिपिपादयिषन्नाह भगवान्—किं कर्म किमकर्मेत्यादि । इह श्लोकार्धे श्रूयमाणेनाकर्मशब्देनाकर्मविकर्मणी गृह्येते, कर्मशब्देन च शास्त्रीयं लौकिकं चोभयविधं कर्मेति ग्रन्थस्य पूर्वापरपर्यालोचनातः प्रतीयते । आह च—

कर्मणो ह्यपि बोद्धव्यं बोद्धव्यं च विकर्मणः ।
अकर्मणश्च बोद्धव्यं गहना कर्मणो गतिः ॥ इति ।

न हि कर्मविकर्मणोर्व्याख्यानं शक्यक्रियं लौकिकेन परीक्षकेण वापि । पुण्यपरिपाकमहिम्ना लब्धसत्त्वोत्कर्षाः क्रान्तदर्शनाः साक्षात्कृतधर्माणो महर्षय एव तत्र प्रभवो नेतरे । ते हि भगवन्तो व्यवहितविप्रकृष्टमपि करामलकवदध्यक्षयन्तः प्राणिनामदृष्टानि तत्तत्कर्मजन्यानि सम्पश्यन्तो वर्णाश्रमादिभेदेन देशकालादिभेदेन च व्यवस्थापयन्ति धर्माधर्मौ । तथा हि । क्षत्रियस्य कृते यत्कर्मेति व्यवस्थित विप्रस्य तदेवाकर्म । शत्रुनिबर्हणं हि राजन्यस्य सहजं कर्मेति निर्दिष्टं ब्राह्मणस्य तु विजानतः कुतः शत्रुः कुतस्तरां वा तन्निबर्हणम् । एवं विपर्यये यत्कुर्वाणो विप्रः साध्वाचारो भवति तदेवानुतिष्ठन् क्षत्रियः कुपूयचरणो भवति । तद्यथाऽसकृदपराध्यतोऽकारणं वैरायमाणान् [2]भ्रातृव्यान्क्षममाणो विप्र एव शोभते न क्षत्रियः । तेन पूर्वस्य लोके संभावना भवत्युत्तरस्य तु विडम्बना ।

न चैतदेव ।

संमानाद् ब्राह्मणो नित्यमुद्विजेत विषादिव ।
अमृतस्येव चाकाङ्क्षेदवमानस्य सर्वदा ॥

इति मनोरनुशासनमनुरुध्य सर्वकालं वर्तेत विप्रः [3]सेधयेच्चात्मानं संशितव्रतः । मानो हि महतां धनमिति च नाद्रियेत । लोके समादरो मे

१. गीतेत्युपनिषद्विशेषणम् । प्रायो लोके विशेष्यं न प्रयुज्यते, विशेषणमहिम्नैव विशेष्यलाभात् । यथा सागराम्बरेत्यत्र । २. शत्रून् । 'व्यन्त्सपत्ने' ।
३. सिद्धं कुर्यात् । 'सिध्यतेरपारलौकिक' इत्यात्वाभावः ।

भ्रंशाय भविष्यति नोच्छ्रयाय, स्वरूपप्रच्युतये भविष्यति न स्वरूपेऽवस्थितये, लोकेऽभिरतये भविष्यति न विरतये । किं बहुना । गरलमिव मे जीवं हरिष्यत्येष इति दूरतः परिहरणीयो मया समानः । अवमानश्चापवर्गाय कल्प्स्यतीत्यमृतमिवाकाङ्क्षणीय इति व्यवस्येत् । इतरस्य क्षत्रियादेः कृते धर्मान्तरमुपदिश्यते । न हि तेन परकृतः स्वस्य न्यक्कारः सहनीयः, अधिक्षेपो वा वाक्कृतो मर्षणीयः, किन्तर्हि समान एव सततमेषणीयः ।

पादाहतं यदुत्थाय मूर्धानमधिरोहति ।
स्वस्थादेवापमानेऽपि देहिनस्तद्वरं रजः ॥

इति च नीतिविदां प्रबोधनां हृदि निधाय प्रसभं प्रतिकर्तव्योऽपमानः । आश्रमभेदादपि व्यवस्था भिद्यते कर्मणाम् । आक्रुष्टः कुशलं वदेदिति प्रव्रजित एवानुशिष्यते धर्मं नेतर आश्रमी प्रव्रज्यायामपि न यः कश्चिदधिक्रियतेऽपि तु ब्राह्मण एव । तत्रापि न ब्राह्मणमात्रम्, किन्तर्हि परिपक्वकषायः शमदमादिसम्पत्तिसम्पन्नः किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोक इत्येवमभिलाप आत्मैक्ये प्रबुद्धः कश्चित् । इतरस्तु प्रव्रजन्धर्मं नार्जयेदित्येव न, पाप्मनाऽपि महता स्पृश्येत, मर्यादामत्येतीति च नियम्येत अनुश्रूयते हि शम्बूको नाम वृषलस्तपस्तप्यमानः पुरुषोत्तमेन रामेण प्राणैर्वियोजितः, लोकश्च मर्यादयाऽभ्युदयेन च संयोजित इति ।

वर्जयेन्मधुमांसे इति ब्रह्मचारी शास्त्रेणानुशिष्यते । अत एव किलासगृहीतस्य श्वेतकेतोराश्विनोर्मधुमांसे ते भेषजमिति श्रुतवतो 'ब्रह्मचर्यमानी कथं मध्वश्नीयामिति' प्रतिवचनं संगच्छते । गृहस्थस्य कृते वृथामांसमेव निषिध्यते । देवतातिथिसपर्यापूर्वकं भुज्यमानं तु न दोषाय भवति । तुर्याश्रमस्थेन तु भिक्षमाणेन यदेव लभ्येत तदेव भुञ्जीतेत्यभ्यनुज्ञायते । तथा हि भिक्षुः [1]सर्वान्नीनो भवति । पारिव्राजकस्य ये धर्मा 'यतिर्योऽहंलिङ्गकः स्याद् यत्रसायंगृहो मुनिरि'त्येवं सूत्रकारैरुपदिष्टा न तेऽन्येषाम् ।

शास्त्रीयेष्वपि कर्मसु न व्यवस्थितिः सुकरा । सुरापानं हि निषेधन्ति शास्त्रकारा महापातकेषु चान्तःपातयन्ति तत्रापीदं प्रथमायां कोटयां

---

१. सर्वान्नानि भक्ष्यतीति । 'अनुपदसर्वान्ने'ति सः ।

निवेशयन्ति। सुरापो हि पातकिनामुत्तमः। एवं सत्यपि सौत्रामण्यां सुरापानं न केवलमभ्यनुज्ञायते विधीयते चापि। अपाने हि [1]प्रत्यवेयाद्यजमानः। नेदृशं पापकमनायुष्यं कर्मान्तरं लोके समस्ति यादृशं परदाराभिमर्शनम् इत्युच्चैर्डिण्डिमस्तन्त्रकाराणाम्। परं भगवन्तस्त एव न काञ्चन परिहरेत्, तद्व्रतमित्युपदिशन्ति।

कालभेदेन देशभेदेनापि व्यवस्थापयन्ति धर्माधर्मौ। युगान्तरेष्वभ्यनुज्ञातो विहितश्चाश्वालम्भादिः पञ्चको विधिः कलौ प्रतिषिध्यते। तथा हि स्मरन्ति पाराशराः—

अश्वालम्भं गवालम्भं संन्यासं पलपैतृकम्।
देवराच्च सुतोत्पत्तिं कलौ पञ्च विवर्जयेत्॥ इति।

उत्तरापथे मातुलसुतामुद्वहन्पापीयाञ्जायते जनः, दक्षिणापथे तु मातुलसुतापरिणयोऽभिनन्द्यते। तदेतद् वैचित्र्यं विदुषोपि व्यामोहयति किमुताविदुषः।

शास्त्रत एव सर्वेयं व्यवस्था विधीनां निषेधानां च। इयं हि तर्कस्यागोचरः। न च तर्कस्तत्त्वावबोधैकरसः, अप्रतिष्ठो हि सः।

यत्नेनानुमितोऽप्यर्थः कुशलैरनुमातृभिः।
अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते॥

इति वचनात्। तस्मात्तर्कमात्रकृतसारध्यो जनः कृत्स्नां पुण्यपापव्यवस्थामाकुलीकुर्यात्। बहवो ह्येकस्यार्थस्येष्टानिष्टत्वे साधका बाधकाश्च हेतवो दृष्टाः। कार्यनिष्पादे सति [2]तदनुबन्धं विमृश्यापि न शक्यते व्यवस्थापयितुमिदं पुण्यमिदं पापं वेति। यत्कर्म स्वस्य वा परेषां वा सुखाय स्यात्तत्पुण्यमितरदपुण्यमिति यदि कल्प्येत तर्हि रामस्य पितुर्वचनमनुपालयतो वने वासः, तत्र च पौलस्त्यकृतं जानकीहरणं दुःखौघजनकमभूदिति पितृवचनानुरोधः किल पापकोटिमभिनिविशेत। एवमैक्ष्वाको हरिश्चन्द्रो राजर्षिः प्रतिश्रवो रक्षणीय इति विश्वामित्राय मनसा प्रतिश्रुतं राज्यं सम्प्रदाय राज्यभ्रष्टः पुत्रेण प्रियेण विप्रयुक्तश्चाण्डालाय यदात्मानं [3]सपरिग्रहं व्यक्रीणीत तेन च यच्छब्दैरनाख्येयं दुःखजातमाश्नुत तन्मनसिकृत्य न

---

१. कुप्येत। प्रत्यवपूर्वाद्धिणो किङ् रूपम्। २. तत्परिणामम्। ३. सपत्नीकम्।

पार्यतेऽभिलपितुं तत्तस्य कर्माभूद्विकर्म वेति। अत एव पुण्यपापव्यवस्थायामनीशाँल्लोकानालोक्य भगवता पराशर्येण सर्वप्रबोधनायोद्घोषितम्—

इदं पापमिदं पुण्यमित्येतस्मिन्पदद्वये।
आचण्डालं मनुष्याणां समं शास्त्रप्रयोजनम्॥ इति।

भगवता कृष्णेन चायमर्थः 'तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थिताविति गीतास्वनूदितः। वाक्यपदीयकारोपि स्ववृत्तौ स्माह—केचिदाचार्या मन्यन्ते—न प्रकृत्या किंचित्कर्म दुष्टमदुष्टं वा। शास्त्रानुष्ठानात्तु केवलाद्धर्माभिव्यक्तिः। शास्त्रातिक्रमाच्च प्रत्यवाययोग इति।

इदं चात्राधिकं वाच्यम्—त्वरितमनारतं च परिक्रामति संसारचक्रे नूतननूतना अननुभूतपूर्वाः समवस्थाः पुरुषस्यापतन्ति। व्यामोहाय च भवन्ति। तैस्तैर्दुःश्रन्थग्रन्थिभिराकुलीक्रियन्ते शास्त्रपारदृश्वानोपि, किमुतानाघ्रातशास्त्रार्थाः।

इत्थं कर्मविकर्मणी निरूपिते। तदानीमकर्मव्याख्यानं प्राप्तावसरमिति तत्प्रस्तूयते। अकर्मशब्दे नञ्भावे न कुत्सायां तस्या विकर्मशब्देनोक्तत्वात्। कर्मशब्देन प्रवृत्तिरुक्ताऽकर्मशब्देन च निवृत्तिरुच्यते। सा चोपरामलक्षणाभिप्रेता साङ्ख्यस्य, कर्मयोगिणस्तु 'न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषत' इति कर्मफलसंन्यासलक्षणा। यो हि कर्तव्यमित्येव कर्मणि प्रवृत्तः फलेष्वनासक्तः स आपाततो व्यग्रं व्याप्रियमाणोपि वस्तुतो नैव किञ्चित्करोति। न हि तस्य कर्मफलं हेतुः। फलेनाप्रयुक्ताऽकामतोऽस्य सर्वा प्रवृत्तिरिति निवृत्तिरेव सा भवति। यस्मात्प्रयोजकताविरहितमिदं ममेतिभावविधुरं कृशीभूतं कर्म निर्दग्धबीजमिव प्ररोहेऽसमर्थं परिणामेऽकर्मतां याति। यस्तु खलु तत्तत्कामसंकुलमानस उपरतम्मन्योऽनीह इत्याभासते स कृत्स्नकर्मकृदिति स्थितिः। न ह्यनुद्योगोऽप्रवृत्तिरेव वा कायिक्यकर्मेति भ्रमितव्यम्। यो हि काष्ठमौनमाकारमौनं वाऽऽस्थितः स न वक्ति, नियन्त्रिताऽस्य जिह्वेति मा भूत्ते मिथ्याप्रत्ययः। स तथैव प्रवृत्तिमान् यथान्य उच्चरितवाक्। यावच्च कालस्तन्मूलं संकल्पो वा नोच्छिद्यते तावत्कुतः सर्वारम्भपरित्यागः। न ह्यग्निहोत्रादीनां केषांचित्कर्मणां त्यागेन नैष्कर्म्यम्, तत्तत्फलत्यागेनैव तत्सिद्धेः। अतः कर्माकर्मणो-

रेष भेदो विदग्धैर्निर्ग्राह्यो न त्वविदग्धैः। उक्तं हि भगवता—

> कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः।
> स बुद्धिमान्मनुष्येषु स युक्तः कृत्स्नकर्मकृत्॥ इति।



## (१८) कर्मण्येवाधिकारस्ते मा फलेषु कदाचन

इच्छात एव मनुजवर्गस्य प्रवृत्तिः। इष्टमभीप्सन्ननिष्टं वा विजिहासन्नरः कर्मसूच्चावचेषु प्रवर्तते। अलब्धं लिप्समानो लब्धं वा पर्यवेक्षमाणः सर्वात्मना यतते। एष निसर्गो जीवलोकस्य। 'प्रयोजनमनुद्दिश्य न मन्दोपि प्रवर्तत' इत्याभणन्ति लौकिकाः। स्वार्था परार्था वा सर्वापि प्रवृत्तिः कामायत्ता। सामान्यास्तु स्वार्थमेवाभिप्रयन्तः प्रवर्तन्ते। ते परार्थं नैवानुसन्दधते। कल्याणप्रकृतयः केचन परार्थं 'घटन्ते। तेषां तथा घटमानानामपि स्वार्थमन्तराऽनारम्भः। येप्यदभ्रमर्थं सत्कर्मसु प्रकुर्वते², पान्थविश्रमायावसथान्कारयन्ति, पाठालयान्वा प्रवर्तयन्ति, वापीकूपतटाकादीनि खानयन्ति, आरामांश्च कारयन्ति, तेपि स्वार्थप्रयुक्ता एव प्रवर्तन्ते। अयं च तेषां हृदि कामः शेते—लोका अस्मान्धनिका इति प्रथयन्तु, दानशौण्डाः परोपकरणीकृतकाया अमी इति नः कीर्तयन्तु करुणावरुणालया इम इति च नो वर्णयन्त्विति। येऽपि सुकृतिनः कृतिनो भगवन्तं भजन्ते तेपि प्रायशोऽर्थमेवानुरुध्यन्ते। स्वो³ मे स्यात्, पुत्रवानहं स्याम्, कलत्रं मे स्यात्, ज्ञातयो मे स्युः, दुःखं मेऽपेयात्, सुखं चोपेयात्। नाको मे स्यान्नरको मे मा भूदित्येवं विविधं कामयमानाः परमेशमाराधयन्ति।

सर्वा समीहा काममूलेति मीमांसका अपि लौकिकवत्प्रतिपन्नाः। नित्यनैमित्तिककाम्यनिषिद्धानि चतुर्धा कर्माणि ब्रुवन्तोपि ते स्वर्गकामो यजेतेत्यादि प्रमाणयन्तः फलमेव प्रयोजकमाहुः। फलमनभिसन्धाय न प्रवर्तते लोकः कर्मस्विति सुष्ठ्व⁴नुभवन्तीतिहासपुराणान्यपि सुकृतामुच्चैर्गतिमुदाहरन्ति प्ररोचयन्ति च कर्म वैदिकं लौकिकं च। एवं सांसिद्धिके⁵फलाभिलापे

१. चेष्टन्ते। २. विनियुञ्जते। उपयोगेऽर्थे तङ्। ३. धनम्। ४. इति शतरि रूपम्। ५. स्वाभाविके।

फलोद्देश्यकासु च चोदनासु[1] सतीषु कर्मफलहेतवो मर्त्या इति स्थितम्।

एवं स्थिते सकामं सर्वं कर्म बन्धाय कल्पयतीति च निर्विवादम्। फलं हि भोगाय भोगायतनं शरीरमपेक्षते। तदवाप्तौ यथापुरमाचर्यमाणेषु कर्मान्तरेषु पुनः पुनः शरीरान्तरापत्तिः। एवं शरीरेन्द्रियानिर्मोक्षप्रसङ्गः। तेन परस्य पुरुषार्थस्यात्यन्ताय प्रहाणम्। अस्य महतोनिष्टस्य कः परिहार इति चेच्छृणु। 'कर्मण्येवाधिकारस्ते मा फलेषु कदाचन। मा कर्मफल-हेतुर्भूर्मा ते सङ्गोस्त्वकर्मणी'त्युपदिष्टोऽसौकारुणिकेन सर्वलोक सुहृद्भूतेन भगवता वासुदेवेन गीतासु।

विधीयन्ते कर्मफलानि न तु कर्माणि स्वतः फलानि प्रसुवते। विधा-तर्यायतन्ते तानीति तस्मिन्भगवति समर्प्याणीमानि। तथा हि सूत्रकाराः समामनन्ति—अग्निहोत्रं जुह्वता यजमानेन 'इदमग्नये, इदं न ममे'ति प्रत्याहुति स्वत्वमपलाप्यम्, अग्निस्वामिकत्वं च हव्यस्य प्रख्याप्यम्। फला-नभिसन्धिपूर्वकं क्रियमाणानि कर्माणि समृद्धानि न सुखयन्ति, व्यृद्धानि च न दुःखयन्ति। इच्छाव्याघातो हि दुःखम्। इच्छावाप्तिश्च सुखमिति तदुच्छेदे सुखदुःखयोरपहतिरर्थादापन्ना। मया कृतान्यपीमानि कर्माणि लोकसंग्रहार्थानि न मदर्थानीति तद्विपत्तौ किमित्यनुसंज्वरेयम्। यथा साङ्ख्यः 'प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वश' इति ज्ञानवानकर्तार-मात्मानं मत्वा नेन्द्रियैः कृतेन कर्मणा संस्पृश्यते मात्रयापि तथाऽऽप्तका-मोऽकामः कर्मयोगी खल्वपि न लिप्यते स्वेन सुकृतेन दुष्कृतेन वापि। न हि कर्मयोगिणः किमपि भोग्यमस्तीति सोऽपवृज्यते[2]।

प्रवृत्तिनिवृत्तिमार्गौ शास्त्रेषु सप्रपञ्चमुपवर्णितौ, महर्षिभिरधिका-रिभेदेन च व्यवस्थापितौ। निष्कामकर्मयोगस्तु न क्वचित्प्रपञ्चितो विलो-क्यते। मन्त्रवर्णेष्वपि प्रवृत्तिरेव प्रधानं फलकामना चोद्भटा। 'तेन त्यक्तेन भुञ्जीथा' इत्यत्र यजुषि 'न कर्म लिप्यते नर' इत्यत्र च फलसंन्यासाक्षेप इति विपश्चितः। एतदभ्युपगम्यापि नैतदपलाप्यं भवत्ययमर्थः सर्वप्रथमं भगवता वासुदेवेन विवृतो गीतासु ज्ञानप्लवश्च संसारार्णवसन्तरणाय लोकस्य निर्मित इति।

---

१. विधिवाक्येषु। २. कैवल्यमाप्नोति।

**(१६) न जातु कामः कामानामुपभोगेन शाम्यति।**

**हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते॥**

इह कामो नामाभिलाषो गर्धः, कामाश्च काम्या इन्द्रियार्था विषयाः। 'पुलुकामो हि मर्त्य' इत्यृषयः समामनन्ति। प्रत्यक्षं चैतदनुभूयते लोके। तत्तत्कामावाप्त्या सुखं मे भविष्यतीति सुखार्थी तांस्तान् कामाननुधावति। तेषु तेषु विषयेषूपस्थितेषु साम्रेडं श्रुतेषु दृष्टेषु वेम एवंरूपा ग्राह्या इति संकल्पस्तेषु जायते तदनु यो गर्धस्तेषूपजायते स कामः। इदं नाम महद् वैचित्र्यं यदन्यत्सर्वं जीर्यति, मन्दायते, क्षीयते च, विषयोपभोगतर्ष एव तु न कदाचिद् विरमति, न ह्रसति, न क्षीयतेऽपि तु वर्धत एव। यथानभ्युपाय एषोऽग्नेः शमनस्य यो हव्यप्रक्षेपः। एवं तं तमर्थमुपभुज्य वैतृष्ण्यं मे भविष्यति विरतिश्चेति मनोराज्यविजृम्भणं केवलम्। तस्मादनुपायः सुखस्य भोगाभ्यासः।

रम्याणि वीक्षितान्यसकृदिति किं भूयो रमणीयतादर्शनलोलं न भवति मानसम्। आ जन्मनः सूर्यचन्द्रतारकाणां [1]दीप्तिकान्तिद्युतीर्दृष्टवान्देही किं ग्लायति ताः पुनर्द्रष्टुम्। किं वाऽनेनानवद्यहृद्यरूपा अतिशिरीषसौकुमार्याः स्मितपूर्वभाषिण्यो विभ्रमैकवसतयो युवतयो न दृष्टपूर्वा यदद्यापि परपुरुषदर्शनं परिहृत्य यान्ती कुलाङ्गनामनक्षिलक्षीकृत्य नातियाति। किं वा विरसीकृतकलकोकिलकण्ठस्य रागपरीवाहेणावर्जितसकलसामाजिकस्य गाथकानां धुरि कीर्तनीयस्य श्रीविष्णुदिगम्बरस्य वोङ्कारनाथादीनां तच्छिष्याणामन्यतमस्य वा हृदयसंवननानि गानानि न पुराऽऽकर्णितानि यदस्याद्यापि मधुरशब्दनिशमने न हीयते कलयापि लालसा। किं वाऽनेन बाल्ये यौवने वा नानाव्यञ्जनोपसिक्तानि घृताढ्यानि नान्नानि भुक्तानि महाधनानि यदिदानीमपि तत्र तत्र नवनवेष्वभ्यवहार्येष्वस्यासुतर्पोऽभिलाषः समुन्मिषति। किं

---

१. दीप्तिकान्तिद्युतीनामदूरविप्रकर्षात्पर्यायता। वस्तुतो भिन्नार्था इमे शब्दाः। तथा च भारते प्रयोगः—दीप्तिकान्तिद्युतिगुणैः सूर्येन्दुज्वलनोपमः। (आ० १८।३)

च न खल्वनेन मृदूनि भास्वराणि महार्हाणि दुकूलानि निवसितानि,[1] कौशेयप्रच्छदानि सोपबर्हाणि शयनीयानि वाऽधिशयितानि यदद्य भूयोपि सान्द्रस्पर्शे कर्बुरे कान्तिमती वाससी कामयते वसितुम्, कोम-लास्तरणायां शय्यायां वा संवेष्टुम्। किं वाऽनेनामोदनिर्भरा मालती-मालाः सुरभिगन्धयः[2] पुण्डरीकस्रजो वा न शिरोवतंसतां नीताः कदाचिद् यदद्यापि वर्धतेऽस्य सौरभे लौल्यम्। अत्र योगभाष्यकृत एवं मर्मोद्घाटयन्ति—'न चेन्द्रियाणां भोगाभ्यासेन वैतृष्ण्यं कर्तुं शक्यम्। कस्मात्? यतो भोगाभ्यासमनु विवर्धन्ते रागाः कौशलानि चेन्द्रियाणामि'ति। अयमत्र सारः—पुनरुक्तभूतविषया इन्द्रियाणां व्यापाराः। चर्वितचर्वणमाचरन्तोपि वयं न कदाचिद् विरज्यामः। तत्तदर्थभोगमभ्यस्यन्तीन्द्रियाणि तेषु तेष्वर्थेष्वधिकाधिकं रज्यन्ते रक्तानि च प्रसजन्तीति किमत्र चित्रम्। वयःपरिणामे धातुसंक्षयेप्यपरिण-तानि तानीति विषयग्रहणासमर्थान्यपि पूर्ववल्लोलुपानि विषयप्रसङ्गं न मुञ्चन्ति वासनास्थैर्यात्। एवं दुस्त्यजः कामो दुरुपशमश्चेति स्थितम्। असाधुदर्शी किलासौ योऽस्योपभोगेन शमं पश्यति।

अनन्ताः खलु कामाः। न हि ते शक्या इयत्तया परिच्छेत्तुम्। तथापि पुत्रधनख्यातिगोचरास्त्रयः कामाः प्रसिद्धा लोके। त एते शास्त्रे पुत्रैषणा, वित्तैषणा, लोकैषणेति समाख्याता यथासंख्यम्। पुत्रो मे जायेतेति को नाम न कामयते। लोकस्य निग्रहानुग्रहयोः प्रभवो भुवः परिवृढा अप्यनपत्यतां शोचन्ति। एवं हि सन्तप्यतेऽनपत्यो दुष्यन्तः—'नूनं प्रसूतिविकलेन मया प्रसिक्तं धौताश्रुशेषमुदकं पितरः पिबन्ति।' इति।

दुर्गतस्यान्धस्यानेडमूकस्याप्ययमभिलाषः पुत्रो मे जायेतेति। यस्य खलु पुत्रो जातः सोऽभिलष्यति द्विपुत्रः स्यामिति एकैकस्य सुतस्य[3] मातर-पितरौ स्नेहान्धौ भवत इति द्वितीयः काम्यते। द्वितीयस्मिञ्जाते तृतीय इष्यते बलोपचयाय, ततश्चतुर्थस्ततः पञ्चम इत्यविरामः कामस्य।

द्वितीयो धनकामः। अयमपि दुरुच्छेदः। अर्था अनर्थकरा इति जानन्नपि जनस्तान्कामयते, एतॉंल्लब्धवतोपि नालंबुद्धिरस्य तंपु भवति।

---

1. वस आच्छादने—क्तः। 2. इकारः समासान्तः। 3. 'मातरपितरावुदीचाम्'।

नैष तेषां[1] तृप्यति सुराया इव दुर्मदः । नक्तन्दिवं तानेवानुध्यायति, तानेवानुधावति, तदर्थमेव प्रयस्यति, नान्यच्छृणोति, नान्यद्विजानाति, नान्यदनुतिष्ठति । यः खलु निःस्वः स इच्छति स्वो मे स्यात् , यः स्ववान्भवति स इच्छति प्रभूततराः स्वा मे स्युरिति । यः खल्वधिकारमध्यास्ते स इच्छति गुरुतरमध्यासीयेति । तदुक्तं कविना—

> "निःस्वो वष्टि शतं शती दशशतीं लक्षं सहस्राधिपो
> लक्षेशः क्षितिपालतां क्षितिपतिश्चक्रेशवत्सम्पदम् ।
> चक्रेशः पुनरिन्द्रतां सुरपतिर्ब्रह्मत्वमाकाङ्क्षति
> ब्रह्मा विष्णुपदं हरिर्हरपदं लोभावधिं को गतः ॥ इति ।

तृतीयश्च ख्यातिकामः । अयं हि सर्वेषां दुरुच्छेदतमः । इममेवार्थमनुवदति पोपनामा हरित्रर्षीयः कविर्यदाह—यशस्काम्या नामात्यन्तं दुरपनया दुर्बलता मानुष्यकस्येति । अत एव 'यशःशरीरे भव मे दयालु'रिति प्रार्थयते मायामृगेन्द्रं दिलीपः । इह सर्व इच्छति यशस्वी स्यामिति, कीर्तयन्तु मन्नामधेयं लोका इति । यस्य जननस्थाने ग्रामे पत्तने वा कीर्तिः प्रथिता स इच्छति जनपदे कृत्स्ने राष्ट्रे वा सा प्रथतामिति ।

एवं सर्वे कामाः स्थूलाः सूक्ष्माश्च न निवर्तन्ते सन्ततेनोपभोगेन किन्तर्हि विवर्धन्त इत्युदाहृतेऽर्थे ययातिवृत्तान्तो निदर्शनम् ।

नाहुषो ययातिः किल विधिवत्प्रजाः पालयामास बहुभिश्च यज्ञैरीजे, चिरं च दुश्चरं तपस्तेपे । एव चरितव्रतस्य तस्य कामरूपः पुरुषार्थो मे हीन इति बुद्धिरुपजज्ञे । ततो यदुप्रभृतीन् सुतानुपेत्य स तान् जरां मे प्रतिगृह्णीत यौवनं च स्वं मे दत्तेति ययाचे । कामांश्चरिष्यामि पुत्रकाः ! साहायकं मे कुरुध्वमिति । यदोः कनीयान्पुरुस्तदङ्गीचकार । ततः प्रत्यापन्नयौवनो ययातिर्वर्षसहस्रं पत्नीभ्यां विजहार चैत्ररथे विश्वाच्याऽपि चिरं रेमे परं नासौ ततर्प कामानाम् । ततस्तत्त्वे प्रबुद्धः कामेभ्यश्च परिग्लानः[2] स यौवनं पुरवे प्रतिदाय जरां प्रत्याददे गाथां चेमां जगौ—

---

१. सुहितार्थैः षष्ठीसमासनिषेधाल्लिङ्गात्तद्योगे षष्ठीशाऽऽचार्यस्येत्यनुमीयते ।

२. इति चतुर्थ्यन्तं न पञ्चम्यन्तम् । पर्यादयो ग्लानाद्यर्थे चतुर्थ्येति लिङ्गात् ।

'न जातुः कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥' इति ।

एवं स्थिते—वाञ्छाविच्छेदनं प्राहुः स्वास्थ्यं शान्ता महर्षयः ।
वाञ्छा निवर्तते नार्थैः पिपासेवाग्निसेवनैः ॥ इति ।

इदं च वाञ्छाविच्छेदनमतीव दुष्करम् । तथा हि भणितं भर्तृहरिणा—

"अजानन् दाहात्म्यं पततु शलभस्तीव्रदहने
स मीनोऽप्यज्ञानाद् बडिशयुतमश्नातु पिशितम् ।
विजानन्तोऽप्येते वयमिह विपज्जालजटिलान्
न मुञ्चामः कामानहह गहनो मोहमहिमा ॥" इति ।

सेयं कामोच्छित्तिः कामानां दोषवत्त्वं तुच्छत्वं चानध्यवसाय न शक्या सम्पादयितुम् । चतस्रो ह्यवस्थाः कामानाम्–प्रसुप्ता तन्वी विच्छिन्नोदारा चेति । सर्वावस्थस्य कामस्योन्मूलनं संयतेन्द्रियैरपि दुष्करं किमुतायतेन्द्रियैः । जन्मान्तरेषु भुक्तास्ते तेऽर्था इति तद्वासना अन्तःकरणे प्रसुप्ता इव वर्तमानास्तस्मिंस्तस्मिन्नर्थे संनिकृष्टे सति पुनः प्रतिबुध्यन्ते. अयमेवार्थो मयाऽऽस्वादितपूर्वः सुखदाभूदिति स्मरति चेतः, क्षिप्रमवशं च तमनुधावति न च शक्यते नियन्तुम् । यदा पुनर्बाह्या विषयास्तुच्छा न सन्तीति वाऽध्यवसीयन्ते तदा विषयाभावाद् विलीयते कामः, समाधीयते धीः, प्रतितिष्ठति प्रज्ञेति सर्वमनिष्टं प्रहीयते । नान्योऽतोऽस्ति पन्थाः । अतोऽतिरिक्तं रिक्तं वच इति शम् ।

## (१७) न तितिक्षासममस्ति साधनम्

तितिक्षा क्षान्तिः क्षमेत्यनर्थान्तरम् । परेणापकृतस्य सहनं तितिक्षेति रूढिः । इयं हि शमादिषट्कान्तःपातिनी । तथा च वेदान्ताः—तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वा (श्रद्धावित्तो भूत्वा) ऽऽत्मन्येवात्मानं पश्यतीति ।

एष हि निसर्गो भूतजातस्य यदपकारासहनम् । यथात्र विषये मृगशकुनीनां सरीसृपादीनां समाचारस्तथा मनुष्याणाम् । अमी ह्यपकारसहनं

स्वस्य दौर्बल्यं वा जाड्यं वा न्यग्भावं वाऽवक्षेपणं वाऽऽकलयन्ति । तेन सति सम्भवेऽणुमप्यपकारं न मर्षयन्ति, वैरायमाणे न जने शतगुणं वैरायन्ते । यो खल्वेकमर्थं परस्य कस्यचिन्निहन्ति तस्य शतमर्थाननपहत्य न शाम्यति परः । कदाचित्स[1]न्तानवाहीनि मरणान्तानि वैराणि दृश्यन्ते कदाचित्कुलानुसंक्रमीणि । एष लोकसमाचारः । शास्त्राणि तु सहिष्णुतामुपदिशन्ति तत्रैव च श्रेयः पश्यन्ति मानुष्यकस्य । भिद्यन्ते हि दर्शनानि परोक्षदर्शिनामपरोक्षदर्शिनां च । लोकास्तु ह्रस्वं पश्यन्ति न दीर्घम्, अपरं पश्यन्ति न परम् । [2]सान्दृष्टिकमेवानुरुध्यन्ते न तूदर्कम् । शमं हि सर्वे शास्त्रैकचक्षुष्का लोकैकचक्षुष्काश्च. [3]कारिता अकारिताश्च कामयन्ते तदर्थं च प्रवर्तन्ते । द्वेधा च प्रवृत्तिर्द्वयानाम् । पूर्वेऽकारणद्विषोऽप्यपक्रियां स्वार्थहत्यां विमाननां वा निष्कृतिकल्पा अपि तूष्णीं सहन्ते, न च तस्यानिष्टमनुध्यायन्ति नोत व्यवस्यन्ति कदर्थनं समुत्सादनं वा । एवं हि ते मन्यन्ते—नास्माभिरस्मिन्नपकर्तरि दण्डः प्रणेयः, विपद्यन्तेऽस्य कर्माणि, कालेन, वितरीष्यति विधिरेव फलमित्यत्रोदासितव्यं नः । शक्यं चेत्प्रणयोस्मिन्कार्यः, सौहार्देनात्र वर्तितव्यम् , परोक्षमसौ सुहृज्जनगोष्ठ्यामभिष्टोतव्यः, इत्थं च वैरबुद्धिं सन्त्याज्यः । इदं च ते पश्यन्ति—वैरनिर्यातनं नाम श्वापदीयो न्यायः । वैरं निर्यातयन्नरो वैरिणा साम्यमेव भजते, क्षाम्यंस्तु ततः कियताप्युत्कृष्यते । यस्मात्क्षमा खलु राजार्हं कृत्यम् । राजा हि राजते क्षमया प्रजास्वपराद्धासु । इतरोपि क्षमावान् [4]राजानतीत्युपचीयतेऽस्य महिमा, यदतीतं नाम तद्गतमसंनिवृत्त्यै । सुमेधसो हि वर्तमानेष्वर्थेषु प्रकामं प्रसजन्तोऽनागतांश्च चिन्तयन्तोऽतीतान्व्यतिकरान्परामष्टुं [5]भावयितुं वा कालं न लभन्ते । न च कस्यचिदपकारार्थंवापकिकीर्षा । यदि कश्चिन्नोऽपकरोति स तेनात्मनोर्थे लाभं वा विनोदं वा मानं वा लिप्सतेऽन्यद्वाऽभीष्टं मृगयते, तस्माद्यद्यात्माऽस्याऽस्मत्प्रियतरस्तर्हि कमस्मा अभ्यसूयितव्यं नः । इदं

---

१. सन्तानेन सातत्येन वहन्तीत्येवंशीलानि । २. सद्यः फलम् । ३. शिक्षिताः । कारितशिक्षिते इति विशेष्यनिघ्नवर्गेऽमरः । ४. राजेवाचरति । क्विप् । ५. चिन्तयितुम् । भुवोऽवकल्कने चुरादिः ।

विसदृशमस्माकमिति। इदं च भूय उत्प्रेक्षन्ते—यो नाम प्रतिक्रियां चिन्तयति न तस्यापकारप्रयुक्तानि क्षतानि संरोहन्ति, पूयक्लिन्नानि च तिष्ठन्ति, निरन्तरं च दुन्वन्ति। तेन प्रतिचिकीर्षा दुःखायैव स्वस्य सम्पद्यत इति स्थितम्।

एवं विगलितायां वैरभावनायामनर्थिकायामनर्थकारिकायां च वैर-निर्यातनायां स्थितायां तितिक्षायां परमे तपसि वर्तमाना महाभागा लोकै-र्विप्रकृता अपि, बलवदाक्रुष्टा अपि, प्रहारशतजर्जरिता अपि [1]प्राणात्ययं प्रापिता अपि ताननुग्राहकानिवाशीर्भिर्गुर्वीभिर्वर्धयन्ति न च मन-सापि शपन्ति। तदवस्थास्तच्चरिता इमे कविनान्योक्तिसमाश्रयेणेत्थम-भिष्टूयन्ते—

पाटीर तव पटीयान्कः परिपाटीमिमामुरीकर्तुम्।
यत्पिषतामपि नृणां पिष्टोपि तनोषि परिमलैः पुष्टिम्॥"

परे त्वन्यथा प्रतिपन्नाः यो हि परकृत[2]निकृतिं तूष्णीं सहतेऽनाकुलश्च तिष्ठति, परेण प्रयुक्तया स्वार्थहिंसयाऽपि नतरां क्षुभ्यति, [3]सूचितोपि मिथ्याभिशस्तोपि क्रूरवच्चाचरितोपि तथाऽनर्थकारिणं वैरिणं प्रत्यपकर्तुं न चिन्तयते न चोत्तिष्ठते स नराधमः।

एवं हि लोकः प्रत्ययितः—क्षमा हि दुर्बलानामबलानां वा गतिः, बलवतस्तु नार्थोऽनया। यावच्चापकर्तॄनापकुर्मः, द्वेष्टॄंश्च विद्विष्मः, आक्रो-ष्टॄंश्च न भूय आक्रोशामस्तावत्कुत उपशमः, अनिरुद्धो वा प्रसरः सर्वस्य लौकिकस्य संव्यवहारस्य। इदं च मन्वते लौकिका यावच्च द्विषतो न निर्जयामो निबर्हयामो वा तावत्कुतोऽकुतोभयत्वं क्षेमो वा प्रजानां विधानतन्त्राणाम्। तेन यद्भवतु, तद्भवतु, सौख्यं वाऽस्तु दौःख्यं वा स्वार्थप्रहाणिर्वा भवतु सिद्धिर्वेति नायमर्थो गणनीयः। शत्रुत्वं तु न विषह्यं न्यग्भावस्तु न मर्षणीयः। एवं व्यवस्थितबुद्धयस्ते प्रथमापराद्ध-स्यापराधलवमपि न क्षमन्ते किम्पुनः [4]क्रियासमभिहारेणापराध्यतः। यदि कश्चित्कस्मिंश्चित्सकृत् प्रहरति तर्हि सोऽप्यस्मिन्नसकृत्प्रहर्तुमन्वेषते[5]-

१. प्राणसंशयम्। २. निकारम् = तिरस्कारम्। ३. कृतरहस्योद्भेदः। सूच पैशुन्ये इति मुख्यार्थोऽत्र गृह्यते। ४. पौनःपुन्येन। ५. एष् गतौ भौवादिकः।

ऽवसरम्। लब्धावसरश्च तथा क्षिणोत्यस्य कायं यथाऽयं हेतिततिहति-नितान्ततान्तो भवति। एवं विक्षतोऽयमपि संरूढव्रणः स्वस्तिमान् भूत्वा सामर्थ्यं च समासाद्य वैरनिर्यातनं चिन्तयते। इत्थमनन्तगोऽयं वैरानुशयः सर्वत्र लोकेऽशमं जनयति शिवं चोपमर्दयति। इदं हि प्रस्मरति लोको न हि कलिना कलिः शमयितुं शक्यो वह्निना वा वह्निः। न हि वैरशोधनेन चेतःस्वास्थ्यं व्यवहारसमाधिर्वा सुसम्पादः। मनोरथमात्रमेतदविज्ञानाम्, कल्पनैषा मन्दानां पशुवृत्तिमनतिवृत्तानाम्।

दुःसाधं साधयति क्षमा यत्तीव्रमपि [1]म्रदयति दुर्जनमपि च सुजनयति। भूयसा च दृष्टचरोऽयमर्थो लोके निरनुक्रोशा उपपीडयितार आयःशूलिका[2] वा विशसितारः[3] साधुभिस्तितिक्षुभिर्मर्षिता ह्रियाऽतुलयाभिभूता अनुशयेनोत्तमेन सन्तप्ताः प्रहाय क्रूरं समाचारं गर्हितं च व्यवहारं परमानृशंस्यं भजन्ते, साधीयश्च वर्तन्ते। परमेषा परिणतिः कालापेक्षा, लोकश्चासहः कालपर्ययस्य सद्यःफलप्रसूतिमाकाङ्क्षति, वैरनिर्यातनं च परमां सान्त्वनां मन्यते दौर्जन्यचिकित्सां च।

यदुक्तमिह चान्यत्र च क्षमा दुर्बलस्य साधनमित्यबलस्यात्मत्राणोपाय इति स स्थविष्ठो भ्रमः। क्षमी च दुर्बलश्चेति विप्रतिषिद्धम्। न ह्यनुदारसत्त्वो वैरविगणनेऽसमर्थः कश्चिदीश्वरः क्षन्तुम्। यश्च दुर्बलो दुर्व्यवहृतोऽपकृतो वा प्रतिकर्तुं न चेष्टते, स बहिः शान्तोऽप्यन्तःक्षुभितः क्रोधाग्निना दन्दह्यते। इत्थं च चिन्तयते त्वरितं मयोपायः कश्चिदास्थेयो येन बलमापाद्य ऋजु वा जिह्मं वा प्रकाशं वाऽप्रकाशं वा स्वस्यापकर्तुः प्रत्यपकुर्याम्, यथेष्टं तं क्षिणुयाम, परिहण्यां[4] वेति। इदं तर्हि व्यवतिष्ठते क्षमा बलवतां भूषणं सर्वार्थसाधकं चेति।

बलवताऽपि जनेन सुदुश्चरा क्षमेति मा मंस्थाः। सैषा बहुत्र लोके चरितचरी चर्यते च साम्प्रतमिति निदर्शनैर्द्वित्रैरुदाहरामः।

अत्र पुरातनं पौराणिका इतिहासमाचक्षते—सरस्वत्यास्तटे महर्षयः सत्रमासत। कदाचित्तेषां वितर्कोऽजायत त्रिषु देवेषु ब्रह्मविष्णुमहेशेषु

---

१. मृदूकरोति। २. तीक्ष्णेनोपायेन प्रवृत्ताः। ३. घातुकाः। ४. 'हन्तेरत्पूर्वस्ये'ति णत्वम्।

कतमः सर्वमहानिति। तज्ज्ञप्त्यै ते ब्रह्मणः सुतं भृगुं प्रैषयन्। स प्रथमं ब्रह्मसभामगच्छत्। तत्रोपेतः स पितुर्नमनं नाकुरुत न च स्तवनम्। तेनात्मभूर्भृशं चुकोप। ततः स कैलासमगमत्पार्वतीजानिं परीक्षितुम्। सोपि भ्राता मे मामुपस्थित इति प्रीतस्तं परिरब्धुमारभत। भृगुस्तूत्पथगामी कपाली श्मशाननिकेतनोऽयं देव इति पर्यहरत्तेन संसर्गमपासरच्च। तेन मन्युं गतो देवः शूलपाणिः शूलमुद्यम्य तं हन्तुमुपाधावत। अथ स वैकुण्ठं जगाम। तत्र लक्ष्म्या उत्सङ्गे शयानं भगवन्तं पदा वक्षस्यताडयत्। विष्णुस्तु स्वतल्पादवरुह्य तं मुनिं शिरसा ननाम स्वागतं च व्याजहार। ब्रह्मन्नविदित एव तवागमोऽभूत्, मर्षय व्यतिक्रमं मे, प्रसीद, क्षणमासनं मेऽध्यास्स्व। अतीव सुकुमारौ ते चरणौ वज्रकर्कशेनास्मद्वक्षसा संघट्टनेनोपपीडिताविति शङ्के इत्युदीर्य विप्रचरणौ पाणिभ्यां ममर्द। एतेन कर्मणा देवानां सत्तम इति च मानितोभूत्।

धर्मपुत्रो युधिष्ठिरः प्रथमवया एव सहिष्णुर्बभूव। एकदा किल गुरोरधीयानः स मध्येग्रन्थं मा क्रुधो विप्रकृतोपीति पपाठ। भूयो भूयश्च तान्येवाक्षराण्युवाद। क्षोभूतेपि स गुरोरग्रे तदेव समाहितचेतसाऽभ्युवाच। इत्थं साम्रेडं तमेवार्थमुदाहरन्तं तं कौन्तेयं निशाम्य गुरुर्मनाक् क्रोधं जगाम भर्त्सयमानश्च तं निजगाद—मूढ! किमिति तमेवार्थमुन्मत्तवत्पापठ्यसेऽग्रे कुतो नाधीषे सोत्कण्ठमिति तस्मै चपेटां ददौ। युधिष्ठिरस्त्वेवं सन्तर्जितस्ताडितश्चापि कलयापि नाकुप्यदवोचच्च—गुरो! क्रोधं मा कार्षीरिति भवतानुशिष्टोहं जिज्ञासे गृहीता मया हृदयेन भवदीयाऽनुशिष्टिरुत नेति। इदानीं जाने सुष्ठु गृहीता सेति सज्जोहं परस्तात्पठितुमिति।

अपरोप्युदन्तो युधिष्ठिरस्य क्षमाशीलतां परिचाययति। विजिहीर्षया द्वैतवनं प्राप्तेषु दुर्योधनादिषु सस्त्रीकेषु चित्रसेनप्रमुखैर्गन्धर्वैर्गृहीतेषु परमानृशंस्यं तितिक्षां चोपादर्शयद् युधिष्ठिरः। प्राचोदयच्च भ्रातॄन् संकटे पतिता इमे विस्मृत्य पूर्वं वैरानुशयं परित्रायन्तां गन्धर्वहस्ताच्च निर्मुच्यन्तामिति। तत्प्रयुक्तास्ते गन्धर्वेभ्यो महतीमाजिं[1] ददुः, निर्जिग्युश्च तान् निर्मुमुचुश्च दुर्योधनादीन्।

---

१. युद्धम्।

अनुश्रूयते महाराष्ट्रे तुकारामाभिधः कविवरो बभूव । स हि तितिक्षापरम इति पप्रथे । एकदा कलहिनी तस्य गेहिनी तस्मिन्निक्षुदण्डेन प्रजहार । स चेक्षुदण्डो द्विधा बभूव । तुकारामश्च खण्डमेकं गेहिन्यै प्रददौ खण्डान्तरं च स्वयं चूषितुमारेभे । तेन चासौ पत्येऽक्रुधमिति, स च मे नाक्रुधदिति परं त्रेपे ।

जगतो नमसितो[1]महात्मेति प्रथितस्त्रिदिवाद्दिवावतीर्णोऽमरः श्रीगान्धी मूर्त्तिसञ्चरा प्रत्यक्षदर्शना तितिक्षाऽभूदिति किमु वाच्यम् । दक्षिणाफ्रीकायां कृतवसतिः स महाभागः केनापि[2]प्रस्थानजातीयेन स्वानुगेन तदभिप्रेतमन्यथा गृहीत्वा तच्चरितं चाभिशङ्कयाऽसहायः पथा[3]यानुच्चैस्ताडितो रक्ताक्तकायश्च तत्रैव विविशः परित्यक्तः । इदमवस्थं निःसहं त्रिपर्यस्तं तं निशाम्य केचित्पथियायिनोऽविदूरमातुरालयं तमनाययन्, व्रणविरोपणं चाकारयन् । अन्येद्युरुदन्तमिममुपलभ्य केचिन्महात्मनोनुगास्तदभ्याशमागत्यावादिषुः—इतः प्रभृति जागरूकेणात्रभवता भवितव्यमिति । तदाकर्ण्य महात्मार्थगुर्वीरिमा गिर उदगारीत्—कथं नैतत्स्यात् । तेप्यस्य मे कलेवरस्य कयापि कलयाऽधीशते नाम । किं च यः स्वदेशजेभ्यस्ताडनां लभते स महाभागः । मदीयायां देशोपक्रियायां वैकल्यं किमप्याकलयन्ति तेऽत एव मां दण्डयितुमीहन्ते । इह किमन्याय्यम् । कस्मात्तान्दूषयेयमिति ।

---

## ( १८ ) आलस्यं हि मनुष्याणां शरीरस्थो महारिपुः

आलस्यं नामानुत्साहः प्रवृत्तौ वा मन्थर्यम् । कायस्य चित्तस्य च गुरुत्वादप्रवृत्तिर्वा । तमोगुणातिरेके कायचित्तयोर्गौरवं भवत्यपरिलघुताऽपरिस्पन्दश्च गात्राणाम् । तदिदमालस्यं शास्त्रकृतोऽन्तःस्थं महान्तं द्विषन्तं निर्दिशन्ति । यथा शरीरस्थ आमयोऽलक्षित एव शरीरं कृशयति च जृणाति च मीनाति च तथेदमालस्यमपीति कस्य विदुषोऽगोचरोऽर्थः । अलसो

---

१. पूजितः । नमस्यतेर्निष्ठा । २. पठान इति भाषायाम् । ३. वातेः सता ।

आत्माऽऽत्मन एव रिपुरित्यान्तर इत्युच्यते। आन्तरत्वादेव चायं दुर्धर्षो दुरुत्सादश्च भवति।

आलस्यमप्रवृत्तिरित्युक्तम्। अलसो ह्यञ्जसा वेद न जातु निरीहस्य क्वाचित्क्रियासमृद्धिरस्तीति। तथापि नोत्सहतेऽन्तःस्थमिदं शात्रवं शातयितुम्। अयं हि मनोरथोपरचितप्रासादवापीतटकेलिकानने नित्यमाक्रीडते[1]। नित्यं च भग्नमनोरथो दुःखायते। एष चोत्स्वप्नायमान इवाचरति। अचेष्टमान एव तं तमर्थं प्रसिध्यन्तं पश्यति सुप्तोत्थित इव तमेवासन्तमुपलभ्यानुशोचति। इदं प्रगे[2] करिष्यामीदं प्राह्णे, इदमपराह्णे, इदं सायमिदं नक्तमित्येवं कल्पयति लपति च न च करोति। न सकृदपि प्रक्रमते। प्रक्रमतां मा वा प्रक्रंस्त[3] कालस्त्वतिक्रामत्येव। तेनातिक्रान्तकालो भ्रष्टावसरोऽसौ सन्ततं सीदति न प्रसीदति।

अलसश्छात्रः समये पाठालयं नाप्नोति, यस्मान्न प्रत्यूषे जागर्ति, न काले स्नाति, न काले भुङ्क्ते, न वा पाठान्स्मरति। यतः प्रातस्तरां न बुध्यतेऽतो न विहारं निर्याति, बहुधा च रुज्यते। एवमन्योऽप्यदक्षश्चिन्तितमर्थं न झटिति प्रारभते भ्रष्टावसरश्च परिदेवयते[4]। एवं हि विलपन्तो दैवं निन्दन्तः श्रूयन्तेऽलसाः—अद्य प्रातः पञ्चवादनवेलायां मयतः कलिकातां प्रति प्रस्थानीयमभूत्, परं चिरेणोदस्थां रेलयानं च निरक्रमीदिति किं करोमि मन्दभागः। आत्ययिकं[5] च मे तत्र कृत्यमासीत्, तद्विपत्स्यते कालेऽसंनिधानान्ममेति। तथा चापरोऽपि मन्थरप्रवृत्तिः परीक्षार्थी कालमनतिपात्यमतिपत्य[6] परीक्षासभायां संनिधत्ते, तत्र च प्रवेशं न लभते चिरं चानुशेते[7]।

अलसो जनो यतो न प्रातरुज्जिहीते ततोऽभ्युदयते[8] रविरेतमन्तःस्थितम्। यतश्च न काले स्नाति, स्नात्येव वा न, शीतबाधो मे स्यादिति शङ्कितस्ततो नोपास्ते सन्ध्यां न वा रमते दैवतोपासायां न च स्वाध्यायमधीते न वा

---

१. 'क्रीडोऽनुसंपरिभ्यश्चे'ति चकारेणाङ् समुच्चीयते। तेन तत्पूर्वादपि क्रीडते-स्तङ्। २. प्रातः। ३. प्रपूर्वात्क्रमेर्लुङ्। 'प्रोपाभ्यां समर्थाभ्यामि'ति तङ्। ४. विलपति। ५. आवश्यकम्। ६. अतिक्रम्य। ७. पश्चात्तप्यते। ८. अभिना कर्मप्रवचनीयेन योगे द्वितीया।

शास्त्राणि चिन्तयते । एवमालस्यमेव परिशीलयतोऽस्योत्तरोत्तर कायस्य मनसश्च समेधते जाड्यम् । सुकृतं च पुराकृतमुपभोगेन क्षीयते नवं च नोपार्ज्यत इति दरिद्रात्यस्य पुण्यम् यस्य नामात्मार्थोपि प्रवृत्तिर्मन्दा तस्य परार्था सा कुतः संभविनी ।

इदमपरमप्यालस्यं या दीर्घसूत्रता नाम । योल्पकालसाध्यमर्थं बहुना कालेन करोति स दीर्घसूत्रः । अयमप्यलसान्निरुक्तान्नातिभिद्यते । यस्य खलु गतिर्मन्दा सोऽवहीयते, स दूयते, स विपद्यते । यः खलु विद्यार्थी मन्दो लेखने सोऽशक्तो नियतेन समयेन होरात्रयादिना प्रश्नावलिमुत्तरयितुम् . यश्च शीघ्रः स प्रगल्भते तत्र कर्मणीति भूयोऽङ्कलब्धिस्तस्य भवति । यः खल्वप्यध्ययने मन्दः स चिरमधीयानोपि न पारयति बह्वध्येतुमिति तस्य शास्त्रावलोकने रसो ग्लायति । तेन चाल्पश्रुत एवासौ तिष्ठति सर्वमायुर्न बहुश्रुततां सम्पादयति । एवमन्योपि कश्चिद् वाने वा कर्तने वा सेवने वा चिरक्रियोऽल्पमेव वयति, कृणत्ति, सीव्यति वा, तेनाल्पीयानेवास्यायो भवति । एवं प्रवृत्त्यन्तरेष्वप्यूह्यम् । तेनालसो नाम न जातु सम्पद्यत इत्युपपद्यते, कृच्छ्रेण च जीवतीति युक्तमुक्तम्—आलस्यं हीति ।।

## ( १९ ) उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीः

उद्योगी प्रयत्नशीलो व्यग्रमाग्यीत्यनर्थान्तरम् । उद्योगिशब्दे नित्ययोगे मत्वर्थीय इनिः, तेन यो नित्यमुद्युङ्क्ते य उद्योगं शीलयति स उद्योगी, न तु यस्य कादाचित्क उद्योगः । स च यदि पुरुषसिंहः सिंहपराक्रमः साहसिकश्च भवति तदा श्रियं दुरापामवाप्नोतीति प्रकृतो विषयः ।

उद्योगस्तावत्प्रतिनियतः प्राणिनाम् । बुद्धीन्द्रियाणां कर्मेन्द्रियाणां मनसश्च सद्भाव एवात्र लिङ्गम् । अन्यथा किमर्थानीमानि स्युः । न ह्यनर्थकं किमपि विधत्ते विधिः । अत आमणन्त्याङ्गलाः—अनुद्योगो मनसो मण्डूरमिति ।

यदीच्छेत्सुखं जीवेयमिति, स्वस्थः काये स्यां स्वस्थश्चेतसीति तदा कर्मसु लौकिकेषु वैदिकेषु चाभियुञ्जीत। तथा चाम्नायः—'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समा' इति। 'शरीरयात्रापि च ते न प्रसिध्येदकर्मण' इति भगवदुक्तिरपि प्रवृत्त्यावश्यकं[1]स्मारयति नः। न खलु व्यापारमन्तरेण करतलगताऽपि शुक्तिर्विमुञ्चति मौक्तिकानि। इह देहवता किञ्चिदुत्पाद्यं भवति किञ्चित्प्राप्यं, किञ्चिच्च विकार्यमिति त्रिविधं कर्म कुर्वाणेनैव तेन योगक्षेमः शक्यते कल्पयितुम्। इतरस्त्वनुद्योगोऽनिष्टं भावयति, विकृतचेता भवति, व्याधीयते च, कृच्छ्रेण च जीवति विमाननां च महतीं विन्दति। आस्तां तावदन्यो वराकः, मृगाधिराजोपि समुद्योगेनैव वृत्तिं कल्पयति। तदुक्तम्—

> उद्यमेन हि सिध्यन्ति कार्याणि न मनोरथैः।
> न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः॥

इत्थमुद्योगाधीना कार्यसिद्धिरिति स्थितम्। दैवानुग्रहोऽप्यनुद्युक्तेन दुर्लभः। तथा च श्रुतिः—'न ऋते श्रान्तस्य सख्याय देवाः' इति, 'न मृषा श्रान्तं यदवन्ति देवाः' इति च। ब्राह्मणं चापि भवति—नानाश्रान्ताय श्रीरस्तीति पूर्वेभ्यः शुश्रुमेति। तत्र बहुविघ्नानि श्रेयांसीति प्रारब्धेषु कर्मसु विघ्नाः समुद्भवन्ति नाम। यदि विघ्नैः प्रतिहतो मनोहतो भूत्वाऽपरिसमाप्त एव कर्मणि विरमति तर्हि स न सिद्धिमाप्नुयात्सामान्यामपि, विशिष्टा तु दूरापेता। तेन [2]कार्यतात्पर्यमुद्योगाविरामः सान्तरायेष्वपि कर्मस्वनिर्वेदः सिद्धेर्मूलम्। अत्रार्थे पुरातनमितिहासमाचक्षते—आसीत्पुरा वङ्गेषु वोपदेवो नाम विप्रः। स मन्दमेधः पर्यध्ययन[3] इत्यसकृच्छ्रुतमपि न विजानाति, कथंचिज्ज्ञातमपि न कालान्तरे स्मरतीति गुरुणा कुत्सितः सतीर्थ्यैश्च विडम्बितोऽभूद्वनं च निरयासीत्। पथि कस्यचित्कूपस्य वेदिकायां गर्तकान्दृष्ट्वा स जानपदान्पृच्छति कस्मादेते संवृत्ता इति। त आहुर्लोका अस्मात्कूपान्नित्यमु[4]दञ्चनैरुदकमुदञ्चयन्ति, तत्संघर्ष-

---

1. प्रवृत्तेरवश्यम्भावम्। मनोज्ञादित्वाद् वुञ्। 'आवश्यकाधमर्ण्ययोर्णिनिरि'-त्यावश्यकार्थप्रत्ययस्य। २. तत्परता। ३. परिक्लान्तोऽध्ययनाय। ४. घटैः।

शास्त्राणि चिन्तयते। एवमालस्यमेव परिशीलयतोऽस्योत्तरोत्तर कायस्य मनसश्च समेधते जाड्यम् । सुकृतं च पुराकृतमुपभोगेन क्षीयते नवं च नोपार्ज्यंत इति दरिद्रात्यस्य पुण्यम् यस्य नामात्मार्थोपि प्रवृत्तिर्मन्दा तस्य परार्था सा कुतः संभविनी ।

इदमपरमप्यालस्यं या दीर्घसूत्रता नाम। योल्पकालसाध्यमर्थं बहुना कालेन करोति स दीर्घसूत्रः। अयमप्यलसान्निरुक्तान्नातिभिद्यते। यस्य खलु गतिर्मन्दा सोऽवहीयते, स दूयते, स विपद्यते। यः खलु विद्यार्थी मन्दो लेखने सोऽशक्तो नियतेन समयेन होरात्रयादिना प्रश्नावलिमुत्तरयितुम् . यश्च शीघ्रः स प्रगल्भते तत्र कर्मणीति भूयोऽङ्कलब्धिस्तस्य भवति। यः खल्वप्यध्ययने मन्दः स चिरमधीयानोपि न पारयति बह्वध्येतुमिति तस्य शास्त्रावलोकने रसो ग्लायति। तेन चाल्पश्रुत एवासौ तिष्ठति सर्वमायुर्न बहुश्रुततां सम्पादयति। एवमन्योपि कश्चिद् वाने वा कर्तने वा सेवने वा चिरक्रियोऽल्पमेव वयति, कृणत्ति, सीव्यति वा, तेनाल्पीयानेवास्यायो भवति। एवं प्रवृत्त्यन्तरेष्वप्यूह्यम्। तेनालसो नाम न जातु सम्पद्यत इत्युपपद्यते, कृच्छ्रेण च जीवतीति युक्तमुक्तम्— आलस्यं हीति ।।

## ( १९ ) उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीः

उद्योगी प्रयत्नशीलो व्यवसायीत्यनर्थान्तरम्। उद्योगिशब्दे नित्ययोगे मत्वर्थीय इनिः, तेन यो नित्यमुद्युङ्क्ते य उद्योगं शीलयति स उद्योगी, न तु यस्य कादाचित्क उद्योगः। स च यदि पुरुषसिंहः सिंहपराक्रमः साहसिकश्च भवति तदा श्रियं दुरापामवाप्नोतीति प्रकृतो विषयः।

उद्योगस्तावत्प्रतिनियतः प्राणिनाम्। बुद्धीन्द्रियाणां कर्मेन्द्रियाणां मनसश्च सद्भाव एवात्र लिङ्गम्। अन्यथा किमर्थानीमानि स्युः। न ह्यनर्थकं किमपि विधत्ते विधिः। अत आभणन्त्याङ्गलाः—अनुद्योगो मनसो मण्डूरमिति ।

यदीच्छेत्सुखं जीवेयमिति, स्वस्थः काये स्यां स्वस्थश्चेतसीति तदा कर्मसु लौकिकेषु वैदिकेषु चाभियुञ्जीत । तथा चाम्नायः—'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समा' इति । 'शरीरयात्रापि च ते न प्रसिध्येदकर्मण' इति भगवदुक्तिरपि प्रवृत्त्यावश्यकं[1]स्मारयति नः । न खलु व्यापारमन्तरेण करतलगताऽपि शुक्तिर्विमुञ्चति मौक्तिकानि । इह देहवता किञ्चिदुत्पाद्यं भवति किञ्चित्प्राप्य, किञ्चिच्च विकार्यमिति त्रिविधं कर्म कुर्वाणेनैव तेन योगक्षेमः शक्यते कल्पयितुम् । इतरस्त्वनुद्योगोऽनिष्टं भावयति, विकृतचेता भवति, व्याधीयते च, कृच्छ्रेण च जीवति विमाननां च महतीं विन्दति । आस्तां तावदन्यो वराकः, मृगाधिराजोपि समुद्योगेनैव वृत्तिं कल्पयति । तदुक्तम्—

> उद्यमेन हि सिध्यन्ति कार्याणि न मनोरथैः ।
> न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः ॥

इत्थमुद्योगाधीना कार्यसिद्धिरिति स्थितम् । दैवानुग्रहोऽप्यनुद्युक्तेन दुर्लभः । तथा च श्रुतिः—'न ऋते श्रान्तस्य सख्याय देवाः' इति, 'न मृषा श्रान्तं यदवन्ति देवाः' इति च । ब्राह्मणं चापि भवति—नानाश्रान्ताय श्रीरस्तीति पूर्वेभ्यः शुश्रुमेति । तत्र बहुविघ्नानि श्रेयांसीति प्रारब्धेषु कर्मसु विघ्नाः समुद्भवन्ति नाम । यदि विघ्नैः प्रतिहतो मनोहतो भूत्वाऽपरिसमाप्त एव कर्मणि विरमति तर्हि स न सिद्धिमाप्नुयात्सामान्यामपि, विशिष्टा तु दूरापेता । तेन [2]कार्यतात्पर्यमुद्योगाविरामः सान्तरायेष्वपि कर्मस्वनिर्वेदः सिद्धेर्मूलम् । अत्रार्थे पुरातनमितिहासमाचक्षते—

आसीत्पुरा वङ्गेषु बोपदेवो नाम विप्रः । स मन्दमेधः पर्यध्ययन[3] इत्यसकृच्छ्रुतमपि न विजानाति, कथंचिज्ज्ञातमपि न कालान्तरे स्मरतीति गुरुणा कुत्सितः सतीर्थ्यैश्च विडम्बितोऽभूद्वनं च निरयासीत् । पथि कस्यचित्कूपस्य वेदिकायां गर्तकान्दृष्ट्वा स जानपदान्पृच्छति कस्मादेते संवृत्ता इति । त आहुर्लोका अस्मात्कूपान्नित्यमु[4]दञ्चनैरुदकमुदञ्चयन्ति, तत्संघर्ष-

---

१. प्रवृत्तेरवश्यम्भावम् । मनोज्ञादित्वाद् वुञ् । 'आवश्यकाधमर्ण्ययोर्णिनिरि'-त्यावश्यार्थप्रयोगश्च । २. तत्परता । ३. परिकालोऽध्ययनाय । ४. घटैः ।

णजा इमे गर्तका इति। इदं निशम्य स सहसा प्रतिबुद्ध एवं स्वगतमाह-यदि घटसङ्घर्षणेनासकृत्कृतेनोपलमय्यां वेदिकायां गर्तका आत्मानं लभन्ते तदाऽभ्यासनैरन्तर्येण विद्यासंस्कारा मे चेतसि किमिति नो जायेरन्? एवं कृतमतिः स गुरुमुपससादाऽध्ययने चाभियुयुजे। तथाऽभियुक्तो गुरुशुश्रूषारतश्चासौ यां वैदुषीमाप सा कस्य न विदितेति नेह वितन्यते।

मन्दोप्यविरतोद्योगः सदा विजयभाग् भवेदित्याभाणकस्य चरितार्थतां निदर्शयितुं कल्पितमुपाख्यानं नीतिविदो वदन्ति। तद्यथा—

एकदा मिथः स्नेहेन वर्तमानौ कमठशशकावहमहमिकयाऽधावताम्, 'समयं[1] चाकुरुतां यदावयोः प्रथमतरं निर्दिष्टं प्रदेशमासादयेत्स विजयभाग्भवेदिति। शशकश्चारशीघ्रः कमठश्च मन्दगतिः। प्रारब्धे धावने शशकः कयाऽपि कालकलया महान्तमध्वानमक्रमीत्। स पृष्ठतो दृशमपातयदपश्यच्च दूरेऽवहीनः कमठ इति। एवं सति सोऽचिन्तयच्छक्यं मया कञ्चित्कालं विश्रमितुम्। यदा मे सुहृन्मामासदयिष्यति तदा भूयोपि द्रुततरं धाविष्यामि हेलयैव च तमतिक्रमिष्यामीति। इदं चिन्तयित्वा स न्यपद्यत गाढं च न्यद्रात्। कमठस्तु मन्दमंदं क्राम्यन्नविरतोद्योगो गन्तव्यं स्थानं पूर्वतरमध्यगच्छत्। कालान्तरे सुप्तोत्थितः शशकोऽतिरंहसाऽधावीन्मन्थरेण कमठेन निर्जितोऽस्मीति चाह्वैषीत्[2]।

एवं य इच्छति स्वेन मान्थर्येणान्येन वा सहजेन दोषेण समानव्यवसायैर्वयस्यैरवहीनो मा स्म भूवमिति स निरन्तरमुद्युञ्जीत। निरन्तरमुद्युञ्जान एव वैगुण्ये वैकल्ये वा सत्यपि सिद्धिं हस्ते करिष्यतीति निश्चप्रचम्[3]।

यश्चेच्छेद्[4]वसीयान्वसिष्ठो वा स्यां प्रथितयशा वा लोकस्याभिपूजितो वा भूयासं स साहसमाचरेत्। यदा सुखसामान्यमश्नुवानोपि सुखविशेषं कामयते, संभावितो भवन्नपि भूयसीं संभावनामिच्छति तदा सिद्धिं संभविनीमुत्प्रेक्षमाण उपस्थितं सुखं सुखोपकरणं च कामं याताम्, न मे तत्खेदाय, यदि परं भूयः सुखमुच्चैस्तरं पदं वा लभेयेति मन्यमानो

१. संविदम्। व्यवस्यामिति यावत्। २. ह्यो लुङ्। ३. निश्चितं च प्रचितं च। मयूरव्यंसकादिः। ४. अतिशयेन वसुमान्।

यत्किमप्यपूर्वं दुष्करं महत्तरं च प्रक्रमते तत् साहसम्भवति। नायं नियमः साहसं फलवदेव भवतीति। विनिपातो विनाशोपि दृश्यते तत्कृतः। परं यदा साहसं फलं प्रसूते तदा विस्मापकं तद्भवति यशस्करं च। साहसे श्रीः प्रतिवसतीत्युक्तम्।

न साहसमनारुह्य नरो भद्राणि पश्यति।
साहसं पुनरारुह्य यदि जीवति पश्यति॥

इति च नीतिविदां डिण्डिमः।

यदा कश्चिद् [1]वयस्थस्तटस्थो वर्षासु मध्येगङ्गमाप्लाव्यमानं कमपि कुमारं प्रेक्षते तदा तदसहमानस्तत्प[2]रीप्सया सहसा वेगवाहिनीं वाहिनीमवगाहते, न स्वं सामर्थ्यं चिन्तयति, न नदीवेगं गणयति, न वावर्ताद्यपेक्षते कुमारमेवाभिलक्ष्य शरवदप्रतिहतो याति, तमालम्बते, तं परित्रायते। एतेनायमनपायिनीं ख्यातिमुपैति लोकस्य प्रियः प्रशस्यश्च भवति।

यदा च शत्रुसैन्यव्यूहस्य पृष्ठतः पार्ष्णिग्राहाः स्यामेति विमानविशेषेभ्यश्छत्रैरवतरन्ति त्यक्तजीविता योद्धारस्तदा परा कोटिः साहसस्य प्रदर्शिता भवति। आकस्मिकेन चास्कन्देन प्रतिपत्तिमूढानि यदि ते परसैन्यानि शातयन्ति तदा श्रियं महतीमवाप्नुवन्ति महीयांसं विभवं चाधिगच्छन्ति।

नैगमोपि साहसेन यत्साधयति तत्प्रातिहार्यमिव भवति। यदाऽयं पश्यति सूक्ष्मेक्षिकया प्राप्तो मेऽवसरः, स च न चिरं तिष्ठेदिति तदा सर्वां [3]नीवीं वाणिज्ये पणते। सफलं चेत्तद् वाणिज्यं भवति स तावतीं सम्पत्तिमाप्नोति यावतीं सामान्येनोद्योगेनानारतेनापि वर्षसहस्रादपि परेण[4] नाप्नुयात्।

राजानो हि सविशेषमुद्युक्ता भवन्ति मा स्मापक्रमिषुर्बहुच्छलाः श्रिय इति। उक्तं हि—

प्रायेण हि नरेन्द्रश्रीः सोत्साहैरेव भुज्यते। इति।

---

१. तरुणः। २. परित्रातुमिच्छया। ३. मूलवणिग्धनम्। ४. सुबन्तप्रतिरूपकमव्ययम्। एतद्योगे पञ्चमी शिष्टप्रयोगात्।

अयमत्रोक्तार्थस्य संक्षेपः—उद्योगायत्तो योगक्षेमः पुंसाम्। उद्योगविरामेण परिग्लानिहानिर्विघ्नविघातः परभागाधिगमश्च पुरुषस्य भवन्ति। तथापि न तावता श्रीमान्ख्यातिमान्वा भवति यावन्न साहसमाश्रयतीति। तस्मात्सुष्ठूक्तमुद्योगिनमित्यादीति।

---

## ( २० ) धैर्यम्

धैर्यं नाम स्थिरबुद्धिताऽहार्यनिश्चयताऽनुद्वेगो वा चेतसो भवति। इदं चानेकधाऽभिव्यज्यते। अननुगुणेषु दशान्तरेषूच्चावचेष्वारम्भेषु प्रवृत्तिस्थैर्येणेदं तावदभिव्यक्तिमेति। इदमत्र प्रायेणालोकयामो विघ्नविसर[1]मुत्प्रेक्षमाणा एव बहवः कार्यं नारभन्ते। प्रारभ्य वा विघ्नैः प्रतिहता विरमन्ति कार्यमनवसाय्य[2]। केचिद् विरला एव विघ्नैर्जेघ्नीयमाना[3] अपि प्रारब्धं न परित्यजन्ति परिसमाप्तेरा, ते धीराः। पुरा किल देवाः क्षीरार्णवं मन्थितुं प्रवृत्ता महार्हाणि रत्नानि लब्ध्वापि परितोषं न गताः, न च तत उद्गतेन हालाहलेनोद्वेजितास्ततो मन्थनाद् विरता यावन्नेप्सिततमां सुधां प्राप्ताः। तदिदं धैर्यस्य माहात्म्यम्। यदा वाऽभ्यमित्रं[4] निर्गता योधा आकालिकेन वर्षेणातर्कितोपनतेन करकापातेनान्नाद्यसामग्र्यवैकल्येन च कदर्थिता अपि, शरणमलभमाना अपि, शात्रवैरनुसृता अपि, न वयं पदमेकमपि निवर्त्स्यामो यावन्न द्विषतो निर्जयाम इति व्यवसितबुद्धयो भवन्ति तदा परा हि काष्ठा धृतेर्भवति विजृम्भिता यदा वाऽल्पसंख्याः सैन्या बहुसंख्यैः शत्रुसैन्यैः समासादिता भवन्ति, दुर्गस्था वाऽऽवेष्ट्यन्तेऽन्नाद्येन च विना क्रियन्ते क्ष्वेडं[5] चाहूयन्ते संन्यस्यत स्वानि शस्त्राणि, सद्यश्चात्मानं समर्पयतेति तदा वरं प्राणत्यागो न तु परहस्तगमनमिति व्यवसाय निर्वेदं चानास्थाय यद् युध्यते परं च पराक्रमन्ते[6] तदपि

---

१. विसरः=समूहः। २. अवपूर्वात्स्यतेर्ण्यन्तात्क्त्वो ल्यप्। ततो नञ्। ३. पुनःपुनर्हन्यमानाः। गतौ तु जङ्घन्यमाना इति रूपम्। ४. अभिना कर्मप्रवचनीयेन योगे द्वितीया। ५. क्ष्वेडा=सिंहनादः। ६. उत्सहन्ते। 'उपपराभ्यामि'त्यात्मनेपदम्।

धैर्यस्य विलसितम्। यदा च गर्भेश्वरः कश्चिन्माणवकः पूर्वकर्मविपाक-जनितेन विपज्जालेनाभिभूयते, मातापितृविरहो वाऽस्य जायते, धनं वाऽस्यापह्नियते, भ्रातरो वाऽस्य म्रियन्ते तदापि यदयं पापकं नानुचिन्तयति, अधर्मे वा पदं नार्पयति सोपि धैर्यप्रभावो भवति।

इदमपि धैर्यं भवति। यदा कश्चिन्महाजनः 'क्रोत्स्यन्ति मेऽप्रजा यदि वस्तुस्थितिं यथातथमुदाहरिष्यामि, निन्दिष्यन्ति मां नयकोविदा यदि स्वाभिप्रायमत्रावसरे प्रकाशमाख्यास्यामि, महती मेऽर्थहानिर्भविष्यति यदि राजमन्त्रिभ्यः स्वमाश्यं निवेदयिष्यामि, निधनं मे नियतं यदि सत्यं वदिष्यामी'ति विदन्नपि क्रोधं वा निन्दां वाऽर्थहानिं वा निधनमपि वाऽगणयित्वा न्याय्यात्पथः पदमपि न विचलति तदा प्रकर्षपर्यन्तं धैर्यस्यावधिं याति। अत्र प्रह्लादख्रिस्तसुकरातप्रभृतयो महात्मानो निदर्शनानि।

इदं चापरं धैर्यम्। यस्य खलु लीलावतीनां कटाक्षविशिखा[1]श्चित्तं न लुनन्ति सोपि परं धैर्यमाविर्भावयति। प्रायो यतचित्तानां मुनीनामपि समाधिभेदप्रभवो भवन्ति मेनकादयः सुरयुवतयः। विद्यमानेषु कामोद्दीपनेषु ये स्वस्थाः शान्ता मनागप्यविकृतास्तिष्ठन्ति ते धीराः। उक्तं—

विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीराः। इति।

इह लोकः प्रायेणार्थेषु लुभ्यति। ये खल्वधिकारेषु गुरुषु नियुक्तास्ते प्रलोभ्यन्ते कार्यार्थिभिर्महतीभिरुपदाभिः[2]। न च क्षमन्ते लोभं नियन्तुम्। यदा कश्चिन्निर्माणभागाध्यक्षो वास्तुविद्याविशारदः कृतसंविद्भिः[3] कैश्चिद्रजतमुद्राणां [4]दशसाहस्र्योपप्रदानेनानुलोमं मयि वर्तस्वेति प्रार्थ्यते तदा यद्येष तत्पराकरोति तर्हि परां सीमानं धैर्यस्य व्यनक्ति।

कदाचित्प्राकृता दुर्गता अपि व्यतिरिक्तं धैर्यं विजृम्भयन्ति। यदा पणं वा कार्षापणं वा भिक्षमाणायै जरत्यै केनापि प्रमादात्स्वर्णमुद्रा दीयते सा च प्रमाद एवायमिति जानती तां परादादाति तदाप्युरुच्चैर्धैर्यं पदर्शयति।

मानहस्य माननिरपेक्षतया स्वकार्यतात्पर्यमपि धैर्यमुत्कृष्टं भवति। इह भारते वर्षे परदास्यान्निर्मुक्ते महानभूदुत्सवो देहल्याम्। योऽस्य देशस्य

---

१. बाणाः। २. उत्कोचैः। ३. संवित्=समयः। ४. सहस्रमेव साहस्रम्। दश साहस्राणि समाहृतानीति दशसाहस्री। तया।

निर्मोचयिता, येन नीतोऽनुशिष्टश्चात्रत्यो जनश्चिरस्य स्वातन्त्र्यसुखमन्वभूत् स मनस्वी महाभागः श्रीगान्धी तदानीं विप्रकृष्टतरे नोआखालीति प्रथिते वङ्गेषु प्रदेशे जाल्मैर्म्लेच्छहतकैरुपपीडिताः कृपणा आर्यप्रजाः पर्यत्रायत [1]सान्त्ववचोनिष्यन्देन च प्रोदसाहयत । अमात्यपरिषदा सानुरोधं सबहुमानमाकारितः, सर्वे वयमुत्सुका अत्रभवतां दर्शनेनात्मानमनुग्रहीतुमिच्छामः, तत्सत्वरं संनिदधतामुत्सवे भवन्त इति बलवत्प्रचोदितश्च धैर्यधनः स महात्माऽऽत्मनः संभावनां पृष्ठतःकृत्य[2] नोआखालीकार्यमनुपेक्ष्यं गुरुतरं चेति नेदं शक्यमन्तरा विहन्तुमित्युत्तरं प्रादात् । तेन सुखेन वा दुःखेन वा लोभेन वा मानेन वाऽविकम्प्यमस्य धैर्यं महात्मन इति प्रसिद्धोऽप्यर्थः प्रसिद्धतरतामयात् ।

धैर्यं नाम पुरुषस्य कोऽप्यन्तःसारो भवति यदवष्टम्भेनोपनंस्यन्तीरापदः पश्यन्नयं न साध्वससन्नो भवति, न च प्रतिपत्तिमूढो भवति न पथश्च्यवते, नात्मानमवसादयति । यदा चापद्गतो भवति,जहात्येनं श्रीः सुहृद्वर्गश्च, दूष्यतेऽस्य यशो [3]व्यपदेशश्च तदापि तत्सहायस्तदालम्ब एष न ग्लायति, न शोचति, न चानुतप्यते । धैर्यं खलु किमपि महत्त्वमर्पयति मनुष्यान्[4] । धीरा महान्त इति मान्यन्तेऽधीराश्च लघव इत्यवमन्यन्ते । अयं धीरोऽयमधीर इति भेदस्तु विषमस्थयोरेव विष्फुरति[5] न समस्थयोः । उक्तं हि—

उपस्थिते विप्लव एव पुंसां समस्तभावः परिमीयतेऽतः ।
अवाति वायौ न हि तूलराशेर्गिरेश्च कश्चित्प्रतिभाति भेदः ॥ इति ।
लघोर्विकारस्तनुनापि हेतुना चलन्ति दर्भाः शिथिलेपि मारुते ।।इति च।

धीरा हि पर्वतवदविकम्प्या भवन्ति घोरायामप्यापदि यानधिकृत्य प्रवर्तन्ते दृष्टान्तोपन्यासाः कवीनाम्—'प्रवातेपि निष्कम्पा गिरयः, द्रुमसानुमतां

---

१. मधुरम् । २. स्वाङ्गे तस्प्रत्यये 'कृभ्वोरि'ति क्त्वा, तस्य 'तृतीया प्रभृतीन्यन्यतरस्यामि'ति समासे ल्यप् । ३. कुलम् । ४. अर्तेर्गत्यर्थकत्वाण्णिचि कर्तुः कर्मत्वम् । अत्र विषयेऽस्मत्कृतिरनुवादकला द्रष्टव्या । ५. 'स्फुरतिस्फुलत्योर्निर्निविभ्य' इति वैकल्पिकं षत्वम् ।

किमन्तरं यदि वायौ द्वितयेऽपि ते चलाः, 'न पादपोन्मूलनशक्ति रंहः शिलोच्चये मूर्च्छति मारुतस्ये'त्येवमादयः । एतानेव च महाभागानित्थं निरूपयन्ति कवीश्वराः—

सम्पत्सु महतां चित्तं भवेदुत्पलकोमलम् ।
विपत्सु च महाशैलशिलासंघातकर्कशम् ॥ इति ।

यस्माद्विपदुत्तरणतरणिर्धैर्यमिति महानेष गुणः पुंसां तस्माद्विधुरेऽपि काले नैतत्त्याज्यमित्युपदिशन्ति मुनयः—

व्यसनं प्राप्य यो मोहात्केवलं परिदेवयेत् ।
क्रन्दनं वर्धयत्येव तस्यान्तं नाधिगच्छति ॥
केवलं व्यसनस्योक्तं भेषजं नयकोविदैः ।
तस्योच्छेदसमारम्भो विषादपरिवर्जनम् ॥ इति ॥

## (२१) अङ्गीकृतं सुकृतिनः परिपालयन्ति

इह सर्वः संव्यवहारः प्रतिज्ञानिबन्धनः । अल्पका अपि प्रायेण प्रतिज्ञां निर्वाहयन्तो दृश्यन्ते महान्तोऽपि । यः कश्चित्किञ्चिदङ्गीकरोति स तत्पालने प्रवणो भवति । अहं त्वाऽमुकस्मिन्प्रदेशे श्वो द्रष्टास्मि, गृहान्गतोऽहं पत्रं ते लेखिष्यामि, त्वया भोजनेन निमन्त्रितस्ते गेहमद्य, मध्याह्ने प्राप्स्यामि, श्वस्त्वया समं प्रातर्विहारायायातास्मि, सुरां न पास्यामि, मांसं नाशिष्यामि, जीवं न हिंसिष्यामि, परं नाभिशप्स्यामीत्येवमात्मिकाः प्रतिज्ञाः । प्राकृता अपि जनाः कुर्वन्ति तरन्ति च 'प्रायात् । एवविपर्यये तु सर्वा स्थितिर्विसंस्थुला स्यात्सर्वं च तन्त्रमाकुलं स्यात् । एवमल्पानामपि प्रतिज्ञानामपरिपालनेनानल्पा प्रतिज्ञातुर्निन्दा भवति परं च लाघवम् ।

परं न हि सर्वाः प्रतिज्ञाः सुखनिर्वाहा भवन्ति । विषमा भीष्माश्च सन्ति काश्चन दुस्तराः । तास्तु सुकृतिन एव शक्तास्तरीतुमिति सुकृति-

१. प्रायो भूम्नि । ततः पञ्चमी शिष्टानुमोदिता ।

पदस्य प्रकृतेऽर्थवत्ता। सुकृतं सञ्चितवन्तः सन्ति सन्तः कियन्तश्चित्, यानधिकृत्योक्तं मलिनमसुभङ्गेप्यसुकरमिति। ते हि धैर्यधना अहार्य-निश्चयाः सुविचिन्त्य वाचमुदीरयन्त्युदीरितां च रक्षन्ति प्राणपणेनापि। तदुक्तं पण्डितराजेन जगन्नाथेन—

विदुषां वदनाद्वाचः सहसा यान्ति नो बहिः।
याताश्चेन्न पराञ्चन्ति द्विरदानां रदा इव॥ इति।

बिरला एव सत्यसङ्गरा भवन्ति लोके। यत्किञ्चित् सुकरं स्वहितं च प्रतिश्रुत्य तद्रक्षन्तो जना दृश्यन्ते बहवः, न तु तान्प्रति सत्यप्रतिज्ञाः सत्यसन्धाः, सत्यसङ्गरा इम इति प्रथतेऽभिलाषः। ते सामान्यास्तु न किञ्चिद् दुष्करं संगिरन्ते, संगीर्य वा दुःखलेशमुत्प्रेक्षमाणा वैषम्यमाप्ना विघ्नैः प्रतिहन्यमाना दैवान्तरितपौषा वा प्रतिज्ञां विजहति, सर्वथाऽप्रभवन्तो वा कृतामपि तामपलपन्ति। महात्मानस्तु लोकातिगेन धैर्येण दुःखौघं सहन्ते, प्रतिज्ञातार्थस्यानुष्ठाने तनूपातमपि नाद्रियन्ते।

तातं दशरथं द्रष्टुमुपयात्युपस्थिताभिषेको रामः। दशरथश्च शोक-परिप्लुतो न किमपि भाषते। तत्र संनिहिता कैकेय्याह—राम! महा-राजस्ते रुषित इति न, किमप्यस्य [1]व्यसनमित्यपि न। अयं तु धर्मसंकटे वर्तते। पुरा दैवासुरे संग्रामे सशल्य एष मया युक्तमुपचर्य रक्षित इत्यनेन मे वरौ दत्तौ। अद्येप मया याचितौ तौ, त्रिशांपतिरपि च सन् प्राकृतवदनुतप्यते। न चोत्सहते त्वद्भयान्मनोगतं वक्तुम्। यदि प्रति-जानीषे राज्ञो विवक्षितं त्वयि न विपत्स्यते[2] ततस्तदभिधास्यामीति। अम्ब मे जानत्यपि मदीयां पितृभक्तिं सत्यसन्धतां च नाश्वसिति मयीति प्रव्यथितः स प्रत्याह—

अहं हि वचनाद्राज्ञः पतेयमपि पावके।
भक्षयेयं विषं तीव्रं पतेयमपि चार्णवे॥
तद् ब्रूहि वचनं देवि राज्ञो यदभिकाङ्क्षितम्।
करिष्ये प्रतिजाने च रामो द्विर्नाभिभाषते॥ इति।

---

१. दुःखम्। २. विनङ्क्ष्यति।

एतन्निशम्याहितप्रत्यया कैकेयी प्रत्यवोचत्—तत्र वरद्वये मया भरतस्याभिषेचनं तव च चतुर्दश वर्षाणि वने वासो याचिते इति । रामश्चेदं सहर्षमभ्युपागात् । मात्रा कौसल्यया "उपाध्यायान्दशाचार्य आचार्याणां शतं पिता । सहस्रं तु पितॄन्माता गौरवेणातिरिच्यते ॥" इति शास्त्रं स्मारयन्त्या प्रत्यादिश्यतां पितुर्वचः, मा गा वनम्, इहायोध्यायां तिष्ठ वसुमतीं च शाधीति दृढमनुशिष्टोऽपि, भ्रात्रा लक्ष्मणेनापि बहुविधं प्रोत्साहितोऽप्रधृष्यत्वं च प्रत्यायितः साञ्जलिबन्धं च प्रार्थितोपि चीरजटाजिनी[1] भूत्वा यथाऽऽश्रुतं[2] वनं प्रवव्राज, बहूंश्च क्लेशाननुबभूव प्रतिज्ञानं तु न तत्याज । यदा च भरतो रामं प्रत्यानेतुं चित्रकूटं प्राप्य तमनुनाथति तदा धैर्यधनः सुकृतैकनिलयो रामो यदभणीत्तदद्यापि मूर्च्छतीव श्रवणयोर्भूतानाम् । इदं हि तेन संशब्दितम्—

लक्ष्मीश्चन्द्रादपेयाद्वा हिमवान्वा हिमं त्यजेत् ।
अतीयात्सागरो वेलां न प्रतिज्ञामहं पितुः ॥ इति ।

अन्यदापि रामो यद् यस्मै प्रतिशृणोति तदवश्यमाचरति, न जातु प्रतिश्रवं वितथं करोति । वनमावसन्तं तं वनौकस ऋषयो रक्षोभिरुपद्रुतास्त्राणं याचन्ते । स च तत्प्रतिजानीते विस्रम्भयति च तान् सद्य इमानि [3]सूदयितास्मि शमं च स्थापयितास्मीति । एतदुपलभ्य सीता निर्वैरेषु नैर्ऋतेषु[4] न युक्ता हिंसा प्रयोक्तुम्, त्वमिदानीं "तापस्ये स्थितः, क्व तपः क्व च शस्त्रपरिग्रहः, देशधर्मस्तु पूज्यतामिति स्नेहाद् बहुमानाच्च स्मारयति भर्तारम् । अत्रापि प्रस्तावे यामर्थगुर्वीं वाचमुवाच रामः साऽद्याप्यनुनादयतीव दिगन्तराणि । इयं सा व्यवसायात्मिका वाक्—

अप्यहं जीवितं जह्यां त्वां वा सीते सलक्ष्मणाम् ।
न तु प्रतिज्ञां संश्रुत्य ब्राह्मणेभ्यो विशेषतः ॥
तदवश्यं मया कार्यमृषीणां परिपालनम् ॥ इति ।

---

१. चीरं च जटाश्चाजिनं चेति चीरजटाजिनम् । ततो मत्वर्थीय इनिः । २. आङ्पूर्वः शृणोतिः प्रतिज्ञाने वर्तते । ३. नाशयितास्मि । ४. राक्षसेषु । ५. तप एव तापस्यम्, तस्मिन् ।

शान्तनवस्य देवव्रतस्यापि प्रतिज्ञायाः पूर्त्तिः कस्य[1] न विदिता। अयं हि सत्यवत्या दाशकन्यायाः 'पितुरुपयमे सापत्न्याच्छङ्कमानं दाशं परितोषयितुं प्रत्यजानीत—

श्रृण्वतां भूमिपालानां पितुरर्थाय भारत।
इदं मे व्रतमादत्स्व सत्यं सत्यवतां वर॥
योऽस्यां जनिष्यते पुत्रः स नो राजा भविष्यति।

राजसंसदि यदिदं प्रतिज्ञातं त्वया तत्र नाहं संशये, इदं तवैव सदृशमित्युदीर्य दाश आह—यत्तवापत्यं भविता तत्र मे संशयो महानिति। ततो दाशस्य भूयः परितोषाय प्रतिज्ञान्तरं घोरतरं करोति देवव्रतः—

दाशराज निबोधेदं वचनं मे नृपोत्तम।
श्रृण्वतां भूमिपालानां यद् ब्रवीमि पितुः कृते॥
अद्य प्रभृति मे दाश! ब्रह्मचर्यं भविष्यति।
अपुत्रस्यापि मे लोका भविष्यन्त्यक्षया दिवि॥

इदं वचो निशम्यान्तरिक्षवर्तिनो देवा गन्धर्वाप्सरस ऋषयश्च तं देवव्रतं कुसुमैरभ्यवर्षन् भीष्मोऽयमिति चाब्रुवन्। तत एवास्य 'भीष्म' इति समाख्या पप्रथे।

वत्सराजस्योदयनस्य प्रधानामात्यस्य यौगन्धरायणस्यापि प्रतिज्ञाभारः कस्य [2]कथाचुञ्चोरविदितः। तत्रभवत उदयनस्याखेटप्रसक्तस्य कान्तापरिष्वङ्गाभिष्वक्तस्य वीणाभिरतस्यारुणिनाऽरातिना राज्यमामृष्टम्[3]। तत्प्रत्यापत्तये कृतप्रतिज्ञेनानेन या [4]व्यसनसन्ततिर्विसोढा सा न शक्या प्राकृतेन केनचिद् विषहितुम्।

वीरेण लोकोत्तरधैर्येण प्रतापेनापि महान् प्रतिज्ञाभारो निर्व्यूढः। नाहं पर्यङ्कमधिशयिष्ये यावन्न पितू राष्ट्रं शात्रवमवजित्य भूयः प्रतिपद्ये, नाहं शत्रुहस्तादनाच्छिन्नायां चित्तौड़भुवि पदमर्पयिष्यामीति यदनेनोद्रिक्तसत्त्वेन प्रतिज्ञातं तन्निवहणे नानेन व्यलीकं[5] किमपि गणितम्। श्वापदबहुलानि निर्जनसम्पातानि वनानि भ्रान्तानि, विषमाणि प्रस्था-

---

१. केचिदविशेषेण विभाषामिच्छन्तीति मतमाश्रित्य कर्तरि षष्ठी।
२. कथाविशारदस्य। ३. आच्छिन्नम्। ४. कष्टपरम्परा। ५. दुःखम्।

नानि[1] चास्थितानि, गिरिगह्वराणि प्रतिभयानि, चाध्युषितानि, नक्रसमाकुलानि [2]गिरिणदीजलानि तीर्णानि । किं बहुना ? बुभुक्षितेनानेन क्षपितानि कथंचिद् दिवसानि, अनिकेतेन यायावरेणेव तरुमूलानि सेवितानि, [3]पलाशिपलाशपाकेनालवणेन भोजनेन कथं कथमपि धारितानि गात्राणि । प्रतिज्ञातं तु न हारितम् । एतद्विधानेव पुरस्कृत्य महाकविर्बाणः स्माह—

> अङ्गनवेदी वसुधा कुल्या जलधिः स्थली च पातालम् ।
> वल्मीकश्च सुमेरुः कृतप्रतिज्ञस्य वीरस्य ॥

अपरश्चैवमाह—

> उदयति यदि भानुः पश्चिमे दिग्विभागे
> प्रचलति यदि मेरुः शीततां याति वह्निः ।
> विकसति यदि पद्मं पर्वतानां शिखाग्रे
> न भवति पुनरन्यद्भाषितं सज्जनानाम् ॥ इति ॥

## ( २२ ) जनपदवासस्य नागरवासस्य च तारतम्यम्

इह लोकेऽर्थवन्त्यपि वस्तून्यन्योन्यमतिशेरतेऽर्थवत्तया । न हि समेऽर्थाः समप्रयोजनाः समोपकारा वा । न वा सर्वत्र सर्वे गुणा दृश्यन्ते । व्यतिरेको हि लक्ष्यते ।

कल्याणी तावद् ग्रामे वसतिः । ग्रामो हीश्वरकृतो नगरं च मानवकृतमित्यभियुक्ताः । ग्रामेषु यथा सुदर्शं सर्गसौन्दर्यं न तथा नगरेषु । पूर्वत्र हि स्रष्टुरियं सृष्टिरव्यवहिताऽभिमुखेऽभ्याशे वा वर्तते द्रष्टुः । उत्तरत्र त्वन्तरिता गगनोल्लेखिशिखराभिर्हर्म्यमालाभिस्तिरस्कृता [4]चावेशन—[5]धूम्याभिर्न्यक्कृता च प्रतिरथ्यं प्रतिसंसरणं[6] च चक्षूर्यमाणाभिरुच्चै-

---

१. मार्गाः । २. 'वाप्रकरणे गिरिनद्यादीनामुपसंख्यानमिम'ति पक्षे णत्वम् । ३. पलाशी=वृक्षः । पलाशं = पत्रम् । ४. आवेशनं=शिल्पिशाला । ५. धूमसंघातैः । ६. घण्ठापथः = संसरणम् ।

विज्ञापनार्थाभिः सतूर्याभिः शकटीभिरत्यन्तायेवान्तर्धीयतेऽक्ष्णोः श्रव-णयोश्च। चेतनाचेतनोभयसृष्टेर्निभालनस्य तत्प्र[1]तिश्रुदाकर्णनस्य तन्नि-निरीक्षणस्य तद्रामणीयकोपभोगस्य च ग्रामेष्वेवावसरो न नगरेषु। पशुसङ्घैः संचरमाणाः शकुनिनिकुरम्बाणि चाभितो निरीक्षमाणा ग्रामी-णास्ततत्स्वभावं परिचिन्वन्ति तत्तद्रुतानि च विजानन्ति। मेघनादानु-लासिनो[2] लास्यं पश्यन्ति, केकाश्च शृण्वन्ति, कोकिलरवांश्च मनोहृत्य निशाम्यन्ति। उपान्तवर्तिष्वरण्येषु च पादबन्धनं[3] चारयन्तः श्वापदै-रपि ससृज्यमानास्तच्छीलान्यपि हेलया विजानन्ति। मन्दमारुतान्दो-लितपल्लवाः प्रतानिनीर्नानासस्याढ्या विस्तारवतीः क्षेत्रभक्तीः शाद्वलान् गोचरान्वनस्पतीन्वानस्पत्यांश्च विविधानि नवानि शष्पाणि चालोकमा-लोकं तैस्तैरर्थैर्बन्धुभावं सखिभावं वोपगतः प्रह्लादते मुग्धो जानपदो जनः। प्रशान्तायां प्रत्यूषवेलायां [4]चक्रवालमाक्रममाणस्य[5] स्वेनारुणिम्ना हरितान्यप्यवश्यायप्रसिक्तानि शष्पाण्युपरञ्जयतोऽ[6]रुणस्याभिनवोदितस्य वा कुमुदिनीनायकस्याभितो दर्शने मन्दसुरभिसमीरस्य वाञ्जलिभिः पाने ग्रामीणा एवेशते न नागराः। नगरेषु तु सर्वं कृतम्, नाकृतकं किञ्चि-दस्ति। कृतकः स्नेहः, कृतक आदरः, कृतकं दाक्षिण्यम्, कृतक आकल्पः,[7] कृतकं सुखोपकरणम्, कृतका गृहाः, कृतका आरामाः, कृतिकाः खेलाः। यत्सत्यं कृतकं मानुष्यकमिति।

ग्रामेष्वल्पा एव जनाः संवसन्ति, सान्तराश्च गृहा भवन्त्यनुच्छ्रि-ताश्च, विततश्च क्षेत्रभूमय इत्यमृतगर्भा बालार्कमयूखा अन्तरगारमप्र-तिहताः प्रविशन्ति समुद्भासयन्ति चान्तरम्। कृषिव्यवसाया ग्रामीणाः प्रायेणेति भूम्ना प्रकाशेषु क्षेत्रेषु व्याप्रियन्ते, येपि खल्वन्तर्निकेते कृत्येषु प्रवर्तन्ते तक्षायस्कारादयः [8]कारवस्तेपि प्रवातं यथेष्टमासेवन्ते, आरोग्यं च परमं लभन्ते। ग्रामीणा हि महावर्ष्माणः[9] परिपुष्टाङ्गा दृढसन्धयो दीप्ति-मद्वपुषो महाप्राणा भवन्ति प्रायेण, नागरास्तु पृश्नयः[10] पेलवाङ्गाः कृशकाया

१. प्रतिश्रुत् = प्रतिशब्दः। २. मयूरस्य। ३. गोमहिष्यादि। ४. क्षितिजम्। ५. 'आङ उद्गमने' इत्यात्मनेपदम्। ६. बालार्कस्य। ७. वेषः। ८. शिल्पिनः। ९. प्रांशवः = महाकायाः। १०. अल्पतनवः।

विवर्णवदनाः सामयाश्च भवन्ति बहुशः । एषां च विशेषः शरीर एव न, चेतस्यपि लक्ष्यते । अहार्यनिश्चयतया प्रलोभनपराङ्मुखतया निर्भीकतया स्फुटवादितया प्रकृतिस्थतया चैते जानपदाः सुदूरमतिक्रामन्ति नागरिकान् । परम्परीणमाचारमनुपालयन्तो विदेशजं वस्तुजातमनभ्युपयन्तः परकीयं नेपथ्य चाननुकुर्वन्तोऽविकृते स्वे रूपेऽवतिष्ठन्ते । नागरास्तु प्रायेणाल्पसत्त्वा इत्यधीरा अव्यवस्थितचेतसश्च, बह्वपेक्षा इति भीताश्चाटुकाराश्च, दक्षिणा इति मनसा विसंवदद्वाचो ध्वंसकाश्च। एते हि सततं संस्कारपरायणा यतस्ततश्चाहार्यगुणमपेक्षमाणाः स्वतामेव हारयन्ति । सुखस्योचिताः[1] सलोलं सविभ्रमं च निर्वहन्तोऽनर्हाश्च भवन्ति द्वन्द्वसहिष्णुतायाः ।

परं नैतदस्ति नगरवासे गुणा एव न सन्तीति । कथं वा शक्यं भरतशपथो विस्मर्तुम्—'' षण्मासान्ग्राममावसेद्यस्यार्योऽनुमते गत' इति । सत्यं सार्षपं शाकं पिच्छिलं दधि गुडं च सरसं यथेष्टमश्नाति ग्राम्यः, ग्राम्य इति च व्यपदिश्यत इत्यप्यवितथम् ।

प्रायशो नाभिविनीता विद्यासु कलासु वाऽमी ग्रामीणा विरलमेव निर्वेशं[2] लभन्ते कृच्छ्रेण च वर्तन्ते । नागरास्तु विविधविद्याभारभासुरा भूयसे निर्वेशाय कल्पन्ते सुखं च निर्वहन्ते । पूर्वे लोकव्यवहारस्यानभिज्ञा इति बहुधा विप्रलभ्यन्ते, इतरे तु व्यवहारे पर कुशला नेतरैर्विलभ्यन्ते । साधूक्तं केनापि विदां वरेण वदावदेन—यदीच्छसि लोको मां जानीयान्न चाहं किमपि जानीयां तर्हि ग्राममावसेति । अथेच्छसि बुध्येय यत्तु सतत्त्वं लोकश्च मां मा स्म बुद्धेति तर्हि नगरमुपवसेति ।

परिष्कारोपि नात्र नात्यन्ताय परिहरणीयः । एपणीयः स भवति वाचि वेषे च । यो हि वल्गुवाक् सुनेपथ्यः स कस्य मनो नावर्जयति कस्य वान्तरङ्गं नोत्तरङ्गयति परितोषेण । विसर्गसुन्दरमप्यनलङ्कृतं वपुरप्रसिद्धा[4] वा शिरोरुहा न तथा हृदयहारिणो भवन्ति यथोपस्कृता परं

---

१. धूर्ताः । २. अभ्यस्ताः । सुखसम्बद्धाः । उच समवाये इति धातुः । ३. भृतिं भोगं वा । ४. ये कङ्कतिकया प्रसाधिता न भवन्ति ।

ग्राम्येष्वयं परिष्कारः सुदुर्लभः । यदि नाम स्यात्तर्हि ग्राम्यतामेव ते विजह्युः ।

अबोधोपहता ग्रामीणा निसर्गत एवान्धतमसे निलीना वस्त्वाभासांस्तुच्छान्वस्तुतया परिगृह्णन्ति, प्रवादानपि निर्निबन्धनान्प्रतियन्ति, पितृपैतामहान् मूढान् विश्वासानप्यपरीक्ष्यैव परिश्लिष्यन्ति, पङ्गव इव पर्पेण[1] परेण प्रेक्षावता न नेया भवन्ति । तदिदं कस्य नामाऽभिमतं स्याद् ग्राम्यवृत्तं सुमेधसः ।

अयमत्र निष्कर्षः—न हि स्वायम्भुवेऽस्मिन्सर्गे किमपि दोषलेशैरस्पृष्टं गुणैकनिकेतनं समस्ति । ग्रामेषु यदीष्टा विद्यावितरणसंविधा विधीयेत, शिल्पेषु च केषुचन गृह्येष्वभिविनीयेत लोकस्तर्हि न किमपि हीयेत सर्वं च समाधीयेत । यदि वा ग्रामे ग्रामे वा विद्याशालानि पुस्तकागाराणि च प्रवर्त्येरंस्तदा ग्रामवासदोषा भूयसाऽपकृष्येरन् । या चास्य चिन्ताविनिर्मुक्तस्य प्रगुणप्रकृतेर्ऋजुदृष्टेरपुरोभागिनो[2] ग्रामीणस्य दैनन्दिनी चर्या सा कस्य स्पृहां न जनयति । जायन्ते हि कवयो न च क्रियन्त इत्याभणन्ति । ग्रामेषु विविक्ताः[3] प्रदेशा एकान्तरमणीयाः स्थलीविशेषाः सरितामु[3]पह्वराणि च धियं जिन्वन्ति[4] जायन्ते चोत्तमोत्तमाः कविबुद्धयः । ग्रामा हि कवयितॄणां जनिभुवो न नगराणीति सुस्थित उत्कर्षप्रकर्षो ग्रामाणामिति शम् ॥

---

## ( २३ ) सङ्घे शक्तिः कलौ युगे

संहतिः कार्यसाधिका कलौ तु विशेषत इति प्रकृतो विषयः । यद् व्यस्तैः पृथक्त्वशः प्रवृत्तैरसाध्यं भवति तत्समस्तैः सम्भूय समुत्थितैः सुसाधम्भवतीति किमत्र चित्रम् । पृथगवस्थिता क्षुद्रा दुर्बला अप्यर्थाः साहचर्यमापन्ना बलान्विता भवन्ति दुष्कराणि च कुर्वन्ति । इदं च साधारणं चेतनाचेतनानां भूतानाम् । बाष्पच्छेद्यानि मन्दमारुतान्दो-

---

१. येन पीठेन पङ्गवश्चरन्ति स पर्पः । २. सरलस्वभावस्य । ३. रहःप्रदेशाः । 'रहोऽन्तिकमुपह्वरे' इत्यमरः । ४. प्रीणयन्ति । जिवि प्रीणने इति धातुः ।

ल्यानि तनूनि परिलघूनि च यानि भवन्ति तृणानि तान्येव तृणान्तरैः संसृज्यमानानि वर्त्यमानानि च तथा दृढानि भवन्ति यथा मत्तवारणानामपि सन्दानाय[1] प्रभवन्ति। एकत्वसंख्याङ्कोपरेण तादृशेन समं विन्यस्तः संमिलित एकादशत्वमापद्यते, तन्निर्देशको भवति। यद्येवं जडेषु समेतेष्वभूतपूर्वं कार्यसामर्थ्यमुत्पद्यते, चेतनेषु प्रतिबोधवत्सु मनुजेषु तदतिरिक्तमुत्पद्येतेति सूपपन्नम्। सङ्घे शक्तिरिति यदुक्तं तत्कालत्रयाबाधितमव्यभिचारि तथ्यम्। न कलावेव तत्सदसच्च युगान्तरेष्विति शङ्कितव्यम्। कलिमधिकृत्योपन्यासे त्वयमभिप्रायो लक्ष्यते वक्तुः—युगान्तरेषु कृतादिषु प्रायेण सुकृतिनो लोका बभूवुरिति तेऽसंहता अपि सुकृतबलेन तपोबलेन च तांस्तान्कामान्सम्पादयितुमलम्बभूवुरिति सङ्घं न बह्वपेक्षामासुः। कलौ तु ह्रसितं धर्माचरणमवसितं च तपश्चरणमिति सङ्घ एव शरणम्। अतश्च [2]सुगतोप्यनुशशास लोकं सङ्घं शरणं गच्छेति। इदं चात्र हेत्वन्तरमभ्यूहितव्यम्—अद्यत्वे प्रजातन्त्रं राज्यमिति शासितारः प्रजाकामानुगा भवन्ति न स्वैरवृत्तयः। प्रजाश्च संघटिता एव सत्यः शासितॄननुमानयितुमर्हा न विघटिता विसंवादिन्यश्चेतीष्टसम्पत्तये सङ्घटन्ते।

सङ्घे शक्तिरिति सम्यक् प्रतिपन्नो लोको यत्र तत्र श्रेणिकृतो दृश्यते। क्वचिदासेघजीविनां[3] व्राता दृश्यन्ते, क्वचिद्वणिजां पूगाः क्वचिद्रेलनियोगिनां सङ्घाः क्वचिच्छिल्पिश्रेणयः क्वचित्पत्रवाहानां समवायाः। आसतां तावद् व्यवसायिनो नियोगिनो वा, येऽध्यापका[4] ये चाध्यापकास्तेपि समवायिनो भवन्ति। इमे व्रातादयः सम्भूय परामृशन्ति, कृत्यं च व्यवस्यन्ति। ये तत्र स्वतन्त्रवृत्तयस्ते सर्वस्य समवायस्याभिवृद्धये राज्याधिकृतान्प्रेरयन्ति तत्तदस्मदर्थे संविधीयतां तत्तदनिष्टं च प्रतिविधीयतामिति। एवं समवायेन प्रेरितास्ते राजमन्त्रिणो न पारयन्ति तदुक्तमवज्ञातुम्। यदाऽऽवेशनादिषु व्यापृताः कर्मकरा अल्पं नो वेतनं बहवश्च व्यापृतिहोरा अल्पीयांसोऽवकाशदिवसा इत्यैकमत्यमास्थिता आवेदयन्ति राजमन्त्रिणः

---

१. बन्धनाय। २. बुद्धः। ३. आसेधः = शरीरायासः। ४ अध्येतारः (छात्राः) धर्मसूत्रेषु दृष्टचरोऽयं प्रयोगः।

प्रार्थयन्ते च सर्वं तत्समाधीयतां मासेन, नो चेत्कार्यं विरमयिष्यते सर्वैरस्माभिरिति तदा न केवलमावेशने[1] ष्वधिपतयो राज्येऽधिकृता अपि महतीं चिन्तामापद्यन्ते बलवच्च व्यथन्ते। यावच्च तान्कर्मकरानिष्टार्थोपपादनेन न सान्त्वयन्ति न तावत्स्वयमपि शाम्यन्ति। एवमन्येष्वप्यूह्यम्। गतः स सम्प्रति कालो यत्र तक्षायस्कारादयः कारवो धावकादयो नापितादयो वा शूद्रा इति द्विजैः सावहेलमाचर्यन्त। एतेऽपि समवायान्समवेता इति न शक्यन्तेऽवहेलितुम्। यावन्तं च निर्वेशं स्वस्य कर्मणः काङ्क्षन्ति तावन्तमेव प्रतीच्छन्ति नोनम्।

अन्यत्रापि समवायशक्तिरिष्टकरी दृश्यते। सन्तीह राष्ट्रे यत्र तत्र विदुषां समाजा धर्मप्रचारार्थाश्च समितयः। यदा कदाच्छासनाधिकृतैः किमपि नूतनं विधानं विधीयते यच्छास्त्रदृष्टं न भवति यद्वा शास्त्रं विरुणद्धि पितृपैतामहीं मर्यादां च भनक्ति हितं च हन्ति तदाऽऽहिमवत आ च कन्याकुमार्या विद्वत्समाजास्तास्ताश्चान्याः सभाः स्वरैक्येण राज्याधिकृतान्प्रबोधयन्ति बलवच्च प्रचोदयन्तीदं विधानं सद्योऽपो[2]ह्यतामिति। अपोदितं च तद्भवति सङ्घशक्तिश्चोपदर्शिता भवति।

पाकिस्तानस्थापना चानुत्तमं निदर्शनं सङ्घशक्तेः। एतस्य स्थापनायामिह देशे वास्तव्यैर्मुहम्मदानुगैर्न स्वार्थप्रहाणिर्विसोढा, न स्वजनविप्रयोगोऽनुभूतो न दमो दत्तो न कारावरोधः सम्प्राप्तो न च निर्वासनदुःखमाप्तं न वोपोषण[3]कृच्छ्रमुपभुक्तम्। सङ्घभावगमनेनैवानायासेनापूर्यत मनोरथोऽमीषाम्। इह भारते वर्षे मुस्लिम् लीग इत्याख्या सभा सर्वेभ्यो मौहम्मदेभ्यः[4] प्रतिनिधिभूता संस्थापिताऽभूत्। तस्या न्ययम्यताध्यक्षः कश्चित्सौराष्ट्रो मुहम्मद अली-जिन्ना इत्यभिख्यः। तेन लीग्-सदस्यैरङ्गीकार्यं प्रस्तावोऽयं समुद्घोषितः—एतद्देशमधिवसन्तो मौहम्मदा हिन्दुभिः सजातयो न भवन्ति, किन्तर्ह्याचारविचाराकल्पादिभेदाद्भिन्नाः स्वतन्त्रजातयः सन्तीति राष्ट्रेऽन्तः पृथगेकदेशं सबहुमान

१. स्वामीश्वराधिपतीति पद्धे सप्तमी। २ अपपूर्वाद्वदः कर्मणि लोट्। ३. उपवासदुःखम्। ४. इति पञ्चमी, प्रतिनिधिप्रतिदाने च यस्मादिति विज्ञाय।

वसतये सुखोपकरणक्लृप्तये धर्माभिवृद्धये [1]परनिर्वृतये च त्वरितमपेक्षन्ते, न चात्र व्याक्षेपं[2] विरोधं वा सहिष्यन्त इति। नेह देशे क्वचित्पञ्चालेषु वा कलिङ्गेषु वा, मगधेषु वा वङ्गेषु वा दक्षिणापथे वा कश्चन मौहम्मदो-भूयः पृथगावासं देशविभक्तिलभ्यं नाकामयत, मुस्लिम् लीग्–समवाये च न समवैत्, जिन्नेतिनामानं वा न नेतारमभ्युपैत्। एवं संहतास्ते पाकि-स्तानलब्धयेनारतमारावमकार्षुः, यत्र तत्र विघ्नव्रजान्व्यदधुः कुशं वा काशं वाऽऽलम्ब्य हिन्दुभिर्व्यग्रहीषुरस्वास्थ्यं च सार्वत्रिकं व्यतनिषुः। नान्तरेण पाकिस्तानं सन्तोक्ष्यामोऽवश्यं च तदाप्स्याम इति संगिरमाणा ऐकस्वर्यबलेनैव सिद्धसमीहिता अभूवन्नित्यचिरातीत एव वृत्तान्तः कस्य नावगतः।

यत्र च सङ्घाभावस्तत्र महती विनष्टिर्भवति लोकानामिति प्रसङ्गा-दिदानीमुदाहरामः। ये नाम संगच्छध्वं संवदध्वं सं वो मनांसि जानता-मित्यार्षीमनुशिष्टिमुच्चरन्ते[3] तेवमन्यन्ते परैश्चावस्कद्यन्ते। किं न वो विदितं सोदर्ययोः पृथ्वीराजजयचन्द्रयोर्भेदादेव मुहम्मदगोरीति नामा-ऽऽक्रमिता प्रागल्भतेमं देशमभियातुं पृथ्वीराजं च संगरे विजेतुम्। किं च नावगतं तत्तदवान्तरदेशाधिपतिषु राजपुत्रादिषु मिथो विगृह्णानेष्वेवा-ङ्गला वाणिजा [4]वणिज्ययोपेतास्तस्य तस्य व्यसनोपेतस्य भूपस्याभ्युपप-त्तिव्यपदेशेन सम्परायेषु व्याप्रियमाणा जिताहवास्तं तं भूपतिं व्यापारोप-यन्त, कालेन चास्य समग्रस्य राष्ट्रस्येश्वरा भूत्वा परमामोदमविन्दन्तेति। तेनान्वयव्यतिरेकाभ्यां सङ्घे शक्तिरिति प्रमाणितं भवति॥

---

१. सम्परायसुखाय = परमानन्दाय। २. विलम्बम्। ३. अतिलङ्घन्ते। ४. वणिजो भावः कर्म च वणिज्या (काशिकानुसारी प्रयोगः)।

## ( २४ ) मातृभूमिवात्सल्यम्

मातृभूमिवात्सल्यं नाम स्वदेशे निष्कारणं प्रेमा, देशभक्तिरिति यावत्। पुण्येयं भावना सत्तमा भावनानाम्। एतया प्रयुक्तो मानवो न केवलं स्वार्थाविरोधेन देशहितार्थं समीहते स्वार्थपरित्यागेनापि। एतल्लक्षणं च वात्सल्यं तत्तद्देशजेषु तं तं देशं प्रति सांसिद्धिकं विद्यते। सर्वो जन आढ्यो वाऽनाढ्यो वाऽभिजातो वाऽनभिजातो वा शालीनो[1] वा यायावरो वा भूपो वा रङ्को वा स्वं देशं प्रशस्यमानमनुनिशम्य प्रसीदति निन्द्यमानं चाकर्ण्य सीदति। आफ्रीकाधन्वनि जातसंवृद्धो नीगरोऽपि स्वदेशं प्रति स्नेहार्द्रचेता भवति। 'ग्रीन्लेण्ड्' इत्यत्र लब्धजनिर्जनो न जातु प्रतिपद्यते मदीयात्तुषारसदनाद् देशान्तरेऽनतिशीतोष्णे सुखतराणि गेहानि संभवन्तीति। इयं हि देशभक्तिभावना यदा दृढभूमिका भवति तदा किमपि सामर्थ्यमादधाति। प्राणात्यये सर्वधनापहारे वनितावमर्शेऽन्यत्र वा संकटे भावनेयं कातरमपि [2]धृष्णजं करोति, दुर्बलमपि बलिनं करोति, कारयति च विक्रान्तानि चरिताश्चर्याणि। विद्यानां परपारदृश्वानः सर्वत्र मैत्राः कारुणिकाः शान्ता दान्ता अपि विद्वांसः परैरास्कन्नस्य देशस्य परित्राणाय विहायाध्ययनाध्यापने सैन्यवृत्तिमातिष्ठन्ति, देशे विदेशे च मानं महान्तमासादयन्ति।

देशभक्तिर्नाम नैकरूपा। सन्त्यस्याः कियत्यश्चिदाकृतयः सत्योऽसत्यश्च। निर्वासितस्य यत्स्वदेशं प्रति गमनौत्सुक्यं सा तावद्भक्तिर्यामधिकृत्य निबद्धानि कविभिः काव्यानि। प्रव्राजितो जनो न प्रभवति स्वं देशं [3]प्रस्मर्तुम्। विदेशे सर्वं सुखमुपभुञ्जानोऽपि यथेष्टाहारविहारोऽपि समृद्धतरोऽपि नित्यमुत्कण्ठते जन्मभूमेः। नित्यं स्वदेशविषयाणि स्वप्नसन्दर्शनानि पश्यन्ति। चिरविप्रयुक्तैः सखिभिर्बन्धुभिश्च मनसा संप्रयुज्यते,[4] चिरं च संभाषते। अन्योऽपि कश्चिद्वृत्तिहेतोर्देशान्तरे कृतवसतिर्नातीव तत्र रमते। उक्तं च—

---

१. गृही। २. प्रगल्भम्=साहसिकम्। नजिङ् प्रत्ययः। ३. विस्मर्तुम्।
४. संगच्छते।

अस्ति यद्यपि सर्वत्र नीरं नीरजराजितम् ।
रमते न मरालस्य मानसं मानसं विना ॥ इति ।

या च परैराक्रंस्यमानस्य[1] स्वदेशस्य रिरक्षिषा साऽपि देशभक्तिर्भवति । इयं च यथा प्रयोजयति [2]जनकायं स्वार्थप्रहाणाय समुत्थानाय विक्रान्तचरिताय च न तथेतरत्किञ्चित् । एतत्प्रयोजिता एव सहस्रशो लक्षशश्च लोका अविगणय्येष्टजनविप्रयोगम्, अनादृत्य पोष्यवर्गसम्पोषम्, उपेक्ष्य सुखोपकरणानि चिरपरिचितानि, तृणीकृत्य जीवितं सोत्साहातिरेकं स्वस्य करणं देशोपकरणतां नयन्ति, सैनिकतायां चात्मानमभिविनिवेश्य सैन्याङ्गभावं भजन्ति, रणशिरसि च वर्तमानास्तुमुले च सम्पराये प्रवृत्तेऽगणिततनूपातं तथा संग्रामयन्ते[3] यथाऽचिरेणैव द्विषतः पराणुदन्ते स्वदेशं च परित्रायन्ते । येपि नाम कृशाङ्गा विकलाङ्गा बालाः स्त्रियो वृद्धा वा योद्धुं न क्षमन्ते तेपि [4]प्रत्यर्थिपराजयं कामयन्ते नक्तन्दिवं च तदर्थं देवताः प्रार्थयन्ते । येपि श्रेष्ठिनामुत्तमा आवेशनादीनामीश्वरा योद्धुं चानीश्वरास्तेप्यपरप्रेरिता एव कृताकृते हेमरूप्ये देशनायकेष्वर्पयन्ति संयुगोपयोगिसाधनसामग्र्यं च सज्जयन्ति । एषा भक्तिभावना खलु समुपस्थिते भये संनिकर्षवर्तिनि चाभिघातिनि[5] सर्वान्व्रातान्सर्वान्पूगान्सर्वांश्च गणान्सर्वांश्च श्रेणीस्तथा संहन्ति तथैकतासूत्रे प्रथयति यथा नान्यदिह प्रभवति कर्तुम् । इह भारते वर्षे वर्षान्तरेषु तदेकदेशाधिवासिनां [6]व्यस्तानामपि मिथो विगृह्णतामपि क्षत्रियाणां साधारणस्य कृताभियानस्यामित्रस्य विरोधनाय बहुशः समवायः किलाभूत् । महमूदेन समसायोधने भटिण्डेश्वरस्यानन्दपालस्य साहायकाय कान्यकुब्जाद्यवान्तरदेशानां राजपुत्रप्रधानानां समरव्यसनिन्यः पडनीकिन्यः समत्रायन् । अत्रावसर आर्यललना दूरेषु दवीयःसु च प्रदेशेषु वर्तमानाः स्वाः शरीरभूषा विक्रीय तल्लब्धं धनराशिं समरं विनियोगाय प्राहिण्वन् । दुर्विधाश्चापि सीमन्तिन्यो रात्रिन्दिवं तर्कुटिं वा कर्तनचक्रं वाऽचालयन्, कर्मकराश्चातिरिक्तेनोत्साहेनानारतं प्रायसन्, वयमपि सैनिकेभ्यः किंचित् प्रहेतुं पारयेमेति । एवं किल

---

१. आङ्पूर्वात्क्रमेः कर्मणि लृटः शानच् । २. जनसमूहम् । ३. संग्रामयुद्धे चुरादिरात्मनेपदी । ४. प्रत्यर्थी = शत्रुः । ५. शत्रौ । ६. पृथग्भूतानामपि ।

यवनदेशेऽवान्तरभूपाः शश्वदन्योन्येन [1]संयत्ता अपि पारसीकैर्धर्षिता एकीभूय तान्समासदन् । फ्रांसदेशजा अपि मिथो द्वैधं गता जोन् आफ आर्क इत्यनेन प्रयुक्ता आङ्गलविरोधायैक्यमापन् । तथा चाङ्गला धर्मसंकटे पतिता धर्मविषये प्रसरति मतविसंवादे स्पेनराजस्य सामुद्रं महद्बलं विरोद्धुमेकत्वमगमन्नित्यादिरुदन्तः कस्य किञ्चिज्ज्ञस्यापि न विदितः ।

अनेकानि खलूपाख्यानानि शूराणां देशस्वातन्त्र्याय प्रियानसूंस्त्यक्तवतां देशवत्सलानां शृणुमो [2]वृद्धानाम् । इह देशे पुरुषराजस्य[3], प्रतापस्य झांसीराज्ञ्याश्चोदन्ताः कं विस्मयविधेयं प्रशंसाप्रवणं च न विदधति, कं वा रणोत्सुकं समुत्साहोत्तरङ्गितान्तरङ्गं न कुर्वन्ति । कया गिरा स्तुवीमोऽप्रधृष्यप्रतापं त प्रतापं यस्य [4]सगन्धतयाऽद्यापि शिर उन्नमय्य क्रामामः । कस्य नाम न विदितमस्य कृच्छ्रगतस्यापि, विभवविधुरस्यापि, क्षुधावसन्नस्यापि, शात्रवैरनुसृतस्यापि, अटवीतोऽटवीमाहिण्डमानस्याप्यनवसादो धैर्यस्य; विजिगीषाऽमित्रस्य, समाराधनं च स्वातन्त्र्यस्य । कस्य वा न हर्षयति तनूरुहाणि[5] धन्यस्यास्य 'नाहं शय्यामधिशयिष्ये, न श्मश्रूणि आवर्त्योन्नमयिष्ये, पलाशादिपत्रे न्यस्यान्नं भोक्ष्ये न रजतादिपात्रे, न चित्तौड़भुवि पदमर्पयिष्ये यावन्न चित्तौड़भूः शत्रुहस्तान्निर्मुच्येते'ति प्रतिज्ञानम् ।

इयमपरा देशभक्तिर्यः परिशुद्धः प्रणयो जनन्यामिव जननभूम्यां नृपनीतिनदीष्णानां नेतृप्रमुखाणाम् । एते हि महाभागाः स्वं देशं स्वेनाचारेण सततमुन्नमयन्ति, देशान्तरेषु चास्याभिख्यां प्रख्यापयन्ति, न च कदाचिन्मनागपि तथा व्यवहरन्ति यथा देशहितं मात्रयाऽप्युपहन्येत, तच्छ्रेयो वा प्रतिहन्येत, तद्यशो वा विदूष्येत, तद्गौरवं वा हीयेत । नागरिको ग्रामीणोपि देशभक्तेष्वन्यतम एव यो नागरिकानुष्ठेयान्धर्मान् ग्राम्योचितान्वा यथाप्राप्तं साध्वनुतिष्ठति, यश्च देशविधानानि सानुरक्तवदनुविधत्ते । यश्च देशे सर्वदाऽऽर्जवपक्षपाती सर्वत्र चानाकुलीभावमि-

१. प्रवृत्तसंग्रामाः । २. आख्यातोपयोगे इत्यस्याविषयत्वात्सम्बन्धमात्रे षष्ठी । ३. पोरस इति ख्यातस्य । ४. बन्धुभावेन । ५. लोमानि ।

च्छति। एवंविधा ये दोषापकर्षणेन गुणाधानेन च सर्वानर्थानुपस्कर्तुं यतन्ते, ते स्वार्थानुसन्धायिनः परार्थेनोदरम्भरीनुद्धर्तुमवधृतवतां पूतमनसां नायकप्रवराणां सहाया भवन्ति।

इयं चानुत्तमा देशभक्तिर्या परिशोधकस्य देशाभिरतिर्नाम देशश्रेयोभिलाषस्य पर्यायः। परिशोधको हि यत्र क्वापि प्रजोपपीडनं तीक्ष्णोपायप्रयोगं जिह्माचरणमन्याय्यव्यवहारं वा पश्यति तत्र दोषमभीतवन्निर्दिशति यथेष्टं च समादधाति। स खल्वनिष्टान् पारम्पर्यागतानाचारान् निर्निबन्धनान् विचारांश्च बलवन्निन्दति, नूतनान्यपथ्यानि प्रस्थानान्यपि प्रकाशमाक्षिपति, संभूय समुत्थानं प्रेरयति, हितं तथ्यं चोपदिशति। परं लोकस्तमन्यथा गृह्णाति। तेनायं प्रायो लोकस्य प्रियो न भवति द्वेष्यस्तु बहुधा भवति। नाऽयं प्रभूणां न वा प्रजानां प्रशस्यो भवति। अहो वामो विधिः। येषां कारणात्स क्लिश्यते महाभागः, येषां समुन्नतिं शिवताति[1] च साधयिष्यंस्तत्र तत्र दोषानाविष्करोति त एव तमवधीरयन्ति, तं द्विषन्ति, तमभिद्रुह्यन्ति। परमिदमवश्याभ्युपेयं शुचितमा सत्तमा तस्य देशभक्तिरिति।

देशभक्ताभासा अपि केचन सन्ति, ते वेदितव्याः परिहर्तव्याश्च। ये नाम स्वार्थानुसन्धित्सया देशस्योपकुर्वाणा इव दृश्यन्ते ते मिथ्याभक्ताः। एते हि कञ्चित्कालं देशं शुश्रूषित्वा क्लेशांश्च कियतोपि सहित्वाऽऽत्मनो देशभक्तिं लोके प्रख्यापयन्ति। एवं प्रख्यापितभक्तयस्ते लोकेष्वाहितप्रत्यया विधानसंसदां कार्यनिर्वाहणसमितीनां वा पारिषद्यतां लभन्ते तैर्निर्धारिताः। गुरून्गुरुतरान्वाऽधिकारानासादयन्ति। एवंविधानेव मनसिकृत्य कश्चिद्विपश्चिदाह—देशभक्तिर्नोमान्त्यं शठस्य शरणमिति।

इयं चापरविधा देशभक्तिः स्वराष्ट्रश्लाघात्मिका परराष्ट्रनिन्दात्मिका। सैषाप्यनभिनन्द्या। एतया प्रयुक्तो जननिवहः स्वविषयेऽसन्तमपि वैभवं गुणप्रकर्षं वोच्चैर्गायति, परत्र च सतीमपि स्फातिमवगायति[2] स्वदेशे

१. शिवताति = मङ्गलम्। २. निन्दति।

सर्वमनवद्यं पश्यति परदेशे च सावद्यम्। एतदावेशेन लघूनि परराष्ट्राण्युपद्रवति बृहद्राष्ट्रम्, तदीयानि समीहितानि विघटयति, तदीयेषु व्यापारेषु हस्तं क्षिपति। इदंलक्षणा भावना जगति प्रशमं भनक्ति, सौमनस्यं समुत्सादयति, सम्भूय समुत्थानं च वारयति।

सर्वाङ्गसुन्दरी भव्येयं भावना देशभक्तिर्नाम। राजनीतिनिपुणास्तु जनतागतां पुण्यामपीमां भावनां स्वार्थप्रसाधनायां विनियोगं नयन्ति। यद्यपि देशान्तरेण विग्रहो हितो न स्यात्, शत्रोश्च प्रथमाक्रमस्यातङ्कोपि न स्यात् तथापि समुन्नयो नो भविष्यति सङ्गरेण प्रख्यातिश्च महतीति व्यवसितास्ते स्वदेशजानां भक्तिभावमुद्भाव्य देशान्तराणि समरायाह्वयन्ते[1]। अतिक्रान्ते विश्वसंगरे शर्मण्यदेशनायकानां जापानदेशनेतॄणां च समाचारोऽत्र निदर्शनम्। अत्रापि सुधीभिर्देशप्रणयिभिर्जागरूकैर्भाव्यम्॥



## (२५) वाराङ्गनेव नृपनीतिरनेकरूपा

वाराङ्गना रूपमाजीवतीति पुरुषं पुरुषं प्ररोचयितुमनेकानि रूपाणि कुरुते। तैस्तैश्च सुमनोवर्णकादिभिः परिकर्मयति[2] कायं प्रसाधयति च शिरोरुहान् आच्छादयति चामोदिनी प्रतनुनी कान्तिमती वाससी। तेन तेनागन्तुना साधनेन नित्यं रूपस्योपस्कुर्वाणा[3] सा नवं नवमाकल्पं कुरुतेऽलङ्क्रियां च नैकविधामङ्गीकुरुते। एवं राजनीतिरपि नैकरूपा। तस्या अपि बहवः समाराध्या मित्रोदासीनशत्रवः। मित्रेष्वपि भिन्नरुचिर्हि लोक इति सर्वस्य समाराधनं चिकीर्षन्ती तपस्विनीयं दुष्करं कुरुते। यथैकदा वर्तते न तथाऽन्यदा। यथा चैकत्र व्यक्तौ समष्टौ वा वर्तते न तथाऽन्यत्रेति नैकमस्या व्यवस्थितं रूपम्।

प्रयोजनापेक्षिणो हि प्रभव इति सर्वेष्वर्थेषु सर्वं च कालं सम

---

१. स्पर्धायामाङ ह्वयात्मनेपदम्। २. प्रसाधयति। ३. नवं गुणमादधाना, प्रतियत्ने षष्ठी, तत्रैव च तङ्।

गौरवं[1] नोपपद्यत इत्यनवस्थितता नीतेरर्थादापद्यते । यत्र व्यक्तौ समष्टौ वा ममेष्टं निर्वर्तस्यतीति संभावयति नृपतिस्तस्यां सविशेषमादृतो भवति, निर्वृत्ते तु तस्मिन्कटाक्षपातेनापि तां नानुगृह्णाति । अत एव परमार्थतो राज्ञो न कश्चित्संमतो भवति न कश्चिद् द्वेष्यः । कार्यानुरोधेनैव कश्चिदस्य प्रियो भवति कश्चित्कालं कश्चिदप्रियः । कदाचित्परस्परं विगृह्णानाः क्षिण्वानाश्च लोका अस्य प्रिया भवन्ति, यस्मादेवं ते बलं नोपचिन्वन्ति प्रतिरोधे चाक्षमा भवन्ति । कदाचिद्राजा वा राजमन्त्रिणो वा प्रीतिवाक्यैः सामप्रयोगैश्च प्रजा आवर्जयन्ति, कदाचिदतिमृदुः परिभूयत इति मत्वा बलवदुद्वेजयन्ति । अपि च ये तत्र धनधान्यैः स्फीताः संहता बलवन्तो ज्ञातिमन्तः सानुगाश्च तेषु प्रणयेन वर्तन्ते, तानात्मीयानिव कुर्वन्ति, 'तेषु वर्षन्ति, तान्परिपुष्यन्ति, तैरेव चोपपीडयन्ति कृशानसाधनानज्ञातीन् । केचिन्न्याय्यवृत्तयः प्रजाहितचिन्तनैकतानाः[2] क्षात्रियैर्घार्यते चापो नार्तशब्दो भवेदिति सततमुदायुधा अबलान्स्त्रीबालवृद्धान् परिपालयन्ति, धर्मक्रियाः परिरक्षन्ति सतश्च गोपायन्ति । सर्वान्सेतून् बिभित्सूञ्जाल्मान्साहसिकानाततायिनश्च नियमयन्त्यात्तदण्डाः, न्याय्येन च पथा प्रस्थापयन्ति लोकम् ।

'हिरण्येनार्थिनो भवन्ति राजान' इति हिरण्यसंग्रहं चिकीर्षवस्ते कुशं वा काशं वाऽऽलम्ब्य दूषयन्ति धनिनः, दूषयित्वा च रक्षिभिस्तानासेधयन्ति दमं च पुष्कलं [3]दापयन्ति कारानिक्षेपं वाऽऽदिशन्ति । एवं महान्तमर्थराशिं संगृह्णन्ति । अनभियुज्यापि वा तत्र तत्र पण्येषु करं न्यस्यन्ति, तेनापि यथेष्टं संचिन्वन्ति । यदा च पश्यन्ति करन्यासेनोद्वेगोऽभ्यधिक्रोऽजनीति तदा तत्प्रशमनाय देवतायतनाद्यर्थं विपुलं द्रव्यनिचयं विश्राणयन्ति[4], वापीकूपतटाकादीनि च खानयन्ति, कुट्टिमान्पथ [5]आवसथादींश्च कारयन्ति, तेन वदान्यतां स्वस्य प्रख्यापयन्ति ।

राजानो हि कदाचित्केषुचित्सत्यं श्रयन्तेऽन्यदाऽन्येष्वनृतं यथापे-

---

१. आदरः । २. एकाग्राः । ३. दापेर्द्विकर्मकता शास्त्रेनुक्तापि शिष्टसंमता ।
४ ददति । ५ पान्थालयादीन् ।

क्षम्। नैकत्र[1] निस्तिष्ठन्ति। यत्र पश्यन्ति मायया कार्यं निर्बध्यतीति तत्र मायासमाश्रयणे न संकुचन्ति प्रतिज्ञातमप्यपलपन्ति, येन केनापदेशेन सन्धिमपि दूषयन्ति, कृतमप्यृणं न निर्यातयन्ति। यत्र चेक्षन्ते यथा-तथमाविष्कृता वस्तुस्थितिः प्रजासु कोपं जनयिष्यति, अपरागं वा समी-रयिष्यति, तां प्रच्छादयन्ति, तामन्यथा वर्णयन्ति। प्रायेणाधिकृतानां सैनिकानां रक्षापुरुषाणां च कदाचारं वैषम्यं नैर्घृण्यं वा नाभ्युपयन्ति प्रत्युत सर्वात्मना[2] तन्निगूहन्ति। इदं हि तेषां दर्शनमेतेऽधिकृता राष्ट्राव-ष्टम्भभूता यदि सर्वजनप्रत्यक्षमपमान्येरंस्तदाऽमी अपरङ्क्कारः सर्वत्रा-धरोत्तरं च कर्तारः, अतः प्रजास्वन्याय्यं व्यवहरन्तोऽप्यदयं वाऽऽचरन्तोऽपि ते न दूषणीया इति।

अन्यदा धर्मासनमधिष्ठिता व्यवहारान्परीक्षमाणा अर्थिप्रत्यर्थिनां विषये पक्षपातासंस्पृष्टं परिशुद्धं प्राञ्जलं पेशलं च न्यायं कुर्वन्ति। अभि-जातेनाभिजाते वाऽऽढ्ये वाऽनाढ्ये वा ज्ञातावज्ञातौ वा द्विजातावेकजातौ वा योगिन इव समदर्शिनो भवन्ति। कालान्तरे मान्यान्मानयन्ति, विदुषोऽनुनयन्ति, कवीन् परितोषयन्ति, कलावतश्च वरिवस्यन्ति[3], तेना-त्मनो गुणगृह्यतामुद्घोषयन्ति। अन्यदा च स्मयदूषिता अहिमिव वञ्च-यन्ति विद्वज्जनम्, तैमिरिका इव न पश्यन्ति मुनिवृन्दम्, पङ्गव इव नाभ्युत्तिष्ठन्ति गुरून्, कण्टकानिव न पार्श्वे कुर्वन्ति कवीन्।

राजानो हि कदाचित्तथा कठिनहृदयाः क्रूरसमाचारा भवन्ति यथा स्वेन क्रौर्येण श्वापदानपि विशेषयन्ति[4]। तीक्ष्णनीरसा इमे परराष्ट्रा-क्रमणे लब्धस्य वा प्रशमने न बालमाद्रियन्ते न स्त्रियं न वृद्धम्, सर्वान्सममेवाचरन्ति, निर्घृणं च विशसन्ति[5]। सस्याढ्यानि परक्षेत्राण्यु-द्वासयन्ति, सौधानि भस्मसात्कुर्वन्ति, काननानि चेन्धनतां नयन्ति। अन्यदा चामी नवनीतहृदयाः प्रजाः स्वाः प्रजा इव तन्त्रयन्ते, तद्दुःखा-ग्निना सन्तप्ता इव च विलीयन्ते, आपन्नान्परित्रायन्ते, विकलान्क-

---

१. नैकत्र तेषां निष्ठा। २. सर्वेण = निरवशेषेण यत्नेन। आत्मशब्दो यत्न-वचनः। ३. सेवन्ते। ४. अतिक्रामन्ति। ५ शसु हिंसायाम्‌ प्रायेण विपूर्वः।

पणाङ्गनाननाथांश्च[1] भूयो दृश्यन्ते । एवं परिवर्तते नित्यं नयो भभुजां न चैकत्र रूपविशेषेवतिष्ठते । तस्मात्साधूक्तं कविना वाराङ्गनेव नृपनीतिरनेकरूपेति ।

---

## ( २६ ) जठरपिठरी दूष्पूरेयं करोति विडम्बनम्

इह सर्वे प्राणिनो मनुष्या वा केसरिणो दन्तिनो वा मृगशकुनिसरीसृपादयो वाऽविशेषेण वृत्तिं कामयन्ते तदर्थं च चेष्टन्ते । यश्चात्राभियोगो[2] लक्ष्यते मनुजेष्वितरेषु च, सर्वोऽपि स वृत्त्यर्थ एव । यदा जठरपिठरीपूर्त्तिप्रयोजन एवेति न न प्रत्यक्षं मन्दमेधस्यापि । उक्तं हि—'सर्वारम्भास्तण्डुलप्रस्थमूला' इति ! महति प्रत्यूषे ब्राह्ममुहूर्त्ते मुनिरिव जागर्ति चरणायुधोऽपस्किरते च भक्षार्थी । प्रभातायां निशायां चटकादयः शकुन्तयो विरवितुमारभन्ते सुप्तप्रबुद्धाः क्षुधिताश्च वृत्तिं वर्तयितुं सर्वात्मना यतन्ते । नक्तंचारिणो महासत्त्वा मृगेन्द्रादयोपि क्षुन्निवृत्तये भोज्यं मृगयन्ते विविधं च पराक्रमन्ते । एवं मनुष्या अपि सचेतसः कल्यमुत्थायाऽऽवश्यकं कृत्वाऽऽप्लुत्य देवतां च ध्यात्वाऽग्निं च परिचर्याऽऽजीवार्जने व्याप्रियन्तेऽशनायिताः[3] । सत्यं यदि दग्धमिदमुदरं न भरणीयं भवेत्तदा कस्यार्थे पुरुष एवं प्रयस्येत् पदं वा क्लेशस्यात्मानमुपनयेत् ।

परमिदमत्यन्तमाकूतकरं भवति परिचीयमानं कां कां [4]कारिं करोति जन आजीवकामः । द्विधा हि वृत्तिर्लक्ष्यते—स्वतन्त्रा परतन्त्रा च । तत्र ये स्वतन्त्रवृत्तयो विपणिनः कारिणः[5] कृषीवलाः कर्मकाराश्च, तेपि परस्परसव्यपेक्षा इति नात्यन्ताय स्वतन्त्राः । अवश्यं तैस्तैस्तत्तदर्थंसंग्रहाय सम्पन्नतरा उपेतव्या उपचरितव्या उपच्छन्दयितव्याश्च । कृशो बलिनमिवार्थ्यर्थवन्तमल्पसाधनो वा महासाधनमपेक्षते नरम् ।

---

१. कर्मत्वविवक्षायां द्वितीया । २. उद्योगः । ३. बुभुक्षिताः । ४. क्रियां=व्यवसायम् । ५. शिल्पिनः ।

ये तत्र प्रैष्यवृत्तिमुपजीवन्ति ते नाम महतीं विडम्बनां लभन्ते । अतिश्वी[1] सेवेति मनस्विनो नैतामिच्छन्ति । परं नात्र सर्वस्य कामचारः । न हि सर्वः स्वायत्तो जीवितुमर्हति, अवश्यं तेन वैतनिकेन भाव्यम् ।

केचिदधनाः स्वतन्त्रमाजीवमाप्तुमपर्याप्ता[2] गेहेषु भृत्यत्वं गताः पात्रसंमार्गादि कुर्वन्तः पाकं वा स्वाम्यर्थे निर्वर्तयन्तः कथंकथमपि जीवन्ति । प्रत्यहं प्रतिमुहूर्तं च तर्जनां गर्हणां च गुर्वीमधिगच्छन्ति गेहिन्याः । भृत्यो यदि तूष्णीकः[3] अनर्होऽहमत्र प्रसङ्गे वक्तुम् , वचनं मे प्राप्तकालं न भविष्यतीति वा [4]तूष्णीकामास्ते तर्हि किं मूकोऽसि यन्न वक्षीत्येवमवक्षिप्यते । अथ प्रवचनपटुरिति प्रसक्ते प्रवक्ति, वाचालोऽसि, [5]बाढमयन्त्रितं ते तुण्डमित्येवमभिलप्यते । यदि च स्वामिहितमवेक्षमाणोऽब्रुवाणोऽहं दोक्ष्यामीत्युत्प्रेक्षमाणोऽपृष्टोऽपि भाषते, वैधेय ! किमेवं प्रलपसि स्वं नियोगमवधत्स्व, मा स्म वोचोऽननुज्ञात इत्येवं परुषाक्षरमनुशिष्यते । यदि च सेव्यसेवायै साधीयस्यै तत्पार्श्वं न जहाति, तर्हि धृष्टोऽसि मा मामुपसृपः, अपध्वंसेत्येवं धिक्क्रियते । दूरे चेत्तिष्ठति स्वामिनो मेऽद्य कार्यं नेति, [6]लालाटिकोऽसि कार्यकालेऽपसर्पसि, नार्थो मे त्वयकेति याहि दिशो दशेत्येवमाक्रुश्यते । अथावज्ञामाक्रोशं दुर्नयं च मृष्यति न च विरुणद्धि, तदा कातरोऽसि, मनागपि मनस्विता ते नास्तीत्येवमभिशप्यते । यदि पुनरन्याय्यं समाचारं विषहते न च गर्हते, तदाऽनभिजातोऽस्यपसदोऽसीत्येवं न्यक्क्रियते । अत्र श्लोको भवति—

सुजीवं नित्यशस्तस्य यः परैरुपजीव्यते ।
राम तेन तु दुर्जीवं यः परानुपजीवति ।। इति ।

न केवलमनक्षरा आसेधजीविनो विविधां विमाननां सहन्ते साक्षरा आगमिनः [7]काष्ठाध्यापकाश्चापि भृतिमुपभुञ्जानाः । ये नाम पङ्क्तिपावनाः

---

१. श्वानमतिक्रान्ता । अतिगर्ह्या । २. अशक्ताः । ३. तूष्णींशीलः । ४. तूष्णीम् । अकच्प्रकरणे तूष्णीमः काम्प्रत्ययो वक्तव्यः । ५. भृशम् । ६. प्रभोर्भालदर्शी कार्याक्षमश्च । ७. अद्भुतोऽध्यापकः काष्ठाध्यापकः । काष्ठशब्दः क्रियाविशेषणम् । पूजनात्पूजितमनुदात्तम् , काष्ठादिभ्य इति वक्तव्यमित्यत्र प्रयोगो मानम् ।

प्रयतमानसाश्शास्त्रपारगाः पदवाक्यप्रमाणज्ञास्तेऽपि वृत्तिकर्शिता बुभुक्षितैर्व्याकरणं न भुज्यते पिपासितैः काव्यरसो न पीयत इति वित्तवतां निशाते[1] कृतवसतयोऽधःक्रियां लभन्ते । अखर्वगर्वा आत्मानमतिमानुषं मन्यमानास्त आचारं न पालयन्ति शिष्टेष्वशिष्टवद् व्यवहरन्ति । प्रत्युत्थेयेषु संभावयन्तीमेऽस्मान्प्रत्युत्तिष्ठन्तु, वन्दनीयेषु चामी नो वन्दन्तामिति । अर्चनीयानिमान्बहून्यवाच्यानि ब्रुवन्ति, सावज्ञं पश्यन्ति, दोषलवेऽपि भूयोऽभिक्रुध्यन्ति अनपराद्धानपि कृतापराधान्गणयन्ति । किं बहुना । अवसरेऽनवसरे वा सहेतुकमहेतुकं वा प्रच्छन्नं वा प्रकाशं वाऽनिन्द्यानिमान् निन्दन्ति प्रत्यक्षमपि च कुत्सयन्ति । मानधनाश्शास्त्रैकचिन्तारताश्चैते विनेयनिवहं[2] निगमागमेषु लोक्यासु[3] च कलास्वभिविनयन्तः संस्कारप्रकर्षेण चोन्नमयन्तः पराया अपचितेः[4] पदं सन्तोऽपि यदा प्राकृतवद् सद्वद्वा व्यवह्रियन्ते तदा वेदनां वाङ्मनसातीतां कामपि विन्दन्ते ।

येयं क्षुन्नाम सा न सुकरा शमयितुम् । इयं हि नित्यं जागर्ति वर्धते च, अस्याः कृते किं किं न व्यवस्यन्ति जन्तवः । एतदर्थमेवाभ्रंकषाग्रान् गिरीनतिलङ्घन्ते, वेगवाहिनीर्वाहिनीरवगाहन्ते, कल्लोललोलान्नक्रादिमहासत्त्वसमाकुलांस्तोयराशीनप्युत्तरन्ति, महाश्वापदाकीर्णान् कान्तारानप्यभीतवत्प्रविशन्ति । स्वं देशं विहाय स्वांश्चातिहाय पुत्रकलत्रादींश्चोपेक्ष्य सुहृदश्चाप्यनपेक्ष्य चिराय प्रव्रजन्ति विदूराणि देशान्तराणि । किं किं न कारयति नृत्यं वृत्तिर्मातुषेण ।

इदं चापि महद् विडम्बनान्तरम् । बुभुक्षया पिशाच्या बलवद् बाधितो नरो विजहाति वृत्तम् , अनिच्छन्नप्यपथे पदमर्पयत्यनार्यजुष्टं च जुषते । अकृत्यमिदमिति जानानोऽपि पराथं स्तेनयति, पश्यतो वाऽबलस्य कनकाभरणमामृशति[5] बालस्याप्यनाथस्य त्रिभववतो गेहे सन्धिं छिनत्ति, योषाया विश्वस्तायाः[6] अपि रिक्थमपहरति, विद्वांसमपि ध्वंसयति[7], वृद्धमपि वञ्चयते । नेह किमपि तादृशमात्मनो लघूकरणं यादृशीयं बुभुक्षा । इयं हि पातित्यजननी । उक्तं च—

---

१. आश्रये । २. छात्रवृन्दम् । ३. लोकहिताासु । ४. पूजायाः ।
५. आच्छिनत्ति । ६. विधवायाः । ७. छलयति ।

बुभुक्षितः किं न करोति पापं क्षीणा नरा निष्करुणा भवन्ति। इति।

इयं हि बुभुक्षा महामनसः संशितव्रतान्मुनिकुञ्जरानपि कदर्थयति विकरोति पातयति च, का कथेतरेषाम्। एतया दुर्वारया प्रणुन्नः कौशिको मुनिर्विश्वामित्रः श्वजाघनीं पेचे, उषस्तिचाक्रायणश्चेभ्य[1]स्योच्छिष्टान्कुल्माषांश्चखाद। अवग्रहकृते सस्यशोषे, आप्लवकृते वा जनपदसमुत्सादे, दुर्भिक्षे च भयङ्करे प्रवृत्ते प्राणात्यये चोपस्थिते यदाचरन्ति यथा विचेष्टन्ते क्षुधोन्मादं गताः प्रजास्तत्केन पार्यते यथातथं वर्णयितुम्। अत्र समये [2]विवेकविश्रान्ता लोकाः प्राणपरीप्सयाऽङ्गादङ्गात्संभूतं हृदयादधिजातं स्नेहस्य प्रकर्षपर्यन्तं स्वमपत्यजातमपि प्रास्यन्ति, मूल्येन च परिददति। यत्किमप्यशनमशनायाः प्रशमनायालमिति मत्वा परिगृह्णन्ति, शाकं वा शष्पं वा पल्लवं वाऽवचित्यावचित्य सलवणं पचन्ति स्वादुंकारं चाश्नन्ति। अहो वैवश्यम्। अहो प्राणप्रियता। यदा कश्चिदृद्धो जन ओदनं भुक्त्वा सोच्छिष्टं पलाशं प्रक्षिपति रथ्यायां श्वान एतान्निहन्तु शकुनयो वोच्छिन्दन्त्विति तदा क्षुधावसीदन्तः पुमांसः स्त्रियो बाला वृद्धा वाऽहम्पूर्विकया तत्प्रति चिल्लावद् धावन्ति परस्परेण च संघट्टन्ते [3]सम्प्रहरन्ते च अहो अनिष्टकारिता वामाया नियतेरिव बुभुक्षायाः। इयं ह्यभिविनीतमपि प्राकृततां नयति। तस्माद् यदा कश्चित्कुलीनः सुखोचितो जन उदहार[4] इति वा काष्ठाहर इति वा घासविक्राय इति वा वृत्तिमुपजीवन्सख्या पूर्वेण पृच्छ्यते किमिदमिति कुतस्त्यमेतदिति तदा दीर्घमुष्णं च निःश्वस्य प्रत्याह—इदं हि सर्वं जठरपिठरी कारयति। तस्मात्साधूक्तं हरिणा—जठरपिठरी दुष्पूरेयं करोति विडम्बनमिति॥

१. इभ्यः=महावत इति भाषायाम्। २. क्षीणविवेकाः। ३. मिथो विगृह्णन्ति। ४. उदकं हरतीति।

## ( २७ ) सुखं हि दुःखान्यनुभूय शोभते घनान्धकारेष्विव दीपदर्शनम्

इह विपरिणतिमति जगति कदाचित्सुखमनुभवति लोकः कदाचिद् दुःखम् । सुखं च मानसः परितोषो हृदयाह्लादो वा दुःखं च तद्विपर्यय इति प्रपञ्चं नार्हति । इह च वैषयिकं सुखमेवाभिप्रेतम् । ये हि पुत्रादयोऽभिमता अर्थाः शब्दादयो वा प्रीतिविषयास्तैः समवाये सुखं व्यवाये च दुःखमिति स्थितिः । आगमापायिनोऽनित्या ह्यर्थाः, तन्निबन्धने सुखदुःखे अप्यनित्ये । अयमेवार्थः कविकुलकैरवसुधाकरेण कालिदासेनेत्थमुक्तः—कस्यात्यन्तं सुखमुपनतं दुःखमेकान्ततो वा । इति ।

एवं सुखेन दुःखेन वाऽनैकान्तिके समन्वये पूर्वं सुखोपनिपातो न तथा स्वदते यथा दुःखादुत्तर इत्यनुभूतिः प्राणभृताम् । अयमेव च प्रकृतो विषयः ।

प्रकृतिरेषा भूतानां यदुत्पतनं प्रशंसन्ति निपतनं च निन्दन्ति । दुःखादुत्तरा सुखोपनतिरुन्नतिर्भवति, सुखादुत्तरा तु दुःखोपनतिरवनतिरिति लौकिकं दर्शनम् । अनुभूतदुःखो जनो यदा सुखमश्नुते, व्यृद्धो वा समृध्यति व्याधितो वोल्लाघते[1], बद्धो वा निर्मुच्यते तदाऽयमुत्प्रेक्षते भाग्यानि ममोदितानि, फलितानि मे सुचरितानि, समृद्धानि च गुरुजनाशीर्वचनानीति । स एव साधीयः [2]संवेत्ति सम्प्रत्युपनतं सुखम् । स एवास्य स्वरूपं यथार्थमुपलभते मात्रां च [3]वेदयते, सुदुर्लभतां चास्य जानीते स्थेयस्तां चापादयितुमीहते । पूर्वमापन्नः कृच्छ्रो दुर्गतो जनः सम्प्रति सम्पन्नो विपुलाजीवो विजानात्यर्थो बह्वर्थो दारिद्र्यं चानर्थ इति । यदनेनान्यस्य श्रुतं शास्त्रतो वाऽधिगतं तदयमिदानीं प्रत्यक्षमुपलभते । सोऽनेन दशाप्रकर्षेण दीप्तिमत्तरो भवति यथाऽसूचिसंचारे तमसि दीपप्रभाऽभ्यधिका भवति । भूयश्चाय मान्यते लोके ।

यस्तु ऋद्धिमत्यन्ववाये संभूतः सर्वस्याभ्यर्चितो महता परिवारेण परिवृतः परिच्छदेनानल्पेनालङ्कृतः, [4]परार्घ्येषु [5]पक्ष्मलसंस्पर्शेषु शयनी-

---

१. लाघृ सामर्थ्ये । गदाद्विरतो भवतीत्यर्थः । २. सकर्मकत्वात्परस्मैपदम् । ३. विद चेतनाख्यानिवासेषु चुरादिः । ४. महामूल्येषु । ५. मृदुलसंस्पर्शेषु ।

येषु शयितः कामानुगानां नानारसानामशनानां [1]सुहितोऽभूत्स साम्प्रतं व्यृद्धोऽपरिच्छदः पृथ्वीशय्यो विरलाशनः कथं कथमपि लोकयात्रां निर्वर्तयति, प्राक्तनीं सुखसम्पत्तिं [2]चाध्यायति, अविषह्यवेदनं च दुःखमनुभवतीति भवति दयनीयः सर्वस्य लोकस्य ।

'क्लेशः फलेन हि पुनर्नवतां विधत्ते' इति यदुक्तं तदवितथम् । अनारतं श्राम्यतो जनस्य क्लाम्यति कायः श्लथश्च भवति । सति फलप्रसवे पुनः प्रत्यग्रतां याति यथापुरं च स्वस्थो दृढश्च भवति कमनीयश्च । परं या तत्रास्य चेतोनिर्वृतिर्जायते सा शारीरं परिखेदं सुदूरमतिशेते ।

प्रयासपूर्विकायां फलसम्पत्तौ पुंसः प्रशंसा भवति, प्रयासविधुरायां तु निन्देति ध्रौव्यं गतो लोकसमाचारः । तेनायं [3]नैशिको ब्रह्मचारी कायक्लेशान् विविधान्विषह्य निगमागमानध्यगीष्ट, तां तां च परीष्टिमुदतारीदिति चाभिनन्द्यते, लोकेन, नन्दति चास्य चेतश्चिराय । यो ह्यनायासं परीक्षामुत्तरति, तमभिशङ्कन्ते, तं निन्दन्ति । एवं यस्यातर्कितमुपनमन्त्यर्था अन्तरेणैवार्जनायासं तमतिशङ्कन्ते पाटच्चरोऽयं स्यात्कौसृतिको[4] वा कितवो वेति ।

अयमपरो गुणः पूर्वस्य दुःखानुभवस्य । प्रायश आदित एव सुखसंवित्तिभाजो विभूतिमन्तः परवेदनां न वेदयन्ते, कष्टश्रितं च नाभ्युपपद्यन्ते, वन्दनीयेषु विशेषज्ञेष्वपि विनीतवन्न व्यवहरन्तेऽन्यत्राप्याचारं न प्रतिपद्यन्ते । ये पुनः पूर्वं दुःखमनुभूतवन्तः सम्प्रति श्रिया सम्पद्य[5] सुखेन युज्यन्ते, ते दीनेष्वार्तेषु विविधं कदर्थितेषु सदया भवन्ति, नवनीतमिव च वह्निसंस्पर्शे दुःखसंनिकर्षे सहसा द्रवन्ति । एते हि पूर्वां विपदमविस्मरन्तो नात्मना विस्मयन्ते न चानार्यमार्येषु व्यवहरन्ते । प्राक्तनी दुःखसंवित्तिरौद्धत्यं वारयति प्रह्वत्वं चोपनमयतीति कस्य न न विदितं विदुरस्य[6] । तस्माद्बहुगुणः सुखोत्तरः पूर्वदुःखानुभवः प्रशस्यो रुच्यश्च । अन्यत्राप्युक्तम्—यदेवोपनतं दुःखात्सुखं तद्रसवत्तरम् । इति । अतः साधूक्तं मृच्छकटिककारेण 'सुखं हि दुःखानी'त्यादीति ।

---

१. तृप्तः । २. उत्कण्ठापूर्वकं स्मरति । ३. निशाऽध्ययनं सोढमस्य । ४. जाल्मः । ५. संगत्य । ६. विदुषः ।

## ( २८ ) चक्रवत्परिवर्तन्ते दुःखानि च सुखानि च

इह सर्वं परिवर्ति । नात्रार्था एकेन रूपेणावतिष्ठन्ते । यद्यपि स्थास्नु चरिष्णु चेत्यर्थद्वयमिति लौकिको वादः, परमार्थतस्तु सर्वं चरिष्णवेवेति सूक्ष्मदृशः । अत एवास्य लोकस्य जगदिति समाख्या संगच्छते । अस्तीह भूसंनिवेशपरिवर्तः स्रोतसः स्थाने पुलिनं पुलिनस्य च स्रोत इत्यादिः । अस्ति च कालपरिवर्त ऋतुपर्ययादिः । अस्ति च शरीरावस्थापरिवर्तो यौवनादिः । अस्ति च दशापरिवर्तः सम्पन्नस्य विपन्नत्वं सुखिनो वा दुःखित्वं तद्विपर्ययो वेत्यादिः । अयं चान्त्यः प्रकृतो विषयः ।

इह जगति सर्वस्य सुखदुःखे अनैकान्तिके इति भूतार्थोऽनपलाप्यः । तत्र सर्गनिसर्गो वा नियतिर्वा यदृच्छा वा निबन्धनम् । आगमापायिनोऽर्था इत्युपश्लेषे सुखमुपजनयन्ति विश्लेषे च दुःखम् । यस्य खलु दाय इति वा [1]सुदाय इति वा पौरुषप्रभाव इति वा देवानुग्रह इति वार्थाः पुष्कलाः समुपनमन्ति सोऽर्थवान्सुखमश्नुते । इमे चार्था उपभोगेनेच्छयाऽनिच्छया वा वितरणेन चौरादिकृतेन हरणेन वह्न्युत्पातेनाप्लावेन दुर्भिक्षेण भुवः कम्पेन वाऽद्य वाऽब्दशते वाऽवश्यं क्षयमेष्यन्तीति सुखविपरिणामोऽपरिहार्यः । योऽद्य स्ववान्सोऽपरेद्युस्तस्करैरपहृतस्वो निःस्वो भवति दुःखं चानुभवति । यस्य गगनोल्लेखिशिखराणि हर्म्याण्यद्य नगरशेखरायन्ते सुखवासाय सुखशयनाय च कल्पन्ते, तस्य तान्येवान्येद्युर्ज्वालासंभारभैरवेणोषर्बुधेन भस्मावशेषतां नीतानि सुखलेशमपि नावशेषयन्ति । प्रमादोपि सुमेधसापि पुरुषेण दुष्परिहरः । तेन सम्पद्यन्तेऽस्य कर्माणि विपद्यन्ते च । सम्पद्यमानानि सुखमुपनमयन्ति विपद्यमानानि च दुःखमिति सुखदुःखपर्यायः[2] समवस्थितो भवति । एवं संयोगा विप्रयोगान्ता इति पुत्रकलत्रादिभिर्यो वर्तमानः संयोगो निर्वृतिहेतुः स गत्वर इति गच्छन् दुःखयत्येव विप्रयुक्तं जनम् ।

कारुणिकस्य भगवतः परमेश्वरस्य रमणीयेऽस्मिन्सर्गे मनुष्य एकान्ततो दुःखी स्यादिति नोपपद्यते । नैतत्तस्य माहात्म्यसदृशं करुणानुरूपं

1. यौतकम् ( दहेज ) । 2. परिपाटी, क्रमः ।

वा स्यात् । किं चैवं सति जगज्जीर्णारण्यमिव दारुणं स्यान्न चात्र किमपि रम्यं स्यादिति प्रवृत्त्युच्छेद एव स्यान्निर्वेदश्चानन्तः स्यादित्यनुगृह्णात्येव भगवान् विपन्नान् निस्तारयति च व्यापदः । तथा च निगमो भवति—'यो मृडयाति चक्रुषे चिदागः' इति । किं च मनुजस्य शबलानि कर्माणि भवन्ति शुक्लानि कृष्णानि च । यदा कृष्णानि भोगेन क्षीयन्ते तदा पुराकृतानि शुक्लानि फलं प्रसोतुमारभन्ते, दशापरिवर्तश्च कल्याणो जायते ! अत्रार्थेऽतिशयोक्त्याऽऽभणन्ति पञ्चालाः—द्वादशभ्य' समाभ्यः परेण त्वन्नकरराशिमप्युद्धरतीश्वर इति आदिकविरप्याह—

> कल्याणी बात गाथेयं लौकिकी प्रतिभाति मे ।
> एति जीवन्तमानन्दो नरं वर्षशतादपि[1] ॥ इति ।

इह सानुबन्धा अपि विपदः सम्पदश्च दृष्टाः । यदुक्तं श्रीबाणभट्टेन—'विपद् विपदमनुबध्नाति सम्पत्सम्पदम्' इति । यथोक्तं भवभूतिना—'सानुषङ्गाणि कल्याणानी'ति । तत्राप्ययमेवाभिसन्धिरुभयस्य कवेः—'सङ्घचारिणोऽनर्था' इति कियन्तंचित्कालं कस्यचिद् बहुलीभवन्त्यापदः कस्यचिच्च चिरतरमुपतिष्ठन्ते सम्पदोऽनेका इति । परमुभयेऽप्यस्थायिन्य इत्यव्यभिचारी कृतान्तः ।

सन्ति च बहूनि निदर्शनानि प्रकृतार्थोपोद्बलकानि, तेषां कानिचिदिहोपन्यस्यन्ते । सुखं ललितस्य राजप्रासादेषूषितस्य सर्वस्य सम्भावितस्य रामस्य दैवे पराचि वनप्रवासः, पाण्डुपुत्राणां विविधं कदर्थितानां वनाद्वनं पर्यटितानां चिरस्य राज्यलक्ष्मीपरिग्रहः, कौशाम्बीराजस्योदयनस्य सहधर्मचारिण्या वासवदत्ताया अवरुद्धायाः[2] परगृहवासो न्यग्भावश्च, तस्या एव कालान्तरे यौगन्धरायणादिमन्त्रितमहिम्ना व्यसननिर्मुक्तेन भर्त्रा सम्प्रयोगः सुखाधिगमश्च, आश्रमललामभूतायाः कण्वदुहितुः शकुन्तलाया दुर्वाससः शापात् पत्या निराकरणं तज्जन्यं न्यक्करणं च स्मृतिलाभे पुनरङ्गीकारो बहुमानश्चेत्यादयो व्यतिकराः प्रकृतार्थं पर्याप्तं समर्थयन्ते ।

किञ्चाचिरातीताः पञ्चालवृत्तान्ता अपि प्रकृतार्थं निकामं पुष्णन्ति ।

---

१. सुन्दरकाण्डे सीताया उक्तिरियम् । २. प्रच्छन्नस्वरूपायाः ।

यदाऽस्य देशस्य पूर्व पञ्चाला अपरे पञ्चाला इति विभाजनमभूत्तदार्या अनार्याश्च तथा व्यत्यघ्नन्[1], यथा पुराणोक्तो देवासुरसंग्रामः पुनः प्रवृत्त इवाभूत्। अतिराक्षसमत्र वैशसमभूत्। [2]अकृतव्यलीकाननु[3]शयानुविद्धान् स्निग्धाना[4]रातीयानपि हिन्दून् नृशंसा मुहम्मदानुगाः परमतमसहमानाः स्वमतेऽभिनिवेशिनो वेतालोपहता इवादयं न्यवर्हयन्, मुग्धान् स्तनन्धयान्दशमीस्थाञ्जरठानपि न पर्यवर्जयन्, विदुषोऽपि व्यमानयन्, स्त्रियोऽप्यदूषयन्, सतोऽप्यकदर्थयन्। एते जाल्माः प्रासादप्रायाणि सौधानि समदीपयन् स्वापतेयानि[5] च महाधनान्यपाहरन्। अथात्यन्तमर्थविधुरान्दैवमात्रशरणांश्च विधायार्यान्पूर्वपञ्चालान्बलादगमयन्। एवं गर्हितमाचरिता दैन्यान्निधनमेव वरमिति पश्यन्तः शिशुकन्दनेन सतीदूषणेन च प्रकुपिता हिन्दवोऽपि केचित्तेषु म्लेच्छहतकेषु तथा प्राहरन्यथा सहस्रशस्तान्सहसा यमक्षयाय[6] व्यसजयन् हतावशिष्टान्क्षतविक्षतांश्च कृत्वाऽवशानपरपञ्चालान्प्रास्थापयन्। अहो अकलनीयः कालमहिमा। य आर्याः स्वेन पुरुषकारेण बुद्धिप्रकर्षेण च परां समृद्धिमापन्, यथेष्टं च सुखमन्वभूवन्, संभृतसुखसंभारेषु विशालेष्वगारेषु न्यवसन्, नानारसानि भोज्यभक्ष्यपेयचूष्यलेह्यानि चाश्नन्, येषां यावदिह मानुष्यकोपपाद्यं सर्वं तद्धस्तगतमासीत्त इदानीं यायावरा इवानिकेतना अकिञ्चना दैवमात्रशरणाः कथंकथमपि कालं क्षपयन्ति 'नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेणे'ति च प्रमाणयन्ति ॥

---

१. परस्परमघ्नन्। २. व्यलीकमपराधः। ३. अनुशयश्चिरवैरम्। ४. प्रतिवेशिनः। ५. धनानि। ६. यमालयाय।

## ( २९ ) मैत्री

का नाम मैत्रीति कविनिबद्धेन चिरन्तनेनोदन्तेन तावद् व्याकुर्मः। यदा चन्द्रकेतुसैन्यप्रमाथेन पराक्रान्तो[१] दर्पसौजन्ययोर्भूमिर्लवस्तेन चन्द्रकेतुनेदम्प्रथमतया समापद्यते[२] तदोभावपि मिथोऽनभिज्ञौ विकर्तनकुलकुमारौ सस्नेहानुरागमन्योन्यं निर्वर्णयतः। किमेषा वशक्रिया यदृच्छासंवादसंभूताऽऽहोस्विज्जन्मान्तरनिबद्धपरिचितिकृतोताहो विस्मृतस्वजनदर्शनजनिता गुणग्रामाभिरामतानिर्मिता वेति विविधमभ्यूहमानावपि निर्णयमननुधाव्यार्यसुमन्त्रं शरणमुपयातः कारणं च परिपृच्छतः। तत्र परिप्रश्ने दृष्टशास्त्रार्थोऽनुभूतलोकवृत्तान्तो जरठः सुमन्त्र एवं वस्तुस्वाभाव्यं निरूपयति—'भूयसा जीवधर्म एष यद्रसमयी कस्यचित्क्वचित्प्रीतिः, यत्र लौकिकानां व्याहारस्तारामैत्रकं चक्षूराग' इति तमप्रतिसंख्येयमनिबन्धनं प्रेमाणमामनन्ति। यदा चाश्वमेधप्रसङ्गेन श्रीरामो भगवतो वाल्मीकेस्तपोवनस्याभ्यर्णा[३] भुवमापद्यते तदाऽदृष्टचरमिममत्र वीरपोतं लवं प्रेक्षमाण एवाह—"न जाने कुतो निमित्ताद् दृष्टमात्र एष कस्यापि राजवंशस्य प्ररोहो मे दुःखं विरमयत्युपस्नेहयति च ममान्तरात्मानम्। अथवा स्नेहश्च निमित्तसव्यपेक्ष इति विप्रतिषिद्धमेतत्।

> व्यतिषजति पदार्थानान्तरः कोऽपि हेतु-
> र्न खलु बहिरुपाधीन्प्रीतयः संश्रयन्ते।
> विकसति हि पतङ्गस्योदये पुण्डरीकं
> द्रवति च हिमरश्मावुद्गते चन्द्रकान्तः॥" इति।

एषोऽत्र निर्गलितोऽर्थः सर्वस्यास्य वाक्प्रपञ्चस्य—अन्तःस्थादेव निमित्तादपरिच्छेद्यान्न तु बाह्यःस्थात्कस्यचित् क्वचित्स्नेहो भवत्यकृत्रिमः, सा मैत्री। यस्तत्र स्वार्थानुसन्धित्सया कृतवेदितयापि वा पुरुषस्य पुरुषान्तरे भावबन्धो हृदयासङ्गो वा भवति स मैत्रकाभासो न तु मैत्री। इदं तर्हि व्यवतिष्ठते न हि मैत्री भाव्यते मित्रं वा क्रियते, उभयं सांसिद्धिकमिति। एवंलक्षणः प्रेमा न जातु सर्वस्य सर्वत्र भवति, कस्यचित्तु क्वचिदेव।

---

१. शूरायितः। २. संगच्छते। ३. संनिहिताम्।

जीवो हि भूयसे स्वस्य संवेदाय[1] सुहृत्सान्निध्यं स्वेनात्मनाऽभिव्यक्ततराय संवादाय च विविक्तं कामयते । एष निसर्गो भूतलोकस्य ययोर्द्वयोः पुरुषयोः स्त्रीपुरुषयोर्वा प्रकृतिनियतं किमपि साधर्म्यमन्योन्यमात्रजं कुमस्ति तयोर्विधिना विधीयते सङ्गमो न तु तत्तत्कृतेनाभियोगेन । इदं हि दिव्यविधानयन्त्रं न पुरुषतन्त्रम् । यथा भुवि [2]सहभूराकृष्टिशक्तिरनुत्पाद्याऽस्ति, यथा वाऽयस्कान्ते लोहाकर्षणसामर्थ्यमस्ति तथा तयोः सदृशात्मनोरिति भवति संनिकर्षो विप्रकृष्टयोरपि । एवं सति नेदं विस्मयनीयं यन्मैत्री तथा कल्याणी निरवद्या च भवति यथाऽभिशङ्किताऽविश्वास्या च बहुधा भवति ।

कश्चिद्विपश्चिदाह यस्त्वां निखिलेन जानन्नपि प्रतिनन्दति स सुहृदिति । अपर आह—मित्रं नाम परमाशास्यं हृदयस्येति[3] । सत्यं यो यमुपशृणोति यश्च यस्य स्वरूपं बुध्यते स तस्य किमपि द्रव्यं भवति किञ्चित्तस्योपकुर्यान्न वोपकुर्यात् । उपकरणं तु मित्रस्वरूपे नाङ्गं भवति । मित्रं नाम पुरुषस्य द्वितीयं हृदयं भवति यस्मान्न किमपि गोप्यमस्ति । प्रगल्भवागपि विचारवानपि जनो न प्रगल्भते भ्रातृजनाय भ्रातृव्याय कलत्राय वा स्वाभिप्रेतं निर्वक्तुं तूष्णीम्भावं[4] चास्ते । मित्राय पुनर्मनोगतं विवृणोति, तत्सदेशे[5] वर्तमान आत्मन एवाहं सदेशे वर्त इत्यनुभवति, तेन तस्य पुरतः सर्वं संवरणमपाकरोति, सर्वमुपचारं परास्यति, सर्वं दाक्षिण्यमपहस्तयति । किं बहुना ? तांस्तान्संकल्पान्यथातथमुदीरयति । प्रायेण महान्तो विभूतिमन्त उच्चैःपदमधितिष्ठन्त एव कदाचिदृजव उत्तानाशयाः[6] स्फुटवक्तारो वा भवन्ति लोकवादभयं शासकभयं वा तेषां नास्तीति । सर्वो लोक एककः सन् यथार्थं वदति, द्वितीयाद्धि भयं भवतीति द्वितीयं पश्यन्नेव विसंवदति, मिथ्याचारतां याति, भावांश्च हृदि स्थितान्शतधाऽऽवृणोति । यदा पुनर्मित्रं संगच्छति[7] तदा तस्मा अभीतवद् हृदयं व्याख्याति । नैष कामो मित्रस्य स स्निग्धो मयि न्यग्भावेनान्वग्भावेन[8] वा वर्ततां स्वाल-

---

१. स्वरूपस्य सम्यगुपलब्धये । २. सहजा । ३. परमं स्पृहणीयम् । यस्मात्परं तस्य काम्यं नास्ति । ४. णमुल्प्रत्ययः । ५. तत्समीपे । ६. स्फुटाभिप्रायाः । ७. सकर्मकत्वात्परस्मैपदम् । ८. आनुकूल्येन ।

ताक्षरं चाटूक्तिपुरःसरं वा भाषतां स्वं[1] वा संगृणुतामिति। मित्रं किल रूपान्तरसंनिविष्टः सर्वविशेषणविशिष्टः सर्ववैचित्र्यशर्पालितः स्व एव भवति पुरुषस्य। तद्धि विधातुः सृष्टिरत्नमिति समाख्यायते। तत्र चित्रीयमाणः कविराह—

'केन रत्नमिदं सृष्टं मित्रमित्यक्षरद्वयम्।' इति।

इदं चापरं विलोक्यते मित्रे। परा हि प्रीतिस्तस्मिन्नवर्तते। उक्तं च—

'मित्रं प्रीतिरसायनं नयनयोरानन्दनं चेतसः।' इति।

इहानेकान्यन्योन्यसंश्लेषणानि भवन्ति नृणाम्। क्वचिदेकान्वयतया संश्लिष्टाः स्मः, क्वचिदीर्ष्यया, क्वचित्प्रतीकारमनीषया, क्वचिदपद्वेषेण, क्वचिद्दर्पेण, क्वचित्कामेनेति विविधं प्रतिबद्धाः स्मः। परं प्रेमबन्धनं सर्वमहद् विलक्षणं च। तथा चाहुः पूर्वे विद्वांसः—

'बन्धनानि खलु सन्ति बहूनि प्रेमरज्जुकृतबन्धनमन्यत्।
दारुभेदनिपुणोपि षडङ्घ्रिर्निष्क्रियो भवति पङ्कजकोषे॥' इति।

अयं चोत्कर्षः कोपि मनुजस्य दैवानुग्रहो वा कश्चिद्यत्तेन परिशुद्धस्य स्वस्य प्रणयस्य भाजनमुपलभ्यते। अन्यादृश्येव शक्तिः प्रणयस्य। यथा यथा वर्धते प्रणयः प्रणयिषु तथा तथा प्रणयिक्रियायां वर्धते धीरुत्साहश्च। एवं ह्यनुभूयते कश्चित्कमपि विवक्षितमर्थं लेखेन पत्रे न्यसितुमिच्छति, चिराय च तस्याभिव्यञ्जिकां कोमलकान्तपदावलिं प्रतीक्षते न च सा सन्निधत्ते। परं यदि मित्राय सभाजनाक्षराणि पातयितव्यानि, भावान्तरं हृद्गतं वा विवरणीयं तदा प्रेमरसाभिषिक्तास्तत्तदर्थसमर्पिका अनवद्यहृद्या वाचः सहसा स्रोतःसहस्रैरिव संप्लवन्ते। अपूर्वं च प्रज्ञोन्मेषं करोति प्रणयप्राग्भारः। अथवा बुद्ध्यनपेक्षः सुहृत्कर्मसु सारथ्यं करोति पुरुषस्य।

इदं चात्र हृदि करणीयं निष्कारणता स्नेहस्य मैत्रीस्वरूपस्य सम्पादिका सकारणता च तद्दूषिकेति। अत एव कश्चिद् विपश्चिदपश्चिम आह—'अहं मित्रेभ्यो न तत् प्रत्येषिषामि यदेषामास्ति किन्तर्हि यदिमानि सन्ति। तच्च बुद्धिपूर्वं न जातु सम्प्रदेयं भवति, स्वत एव तु मां प्रति संक्रामति रश्मिव्यूह इव रश्मिमालिन' इति।

---

[1] आत्मानम्।

निरूपिता निर्निमित्ता परा मैत्री। अपरा सनिमित्ता सम्प्रति निरूप्यते। तल्लक्षणं चोक्तम्—'स सुहृद् व्यसने यः स्यात्' इति। 'आपद्गतं न जहाति ददाति काले' इति च। अनेकं च कारणं मित्रतायामुत्प्रेक्षन्ते सुधियः, यदाहुः—

'उपकाराच्च लोकानां निमित्तान्मृगपक्षिणाम्।
भयाल्लोभाच्च मूर्खाणां मैत्री स्याद्दर्शनात्सताम्॥' इति।

मित्रं नाम सम्पदि विपदि च सहायं भवति 'अमित्रस्य दिशः शून्या' इति मित्रापेक्षी लोकः। अयं तावत्प्रथमो लाभो मैत्र्यस्य—हर्षशोकक्षोभभयाशंसाशङ्कादिभरं बाधकरं मित्रे समर्प्य निर्वृतिं कामपि समश्नुते देहभृत-श्चेतोऽपरत्र संक्रमितभारं च प्रकामं लाघवमुपैति। न केवलं प्राकृतो जनो महाजनोपि, न केवलं प्रद्राणकोऽकिञ्चन एव कश्चिद् भुवः परिवृढोपि मित्रं वा मित्राणि वा निकामं कामयते यत्र स्विकाश्चिन्ताः संक्रमयेत्, यत्र वा स्वरहस्यानि न्यस्येत्। एतदर्थं पार्श्वपरिचारकाणामन्यतममन्यतमान्वा सजुषः सहायान्वा करोति, आत्मना समकक्षतां च गमयति। य एते राजवल्लभा इति समाख्यां भजन्ति।

मित्रे भावसङ्क्रान्तेर्विरुद्धाभासं फलद्वयं दृश्यते—इयं हि हर्षं द्विगुणयति शोकं च [1]साम्यपकर्षति। तथा हि नेहेदृशः कश्चिदस्ति यो मित्राय हर्षं संविभजते न च भूयांसं हर्षं समश्नुते, यो वा शोकं संविभजते कनीयांसमेव तं नोपभुङ्क्ते।

मित्रानुशासनमपि महते फलाय कल्पते। आत्मैव पुरुषस्य विकत्थनतमः। तथा च सौप्तिकपर्वणि कृपं प्रत्यश्वत्थाम्नो वचनम्—

'सर्वो हि मन्यते लोक आत्मानं बुद्धिमत्तरम्।
सर्वस्यात्मा बहुमतः सर्वोत्मानं प्रशंसति॥' इति।

इमां च विकत्थनतां पर्यनुयोगापरतन्त्रस्य मित्रस्यानुशिष्टिरेव चिकित्सितुमर्हति नेतरत् किञ्चित्। अवितथा सुहृत्तर्जना नाम मनःस्वास्थ्याय सम्यग्दर्शनोपपत्तये वा हिततमा भवति। यद्युच्येत रह

---

1. अर्धम्। इदं क्रियाविशेषणम्।

आत्मस्वरूपानुसन्धानेनाप्येतत्सुसाधमिति नार्थोऽनयानुशिष्टयेति, तन्न। इदमनुसन्धानं कदाचिदतीव खेदकरं मर्मस्पृक् च भवतीति न स्पृहा-विषयो भवति। नीतिशास्त्राधीतिरपि न बहुगुणाऽस्ति, रोचिका साधिका वा न भवति। परत्र दोषदर्शनेन समाधित्साऽपि कदाचिन्नार्थवती भवति। तस्मान्मित्रतर्जनैव सौहार्दप्रयुक्ताऽभीष्टसाधिका भवतीति व्यवस्थितम्। उक्तं च—'पापान्निवारयति योजयते हिताय।' इति।

विधान्तरेणापि साहाय्यं विदधाति मित्रम्। सन्ति खलु बहवोऽर्था यानसहायो देवताद्वितीयः[1] कश्चिन्नार्हत्यनुष्ठातुं विस्रब्धं वा वक्तुम्। औचित्यं वा मन्दाक्षं[2] वा सहजं वारयति। तद्यथा विवशो न पारयति स्वगुणानाविष्कर्तुं किमुताभिष्टोतुम्। कदाचित्कश्चित्परं याचमानो ह्रणीयते[3], मित्रं तु तमर्थमर्थयमानो न शङ्कतेऽपि तु शोभते। किं च नानासम्बन्धो हि पूरुषः। स कस्यचित्पिता, कस्यचिद् भ्राता, कस्याश्चिद्भर्ता, कस्यचिद् द्वेष्टेत्यपरिच्छेदोऽस्य सम्बन्धानाम्। स पुत्रं पितृवदेवाभिवदितुमर्हति, भार्यां भर्तृवदेव, द्विष्टं च द्वेष्टृवदेवाभिसम्बन्धविशेषसमाश्रयेणैव, न तु तत्तत्सम्बन्धव्युदासेन। मित्रं पुनस्तदीयं विवक्षितं तत्तदानुगुण्येन सम्बन्धविशेषानपेक्षं समं वा विषमं वा निर्वक्ति।

इदं चात्र मैत्र्येऽधिकमवधातव्यम्—मित्रे हि स्वेन स्वेन भावेनेतरेतरमुपरज्यतः, तस्मादेकस्यैवेतरेणोपस्कारस्य नास्त्यवकाशः। एकत्र च मैत्र्या नियामो[4]ऽपरत्र तदभावो नैषणीयः, यतः परस्य दोषान्यथाञ्जसोपादत्ते नरो न तथा गुणानिति, यो नाम परमात्मानं मित्रं कुर्यात्तेन तद्रहस्यं वा सेवनीयं प्राणिमात्रं वा मित्रं करणीयमिति श्रीगान्धी मनुते।



१. एककः। २. लज्जा। ३. लज्जते। ४. पाक्षिके णिचि रूपम्।

## ( ३० ) समाचारपत्रम्

समाचारपत्रं ह्यद्यत्वे प्रभविष्णुतमं मतम्। इदं हि मनुष्यवर्गस्य
प्रगतेः, परमार्थाधिगतेर्दुःखापकृष्टेः सुखप्रकृष्टेरधिकारप्रत्यापत्तेरपकारप्र-
तिकृतेश्च साधकतममभ्युपगतम्। इदं च तथोपजीव्यतां यातं लोकस्य, यथा-
न्नोदकम्। सत्यं सन्त्यत्र लोका ये प्रातराशं परिहरेयुर्नाम न तु प्रातर्ल-
भ्यस्य समाचारपत्रस्याध्ययनम्। तथा चाङ्गलदेशे प्रथते प्रवादः—कश्चि-
त्प्रेष्यः स्वामिनं प्रत्यहं प्रातरोषध्या[2] फाण्टयोपाचरत्समाचारपत्रेण च।
स चैकदा समाचारपत्रं नोपानयत्तदाऽनुयुक्तं समुत्सुकेन स्वामिना—नव-
नीतोपलिप्तं रोटिकाशकलं कुतो नाहृतमिति।

दिशः प्रदिशश्च यावद्भुवनवृत्तप्रापणं प्रथमः समाचारपत्रोपयोगः।
सन्ति भूवलये यत्र तत्र 'रायटरा'द्यधीशाः सन्देशहराः संसदो वा त्रिगुता
रेडियोयन्त्रेण च कलाभिर्विकलाभिश्च लोकवार्ताः समाचारपत्राणि
प्रापयन्ति। इमाश्च संसदस्तथा दक्षा जागरूकाश्च भवन्ति यथा विश्व-
स्मिन्नस्मिन् न जातु किञ्चिद् गुर्वर्थं तज्जायते यन्न यथातथं सद्यः समर्प-
यन्ति समाचारपत्रेषु। आसीत्स समयो यत्रैकत्र देशे वृत्तानां व्यतिकराणां
देशान्तरे सप्ताहैः कैश्चिदवाप्तिर्नाभूत्। नेल्सनकृतस्य नीलनदविजयस्यो-
दन्त इङ्गलैण्डे सप्ताहद्वितयेनाधिगतोऽभूत्। अद्यत्वे तु लन्दनान्मुम्बां
सङ्क्रामन्ती प्रवृत्तिः[3] कलात्रयीमेव व्याप्नोति। महात्मनः श्रीगान्धिनो
विहिंसनवृत्तान्तः कलाभिः पञ्चदशभिरेव सकलं विष्टपं व्यश्नुत।
अहर्मुख उज्जिहाना एव वयं यदा समाचारपत्रमालोकयामस्तदाऽमेरि-
कायामफ्रीकायामाङ्गलदेशे वा कस्को वेद्यो व्यतिकरोऽतिक्रान्तायां नि-
शायां निशीथे वाऽभूत्तमनायासमनवयवं[4] च विद्मः। परिवर्त्यं लोक
इतीदानीं व्यक्ततरं भाति। तत्तद्देशवास्तव्या ज्ञानविज्ञानयोः सततं
क्रमन्ते, नूत्ननूत्नानर्थानुपजानन्ति, नवनवा आभ्युदयिकीः कर्तव्यपद्ध-
तीरायोजयन्ति, प्रत्यग्रां दोषलेशैरस्पृष्टां विनयवर्तनीं[5] वर्तयन्तीति देशा-

---

१. प्रत्यापत्तिः = प्रतिलब्धिः। २. 'चाय' इत्याख्यया। ३. वार्ता। ४. कृत्स्नम्।
५. शिक्षापद्धतिम्।

न्तरस्थास्तत्तत्समुत्सकं विविदिषन्ति । समाचारपत्राण्येवैतां विविदिषां शमयन्ति । यथा यथाऽयं लोकः समाचारपत्राण्यधीते तथा तथा रोचते[1]ऽस्याभिलाषः परेषामुदन्तमुपलभेयेति । बहु चादत्ते देशो, देशान्तरात् । यत्र क्वाप्यर्थकृतां पौरजानपदानामवस्थां समाधातुं यो यः प्रयोगः क्रियते स स तत्तद्देशप्रवृत्तैः समाचारपत्रैर्द्राक् प्राकाश्यं नीयते । ततो देशान्तरैरपि तत उपलभ्य तद्विधाः प्रयोगा अनुष्ठीयन्त इत्येकतमभिदर्शनम् ।

समाचारपत्रं तत्र तत्रार्थे जनतामतं निर्माति च निरूपयति च । राजमन्त्रिभिः प्रस्तोष्यमाणं राजतन्त्रसंशोधनं राष्ट्रस्योपकरिष्यतीति मत्वा सयुक्तिकमुपपाद्य जनतां प्रचोदयन्ति सम्पादका इदमनुमुद्यतामिति, अपकरिष्यतीति च बुद्ध्वा प्रेरयन्ति तद् बलवद् विरुध्यतामिति । तत्र तत्र विषये नेतॄणां लोकहितान्यभिप्रेतानि प्रकाशयन्ति पर्याप्तं च प्रजाः प्रबोधयन्ति । एवं प्रबुद्धासु प्रजासु नेशते शासितारः कामकारेण[2] वर्तितुम् । इत्थं समाचारपत्राण्यधिकृतान्सुपथि नियच्छन्ति, विपथाच्च वारयन्ति, कार्यनिर्वाहणे च पटीयसः कल्पयन्ति । यत्र देशे विधानपरिषदि सुव्यवस्थितं प्रतिद्वन्द्विसभं[3] नास्ति तत्र समाचारपत्राण्येव तत्कृत्यं निर्वर्तयन्ति । तथा च लोकसङ्ग्रहे[4] प्रवृत्तः कश्चिन्महात्मा पुराणीराचारपद्धतीः कालानुगुण्येन मनाक् परिवर्तयितुमीहते भूयसी श्रेयःसम्पत्तिः स्यादिति, नवं परिशुद्धं च धमनीषु लोहितं सञ्चरेदिति, कदाचारानपि कांश्चिद्विगर्हते, मूढविश्वासांश्चावक्षिपते, शास्त्रात्ययांश्चापवदते मा स्म स्थितिसंकरो भूदिति; तदा समाचारपत्राणि तदुक्तीर्निपुणं विविञ्चन्ति तन्मतं च बलवदुपस्तभ्नन्ति[5] । एवमन्यत्रापि बहुत्र साध्वीं प्रबोधनां जनयन्ति ।

आसतां तावल्लोकसंग्रहं चिकीर्षवोऽन्ये वा समाज समाधित्सवः । तन्नैरपेक्ष्येणापि समाचारपत्राणि लोकाचारं समुन्नयन्ति । इमानि यत्र क्वापि महाजने वा जने वाऽधिकृते वाऽनधिकृते वाऽऽढ्ये वाऽऽनाढ्ये वाऽऽचारव्यतिक्रमं शीलभ्रंशं वा दम्भं वा विप्रलम्भं वा प्रतिज्ञाभङ्गं वाऽर्थदूषणं वाऽभीतवद् विनिन्दन्ति मर्यादाश्च गोपायन्ति, शिष्टानुद्भावयन्ति,

१. दीप्यते । २. कामचारेण । ३. विरोधिसमुदायः । ४. इष्टे प्रवर्तनमनिष्टाच्च निवारणं लोकसंग्रहः । ५. समर्थयन्ते ।

दुष्टांश्च न्यग्भावयन्ति। राजानः खल्वप्यमीभ्यो बिभ्यति मैतानि नम्रं रितमालुलोचन्निति। येप्यवधीरिता अन्याय्यमाचरिताः स्वैरधिकारैर्विना कृतास्तेपि समाचारपत्रैरनुलोमयन्ति स्वस्मिञ्जननिवहम्, आवर्जयन्ति चोपपीडकहृदयमित्यचिन्त्यप्रभावं समाचारपत्रं नाम।

यदा च क्वचिद्देशैकदेशे दुर्भिक्षं वा जायते, भूकम्पो वाऽऽप्लवो[1] वा वर्तते, प्रसृमर आतङ्को[2] वा समुत्पद्यते तदापीमानि पत्राणि तत्र तत्रार्थं वितीर्यतां धनमिति लोकान्प्रेरयन्ति। दातृणां नामावलिं प्रकाश्य प्रकाश्य प्रोत्साहयन्तीतरानपि दानाय। अन्यदापि [3]दानीयादानीयविचारणायां प्रवृत्तानि पात्रवर्षिणो भवतेति लोकान्प्रणोदयन्ति, अयमनाथालयः पात्रं भूरेर्विश्राणनस्य, इदं विद्याशालमर्थकृच्छ्रं वर्तत इत्यर्हति सद्यः सहाय-तामित्यादिभिः सामयिकीभिः प्रचोदनाभिः सति[4] विनियोगे प्रवर्तयन्ति जनौघमसतश्च ततो वारयन्ति।

वणिक्पथस्यापि[5] बहूपकुर्वन्तीमानि। बह्वी एत्र तद्विषयिणी विज्ञापना भवति। अमुष्य पण्यस्यात्र नगर इयानर्घः, अत्र देशे सुदुर्लभानीमानि पणितव्यानि देशान्तरविशेषे सुलभानि, अत्रैव वा देशे पत्तनविशेषेऽमी अर्था एतावता मूल्येन सुप्रापा इत्यादि विज्ञाप्य संव्यवहारं प्रकर्षन्ति। मूल्यविज्ञप्तिभिश्च सर्वत्र देशे मूल्यानि स्थेयांसि सम्पाद्यन्ते येनैकस्यैव द्रव्यस्य तुल्यगुणस्य मूल्यमनेकत्र प्रदेशेषु नातिदूरं विप्रकृष्यते,[6] लोकश्च चिक्रीषुर्नातिसन्धीयते[7] न चोपपीड्यते।

समाचारप्रधानानीमानि पत्राणीति समाचारपत्राण्युच्यन्ते प्राधान्येन व्यपदेशा भवन्तीति। समाचारव्यतिरिक्तमप्यनल्पं तत्र वेद्यमस्ति। एतत्पार्श्वेषु विज्ञानानुसन्धिविवरणानि, पुरातनेतिहासतथ्यानीदम्प्रथमतया समुपलब्धानि, यात्रावर्णनानि, चिरनिखातग्रामनगराद्युत्खननलब्धान्यत्यर्थाश्चर्याणि, अविदितचरभूभागाद्युपलब्धिवृत्तानि, साहित्यसमीक्षणानि विद्वत्कृतानि, नव्यग्रन्थानां गुणदोषालोचनानि च भूयसा

१. आप्लावः। २. रोगः। ३. सम्प्रदानेऽनीयर्। ४. समीचीने। ५. वणिज्यायाः। ६. भिद्यते। ७. वञ्च्यते।

दृश्यन्ते। यत्र तत्र गम्भीरार्था उदाराः प्रबन्धा अपि तं तं विषयं विशद-यन्तः सन्निवेशं लभन्ते। प्रतिरविवासरं प्रकाशितेषु पत्रेषु विद्यां शिक्षां चाधिकृत्यानुबन्धा निबध्यन्ते, यत्राभिविनीतानामपि बहूपादेयं भवति, किमुत विनेयानाम्।

इदं चाभ्युपेयं यो नाम प्रत्यहं समाचारपत्राण्यधीते स शास्त्रैक-शीलनरताद्बहुश्रुताद् विशदतरं व्यवहारं विजानाति, मेधीयान्[1] भवति प्रबुद्धतरश्च भवतीति।

इदं चाप्यभ्युपेयं भवति—बहुधा समाचारपत्राणि नृपनीतिविदां सङ्घविशेषेष्वेव पक्षपातीनि भवन्ति, युक्तं वाऽयुक्तं वा तद्दर्शनमेव पुष्णन्ति, दर्शनान्तरं स्वौपयिकमपि दूषयन्ति। महान्तं चापायमापादयन्ति, आयतिं च विकुर्वन्ति। तेनैषामेकत्र गृह्यता[3] गर्ह्या तटस्थता च प्रशस्या।

इतरत्रापि महान्तमनर्थमुत्पादयितुं प्रभवन्तीमानीति न पार्यतेऽपह्नो-तुम्। जात्येकदेशेषु मिथः संश्लेषणीयेषु स्नेहतन्तुभिश्च दृढं सेवनीयेषु[4] तथैतान्याचरन्ति तथा विपरीतं प्रेरयन्ति तथा बुद्धिं व्यामोहयन्ति यथा सर्वत्र प्रद्वेषमुद्दीपयन्ति, प्रशमं भञ्जन्ति, क्षोभं च जनयन्ति। एतच्चेदानी-मेवाध्यक्षितं प्रज्ञैः—इह देशे मुस्लिमपत्रैर्नक्तन्दिवमनारतमिदमेवान्वशासि मौहम्मदो लोकः, सर्वं हैन्दवं द्वेष्यम्। संभिन्नबुद्धयो नानादेवताभक्तयः प्रतिमोपासका मिथ्याश्रद्धोपपन्ना इमे हिन्दवः परिहार्यसम्पर्काः। सर्वथा च ततः पृथगात्मता मार्गणीया येन केनोपायेनोपेया चेति। एवं समि-द्धद्वेषाग्नयो मौहम्मदाश्चिरं सहोषिता अप्यार्यवंशजा अपि सानुबन्धसं-व्यवहारा[5] अपि यत्र तत्र हिन्दुभिरकलहायन्त स्वाभीष्टसम्पत्तेरा च नोपा-रमन्त। अद्यत्वेपि केचिच्छिष्यपत्राणां सम्पादकास्तामेव कुत्सितां भेद-नीतिमनुसरन्ति। एवं [6]दुःषममाचरन्तस्ते प्रबोध्या निरोध्याश्चाकालहीनं मा स्म तेऽप्रतिविधेयमनिष्टं देशस्य कार्षुः।

अपरत्राप्यदभ्रं स्वं सामर्थ्यं शक्यमेभिर्दुरुपयोक्तुम्। विषमस्थः

---

१. अतिशयेन मेधावी। २. युक्तम्। ३. पक्षपतता। ४. षिवु तन्तुसन्ताने, ततोऽनीयर्। ५. सन्ततपरस्परव्यवहाराः। ६. गर्ह्यम्। दुःषमव्ययम्।

सम्प्रति संसारः । इह समष्टयो व्यक्तयश्च परप्रकर्षप्रध्वंसनेन परापकर्ष-सम्पादनेन वा स्वस्य श्रेयः कामयन्ते । नियोगिनो नियोक्तॄनपद्विषन्ति नियोक्तारश्च नियोगिनः कदर्थयन्ति, स्वल्पं च निर्वेशं वितरन्ति । राष्ट्रे-ष्वपि मिथः सौमनस्यं नास्ति । 'सं वो मनांसि जानताम्' इति श्रुतिं विस्मृता आर्याश्चानार्याश्च । तेन राष्ट्रं राष्ट्रान्तरस्य प्रभूतान्स्वान्प्रवृद्धान्समृद्धांश्चो-पनिवेशान्वाऽभिध्यायति, बलाद्धर्तुं चावसरं प्रतीक्षते । परं नैषा कल्याणी बुद्धिरिति परमार्थः । नैतामभिनन्दन्ति पारोवर्यवेदितारो दूरं द्रष्टारः । शक्यं नाम पत्रैः पापेयं बुद्धिर्निरोद्धुं प्रकाशं च विनिन्दितुम् । एभिः खलु देशाऽन्तर्वर्तमानानि विघटिष्यमाणानि जात्यङ्गानि यत्नतो घटनीयानि । देशाद् बहिरपि तैरविरोधाय शमाय चात्यन्तिकाय प्रयतनीयं येन सर्वो लोको यथास्वं कर्मणि निरातङ्कं[1] प्रवृत्तः पुरुषार्थचतुष्टयं साध्नुयात् । यदा चैतानि वयं सर्वमहान्तः, सर्वमिदमन्यदीयमस्मदीयमेवेति, यदि स्वैरं न ना ढौक-यन्ति[2] तदार्हन्ति प्रथमसाक्रमं परिमोषं च सर्वाङ्गीणमिति बुद्धिमुपजन-यन्ति लौकिकेषु स्वदेशवास्तव्येषु तदा सङ्गराय समुद्योजयन्ति तान् विना-शोन्मुखांश्च कुर्वन्ति । इत्थमेवाचारि हिटलरमतानुवादिभिः शार्मण्यैः समाचारपत्रैः समुदसादि च सम्प्रेक्षणीयं स्पृहणीयं समृद्धिमद् [3]विशङ्कटं च स्वकं राष्ट्रमिति सर्वं प्रत्यक्षं प्रेक्षावताम् । तेनात्र विषये सविशेषमव-धातव्यं सम्पादकैरिष्टं चानुशासनीयं नानिष्टम् । बहु च तेष्वायत्तम् । तन्मुखदर्शिन्यः प्रजाः पथि वर्तेरन्नापथीति प्रेर्याः ॥

---

१. निर्भयम् । २. प्रापयन्ति, उपहरन्ति । ३. विशालम् ।

## ( ३१ ) कविः कालिदासः

'कवयः क्रान्तदर्शना' इति पूर्वे सूरयः। सत्यं कविर्न केवलं व्युत्पत्तिमान् भवति प्रतिभावानपि। तथापि प्रतिभा यथा कवित्वे कारणं न तथा व्युत्पत्तिः। प्रातिभेन चक्षुषा हि पश्यन्ति कवयो विदूरं च व्यवहितं च। न हि तेषां किञ्चित्तिरस्कृतं नाम ऐन्द्रेण विमानेन विहायसं गतो दुष्यन्तो देवकार्यं पर्यवसाय्य यदा तेनैव वाहनेन भुवमवतरीतुं प्रक्रमते तदाऽधःस्थो मर्त्यलोकोऽस्याश्चर्यदर्शनो भवति। हर्षसध्रीचीनेन च विस्मयेन स एवं प्रणिगदत्यवतरणक्रियां स्वाम्।

> शैलानामवरोहतीव शिखरादुन्मज्जतां मेदिनी
> पर्णाभ्यन्तरलीनतां विजहति स्कन्धोदयात्पादपाः।
> सन्तानात्तनुभावनष्टसलिला व्यक्तिं भजन्त्यापगाः
> केनाप्युत्क्षिपतेव पश्य भुवनं मत्पार्श्वमानीयते॥

विमानेन गगनं विगाहमानस्य दूरं गतस्य जनस्यैवं तावद्भाति–शैलाः स्वमुच्चैस्त्वं विमुच्य मेदिन्या ऐकरूप्यमविवेकं गताः, न ततो विलक्षणा उच्चैस्तराः पृथक्त्वेन वा स्थिता इति। ततोऽवतरणेन संनिकृष्यमाणा भूः शैलानां शिखरेभ्योऽवरोहतीति जायते प्रतीतिः, शैलाश्चोन्मज्जन्त इव भुवः। उन्मज्जनं नामामीषां पृथिव्या नानात्वेन स्थितिः, तत उद्भावतामुदञ्चतामिव दृग्विषयावतरः। इदं चापरं तदानीं दृश्यं भवति—पूर्वं पलाशिनः पलाशप्रचयात्तिरोहितात्मान एव नयनयोरयनं गताः, सम्प्रति स्कन्धा अपीति स्वरूपाविष्कारस्तेषाम्। एवं सरितोपि वैदूर्यकृततनूभावेनादृश्यमानजलौघाः सम्प्रति सामीप्ये सति सन्तायमाना इव स्पष्टमवभासन्ते। इदं चापरमद्भुतं दृश्यते–कोपि देवो वा दानवो वा तिरोधायात्मानं सशैलद्रुमनिम्नगामिमां गां सम्प्रत्युत्क्षिपतीव। एवं हि त्वरिततममवतरति विमानं यथा तदाऽरूढो नृपतिर्दुष्यन्तो न चेतयते गतिमदिदं विमानं येनावतरामीति। अत एव परकृतं पृथिव्या उत्क्षेपणमुत्पश्यति। इदमिह वर्णनायां विमर्ष्टव्यं भवति–न हि कवेः कालिदासस्य विमानेन दिव आरोहणं शक्यक्रियं सम्भाव्यं वास्ति। अविषयो हि स देशस्तादात्विकस्य जनस्य। न हि यथेदानीं तथा

तदानीं विहंगमानामिव गगनविहारोऽभून्मानुषाणाम् । वर्णना चैषा तः स्फुटा तथा च सत्या यथा केनापि साम्प्रतिकेन विमानस्थेन समर्थेन जनेन शक्या निर्वर्तयितुम् । अहो अपूर्वा कापि प्रेक्षा कवेर्ययोपपन्नोयमत्यन्तमदृष्टमपि दुरासदमप्यर्थं समुत्प्रेक्षितुमलम्, अविकलं च यथातथं संनिधापयितुम् ।

इद मे दर्शनमुपमोत्प्रेक्षयोरर्थान्तरन्यासे च यः प्रभवति, योऽविहतगतिर्भवति, यस्य पद्ये पद्ये प्रियंकरा अनवद्या रस्याः प्रत्यग्राश्चेमा अलंकृतयः स्फुरन्ति, अभिधेयाभिव्यक्तिकर्यश्च रसपोषकर्यश्च सत्य एव काव्यशरीरशोभामुत्कर्षन्ति स कविः स क्रान्तदर्शनः । तत्रैवान्वर्थोऽयं कविरिति शब्दः । आस्वाद्यतां तावदियमुपमा कालिदासीया—

मन्दः कवियशःप्रार्थी गमिष्याम्युपहास्यताम् ।
प्रांशुलभ्ये फले लोभादुद्बाहुरिव वामनः ॥

महाकविरपि कविकुलकैरवसुधाकरोपि कालिदास आत्मानं मूढं मन्यते । इदं मे बालिश्यं यदहं मूढोऽपि कवियशः प्रार्थये, कविरिति प्रथितः स्यामिति कामये । दुर्लभं मयैतद्ज्ञेनेति च न विभावये । नियतमेवमाचरँल्लोक उपहास्यतां यास्यामि । यथा वामनः कश्चित् प्रांशुना प्रलम्बवर्ष्मणा लभ्ये फले वृक्षस्थे गृध्यति, तदादातुं स्वल्पां स्वभुजामुन्नमयति न च पारयति तत्स्प्रष्टुं कुत एव ग्रहीतुम् । एवं चेष्टमानं तमवलोक्य बाढं हसति जन आत्मनोऽनीशः । तथा नैसर्गिको दुर्निरोधश्च स हासो भवति यथा यतिरपि संशितव्रतस्तं न संयच्छेत् ।

यदि च भवतां सन्देहालंकृतेरासिस्वादिषा, तर्हीयमास्वाद्यताम्—

प्रवालनीलोत्पलनिर्विशेष-
मधीरविप्रेक्षितमायताक्ष्याः ।
तया गृहीतं नु मृगाङ्गनाभ्य-
स्ततो गृहीतं नु मृगाङ्गनाभिः ॥

प्रायेण लौकिकेऽर्थे सन्दिहाना वयं परं क्लिश्यामहे निर्णयमनुधावितुमपारयन्तः । इह तु महाकविना सहैव सर्वथा सांशयिका अपि वयं काममप्यपूर्वां निर्वृतिं भजामहे । अहो अलंकारचारिण्यो माहात्म्यम् ।

दुर्वाससः शापेन प्रमुषितस्मृतिर्दुष्यन्तः शकुन्तलां प्रत्याख्यात्, अंगुलीयकदर्शने च सति प्रतिलब्धस्मृतिः स्वः परिग्रह एव मया निराकृत इति जातानुशयो यदा शकुन्तलां संगच्छति तदा तां क्षमयन्नाह—

सुतनु हृदयात् प्रत्यादेशव्यलीकमपैतु ते
किमपि मनसः सम्मोहो मे तदा बलवानभूत्।
प्रबलतमसामेवंप्रायाः शुभेषु हि वृत्तयः
स्रजमपि शिरस्यन्धः क्षिप्तां धुनोत्यहिशङ्कया॥

उत्प्रेक्ष्यतां तावत्पुरतः स्थितः कश्चिदन्धो यस्य सञ्चिकीर्षया तत्सखो वा तद्बान्धवो या तस्य शिरसि स्रजं क्षिपति। न च क्षेपात्पुरा चिकीर्षितं वेदयति स्रजयितुं त्वेच्छामीति। क्षिप्तमात्रायां च स्रजि किं नु वेदयतेऽन्धः। सर्पो मे शिरसि पतित इति। महानस्योद्वेगः। रक्षणीया असव इति ससंभ्रमो धूनयति शिरोऽवधुनाति च स्रजम्। नान्यच्चिन्तयते, नान्यदाद्रियते। अनवसरोऽर्थान्तरचिन्तायाः संशयितेषु प्राणेषु। इष्टं परिहरन्नपि नासौ विजानातीष्टं परिहरामीति। एवं प्रकृतेऽपि मुनिशापेन हृतचेता दुष्यन्तः परिगृहीतपूर्वां कल्याणीं कल्याणगर्भां कुलसन्तानकरीं प्रियां जायां शकुन्तलामुपसृतां परकीयेति परिज्ञाय पराकरोति परपरिग्रहग्रहेण पांसुलः पातकी नारकी च भविष्यामीति शङ्कमानः। अहो अप्रहतपूर्वो वाचामेष पन्थाः। किं नाम हारितरं दृष्टान्तान्तरं स्यात्। किं वाऽन्यच्छ्रेयो वस्तुसतत्त्वनिरूपणं स्यात्।

कविसम्प्रदाये हासादीनां धवलता प्रसिद्धा। सेयं धवलता केवलमुत्प्रेक्षामात्रं न भवति। दशनरुचोऽवदाता भवन्तीत्यनपलाप्योऽर्थः। हासे च मुखं व्यात्तं भवतीति दशना उत्कटदर्शना भवन्ति। तदेषां या स्फुरन्ती भाः, तां हासे संक्रमय्य कवयो हासस्य धवलतामास्थिताः। इमां च धवलतामाश्रित्य या उपमोत्प्रेक्षाः कविनोपज्ञातास्ता हृद्याः। ता हि रस्यतमा भवन्तीत्यपरिहार्यास्वादाः। ऋतुसंहारे तावच्छरदि प्रगे कुमुदसंकोचं वर्णयन्कविराह—

कुमुदमपि गतेऽस्तं लीयते चन्द्रबिम्बे,
हसितमिव वधूनां प्रोषितेषु प्रियेषु।

अस्तं गते शशिनि कुमुदमपि संलीयते सावसादं प्रियेण विप्रयुक्तम् । तदिद तदवस्थं निशाम्य दूयते चेतः सचेतसः । अयं च कुमुदसंलयः प्रोषितभर्तृकाणां हसितसंलयं स्मारयति तेन सधर्मेति निपुणं करुणरसपरिपोषः कृतः कविनोत्तरार्द्धेन ।

प्रसिद्धमिदं हासधावल्यमाश्रित्य पूर्वमेघे कैलासवर्णनायां यत्तस्याचलस्याट्टहासतोत्प्रेक्षिता कविना तत्कस्य सहृदयस्य हृदयं नावर्जयति । आह खल्वेवम्—

गत्वा चोर्ध्वं दशमुखभुजोच्छ्वासितप्रस्थसन्धेः
कैलासस्य त्रिदशवनितादर्पणस्यातिथिः स्याः ।
शृङ्गोच्छ्रायैः कुमुदविशदैर्यो वितत्य स्थितः खं
राशीभूतः प्रतिदिनमिव त्र्यम्बकस्याट्टहासः ॥

अट्टहासो हि कियतश्चित्क्षणानेव व्याप्नुयात् , ततो विलयं यायात् , इत्यहं प्रवर्तमानस्य भगवतोऽट्टहासस्य निकायोऽस्मित्यपि समुत्प्रेक्षते । इयं च समुत्प्रेक्षा निर्निमित्ता सत्यसंभाव्यतालीढा प्रत्यायिका न स्यादिति निमित्तमपि वास्तवं प्राह—

शृङ्गोच्छ्रायैः कुमुदविशदैरिति ।

यदा कश्चिल्लीलयोपनतमभीष्टमर्थमुपभोक्तुकामोऽपि केनाप्यपदेशेन वारितप्रसरो नेष्टे तं भोक्तुं तस्य कोपमा प्रशस्यतमेति जिज्ञास्यं चेच्छ्रूयतां तदाह दुष्यन्तो निर्वर्णयञ्छकुन्तलाम्—

इदमुपनतमेवं रूपमक्लिष्टकान्ति
प्रथमपरिगृहीतं स्यान्न वेत्यव्यवस्यन् ।
भ्रमर इव विभाते कुन्दमन्तस्तुषारं
न च खलु परिभोक्तुं नैव शक्नोमि हातुम् ॥

विभाते कुन्दं सविकासमप्यवश्यायप्रसेकपूर्णमिति भ्रमरो मकरन्दं पिपासुरपि न सहते पातुं न च कुन्दं विहातुम् । न चापसरति, किं तर्हि तत्रैव चिरं परिसरति । भ्रमरो हि सः । रसेऽभिनवे लोलः स तं पश्यन्नेव कथं कुन्दसंनिधिं जह्यात् । एवं प्रकृते दुष्यन्तः शकुन्तलाया एवमनाकारितोपस्थितायाः शरीरलावण्यं निभालयंस्तेन बलाद्धृतचेता अपि ममायं परि-

ग्रहो भवति न वेत्यनवधारयन्ममेयं भोग्येति परिग्रहीतुं न पारयति। न च हृदयेन परित्यक्तुम्। महाकविः कालिदास एवंविधेष्वर्थसामान्येषु सौन्दर्यनिर्भरमाधातुमीष्टे नेतरः

लोके यः प्रभूणां दासेषु समादरः, गुरूणां वा शिष्येषु, ज्यायसां वा कनीयःसु स तथा समुत्साहाय शक्तिसमुन्मेषाय च भवति यथा ते दासादयो दुःसाधेष्वपि तेषु तेषु कृत्येषु सरभसं प्रवृत्तिमन्तो भवन्ति सिध्यन्ति च। अयं भावः केन दृष्टान्तेन व्यक्ततां रस्यतां चोपनीयेत, केन वाऽर्थान्तरेण समर्थ्येत येन जनस्य वा महाजनस्य वा समं प्रत्यायकः स्यादिति कविकालिदास एव वेद। कति नाम लोकेऽन्वहमनुभवन्तोपीममर्थं कालिदासवद् विशदयितुमीशीरन्। कौतूहलं चेच् श्रूयतां रसनिरन्तरा भणितिरेषा कवेः—

सिद्ध्यन्ति कर्मसु महत्स्वपि यन्नियोज्याः
संभावनागुणमवेहि तमीश्वराणाम्।
किं वाऽभविष्यदरुणस्तमसां विभेत्ता
तं चेत्सहस्रकिरणो धुरि नाकरिष्यत्॥

अत्र पूर्वार्द्धे प्रतिपादितोर्थ उत्तरार्द्धगतेनार्थेन समर्थ्येत इति सामान्यस्य विशेषेण समर्थनादर्थान्तरन्यासोऽलंकारः, दृष्टान्तः इति तु राघवः। भवतु तत्तथाऽन्यथा वा। इदन्त्ववश्याभ्युपेयं पूर्वत्रोदीरितोऽर्थ उत्तरार्द्धेन परिपोषं नीतो दृष्टान्तोपन्यासेन वा निदर्शितो यथा बुद्धिमुपारोहति चेतश्च चमत्करोति न तथा केवलः। आदित्यो हि महती देवता अपरिच्छिन्नमस्या ऐश्वर्यम्, अनवधिकं च सामर्थ्यमिति सहस्रकिरण इति व्यपदेशेन ध्वन्यते। सहस्रमनन्ता ह्यस्य देवस्य किरणा इति किमात्मना सहायेन तमो भेत्तुं नालम्? बाढमलम्। तत्किं क्षत्तारमरुणं तत्रार्थे नियुङ्क्ते। पुरस्करिष्यामि स्वजनमिति। धुरि करणं सारथ्यं मे कुर्विति रथाग्रे निवेशनमेव पुरस्करणं सत्करणं वा तस्य भवति। स चारुणः स्त्रयमनूरुरिति पङ्गुतोपहतः सर्वथाऽक्षमो यत्र प्रसृतानां सन्तमसानामपाक्रियायाम्। एवमनीश्वरोपि यदीश्वरो भवति दुर्घटं घटयितुं स आदित्यानुग्रहः स तत्कृतः सत्कारः। नात्र कारणान्तरं किमपि शक्यमभ्यूहितुमिति कविर्निश्चाययिषति।

उर्वश्याः केशिनापहृतायाः पुरूरवसा च प्रत्याहृतायाः मूर्च्छापायं क्रमिक-मुपवर्णयन्कविर्यां मालोपमां बबन्ध सा कमपि शोभातिशायं धत्त इतीह संगृह्यते—

आविर्भूते शशिनि तमसा मुच्यमानेव रात्रि-
र्नैशस्यार्चिर्हुतभुज इव च्छिन्नभूयिष्ठधूमा।
मोहेनान्तर्वरतनुरियं लक्ष्यते मुक्तकल्पा
गङ्गा रोधःपतनकलुषा गृह्णतीव प्रसादम्॥

नहि शशिनः प्रादुर्भावेन सममेव रात्रिस्तमिस्रेण मुच्यते सहसा, अपि तु प्रारभ्यते तस्यास्ततो मोक्षो न तु परिसमाप्यते। तत्र काल उभयोरपि तेजस्तिमिरयोः सहावस्थितेः। मोहो नाम मूर्च्छा सम्मीलनमिन्द्रियाणा-मिति साधूपमीयते तमसा। प्रबोधश्चालोकसम इत्युपपन्न उपमानोपमेय-भावः। मूर्च्छापि बहुलं गता न त्वखिलम्। 'सौरं तेजः सायमग्निं संक्रमते, आदित्यो वा अस्तं यन्नग्निमनुप्रविशती'त्यादिभिः श्रुतिभिर्नैशो वह्निरधिकं दीप्यते, प्रायेण विधूमश्च भवति। न चात्यन्तमधूमः। भगवती भागीरथी स्फटिकविशदमम्बुराशिं वहन्त्यपि कूलपातेन कादाचित्केन वार्षिकेण वा कालुष्यमुपैति, मलीमसोदका भवति, परं नचिरादेवापेतकालुष्या प्रसन्ना भवति। यदा च साऽनधिगतपूर्णप्रसादा प्रसन्नप्राया समस्ति तदवस्था सोपमा मोहाद्विमुच्यमानाया उर्वश्याः।

कालिदासे कीदृक् प्रकृतिवर्णनमिति विमृशामः। प्रकृतिशब्देनेह बाह्य-वस्तुस्वभाव उच्यते मनुष्यादिप्राणिवर्गस्य च स्वभावः प्रवृत्तिर्वा। तेन सर्गसौन्दर्यवर्णना प्रकृतिवर्णनं भवति मनुष्यादिहृदयनिरूपणं च। उभयत्र कविः परां सीमानमुपगतः प्रावीण्यस्य। स्त्रियो नाम कुतूहलिन्योऽपि निसर्गशालीना भवन्तीत्ययमर्थो यया रीत्या कविनोक्तः सा कामपि हृदय-ङ्गमां चमत्कृतिं वहति। एवं ह्याह मालविकामधिकृत्य नायकमुखेन—

कार्त्स्न्येन निर्वर्णयितुं च रूप-
मिच्छन्ति तत्पूर्वसमागमानाम्।
न च प्रियेष्वायतलोचनानां
समग्रपातीनि विलोचनानि॥

इदं ह्यसकृदनुभूयते लोके इदम्प्रथमे वरवध्वोः समुपश्लेषे । आयत-लोचनानामिति विशेषणं विशेष्यसमर्पकम् । साभिप्रायं चेदम् । आयत-लोचना अपि सत्यस्ता योषाः कृत्स्नं रूपं नावलोकितुं पारयन्ते । कस्तत्र हेतुः ? किमिच्छाविरहः । नेत्याह । इदम्प्रथममुपनतः समागमः, तत्र कात्स्न्र्येन रूपादिदृक्षा कस्या न स्यादन्यत्र तत्कर्मण्यनर्हायाः । शालीन्यमेव सहजं तत्र हेतुरिति कविनिपुणमीक्षते । शालीन्येन परवत्यस्ता दिदृक्षितेपि प्रिये चक्षूंषि विस्फार्य व्यापारयितुं नोत्सहन्ते ।

सूर्यचन्द्रादीनां दशापरिवर्तोऽपि दशावैषम्यमनुभवन्तं लोकं येन प्रकारेण धैर्यमुपदिशति तमित्थमाह—

यात्येकतोऽस्तशिखरं पतिरोषधीना—
माविष्कृतारुणपुरःसर एकतोऽर्कः ।
तेजोद्वयस्य युगपद् व्यसनोदयाभ्यां
लोको नियम्यत इवात्मदशान्तरेषु ॥

इदमत्र हृदयम् । ओषधीनां पतिरपि भैषज्यकुशलः समृद्धिमानपि सन्निति ध्वनिः । अरुणो नामानूरुरुत्थानेऽभ्युदयेऽक्षमस्तं तथाभूतमपि पुरस्करोति, उदयं गमयति रविः । अत्र यः स्वयमुदुयियासुः परमपि तत्राक्षममुदयं प्रापयति सोपि ध्वन्यते । सूर्याचन्द्रमसोरुभयोस्तेजसोरुदयास्तमयौ समुन्नतिभ्रंशौ लक्षयन् विषमस्थो जनः स्थाने समाश्वस्तः स्यात् । यदि भगवन्तौ पुष्पवन्तावप्यालोकाह्लादैकयोनी एवं दशापरिवर्तमश्नुवाते का कथेतरेषां जनिजुषाम् । प्रभातवर्णनमिदं नाप्रयोजनं कविसामर्थ्यप्रदर्शनमात्रप्रयोजकं वाऽप्रसक्तम् । वेलोपलक्षणार्थमादिष्टः शिष्यस्तद्वर्णनायां प्रवृत्त इति नितरां प्राप्तावसरमेतदिति कः सुधीः सन्दिहीत । यश्च तेजोद्वयस्य व्यसनोदयोपन्यासः सोपि समासन्नशकुन्तलाविप्रयोगदूनचेतसोः सख्योराश्वासनायेति सुतरामौपयिकः ।

इदं चावश्यमभ्युपेयं प्रकृतिं चेतनां संवेदनवतीं ज्ञप्तिमतीं वा प्रतिपादयन्नपि कविरुत्प्रेक्षितोऽयमर्थो न वास्तव इतीवादिशब्दप्रयोगेण व्यनक्ति । शकुन्तलायां पतिकुलं प्रति प्रस्थितायां मृग्योऽपि सखीभिरनसूयादिभिः समं दुःखसब्रह्मचारिण्यो भवन्तीति निर्दिशन्नाह—

उद्गलितदर्भकवला मृग्यः परित्यक्तनर्तना मयूराः ।
अपसृतपाण्डुपत्त्रा मुञ्चन्त्यश्रूणीव लताः ॥

अत्र पूर्वार्द्धे यथा मृगीणां शोकपरीतानां मुखगृहीतकवलानामर्धावलीढानामुद्गरणमुक्तं मयूराणां निरुत्सवानां च नर्तनविराम इत्युभयं वास्तवं भाति, न तथोत्तरार्द्धे लतानामश्रुविहारः । इवशब्दो हि कृतस्यापि तस्य मिथ्यात्वं ब्रवीति ॥



## (३२) साम्प्रतं कीदृशं संस्कृतं साम्प्रतम्

इह भारते वर्षे आ हिमाचलादा च कन्यान्तरीपात् संस्कृतस्य विस्मर-
तामिच्छन्तः संस्कृतप्रणयिनस्तत्सरलीकरणं तदभ्युपायेष्वन्तःकुर्वन्ति प्रस्तु-
वन्ति च वाक्ये सन्धेरपनुत्तिं कृदन्तैश्च तिङन्तव्यावृत्तिं प्रायिकीम् । इदमुभयं
तावद् विमृशामः क्रमेण । इष्टं नः सरलीकरणम् । न वयं संस्कृतस्य व्याख्या-
गम्यत्वेऽभिनिवेशिनः । आत्मा तु संस्कृतस्य गोपायितव्य इत्येवाभिल-
ष्यामः । सन्धिर्नाम संस्कृतस्यात्मैव न भवति, मर्मस्थानमपि यद्विनाशे
तत्स्वरूपप्रणाशः । कामं सन्धिः संस्कृतस्यालङ्कारोऽप्यस्ति परं कर्णकुण्डले
इव सहजो न त्वितरकुण्डलवदाहार्यः । येनास्य सत्त्वासत्त्वे अलंचिकीर्षा-
न्वयव्यतिरेकाभ्यां वक्तृतन्त्रे स्याताम् । अत एव वैदिके लौकिके च वाङ्मये
वाक्ये पदानां सन्धेरभावो विरलतमो महता यत्नेनान्वेष्यो भवति । न
ब्रूमः संहितासु ब्राह्मणेष्वेव वा विशिष्टानां कृते कृतेषु संहितपदन्यासो
नियमेन, न वा काव्यनाटकादिष्वेव तथा, रामायणादिषु चापि स निर-
पवादो लोकवृत्तपरेषु । शुकसप्तत्यादौ विनोदमात्रप्रयोजनाः सरलतमाः
कृतीरप्ययं नियामोऽभिव्याप्नोति । यत्र खलु शास्त्रकारः प्रकृतिभावं शास्ति
त एव त्रिचतुराः प्रदेशा यत्र सन्धिजिहासितव्यो भवति, परं तत्राप्यावृत्तिं
सन्धिविरहस्य वैरस्यकरस्य वारयन्ति साहित्याचार्याः । न केवलं वाक्ये-
ऽन्तःपदानां सन्धिमिच्छन्ति पुरा पूर्वे, किन्तर्हि निरपेक्षयोर्वाक्ययोरप्या-
द्यन्तयोः पदयोस्तं स्पृहयन्ति । तथा च तिष्ठतु दध्यशान त्वं शाकेनेति वाक्य-
द्वयमपि संहितया समोच्चारयन्ति । अद्यत्वे पुनर्विपरीतं पश्यन्ति विपरीतं

च प्रवर्तन्ते। वाक्ये वैकल्पिकः सन्धिः पुरुषविवक्षापेक्ष इति जोघुष्यन्ते। सर्वथाऽनित्यः, क्वचिदास्थीयेत क्वचिन्नेति चातिष्ठन्ते, कारिकां चेमां प्रमाणमुदाहरन्ते—

संहितैकपदे नित्या नित्या धातूपसर्गयोः।
नित्या समासे वाक्ये तु सा विवक्षामपेक्षते॥ इति।

सत्यमियं कारिका वाक्ये सन्धिं विवक्षानियतमाह, न चेयं शक्याऽन्यथार्थापयितुम्। तथापि कोऽभिसन्धिरस्याः प्रणेतुः। किमेषाऽत्र विषये कामचारमनुजानाति। यद्येवं किमिति पुरातने साहित्ये क्वचिदपि तं कामचारं न संशिश्रियिरे कवयः। अहं तु मन्ये व्यवस्थितविभाषेयं तेनास्या विषयसंकोचोऽनुक्तोपि गम्यते। का नाम संहिता। वर्णानामानन्तर्येणोच्चारणम्। आह च सूत्रकारः—परः संनिकर्षः संहितेति। यच्च शास्त्रेण सन्धिकार्यमुपदिष्टं सर्वं तत् संहितायां सत्यामेव भवति नासंहितायाम्। तथा चाधिकारसूत्रम्—संहितायाम् (६।१।७२) इति। का नाम विवक्षा यामनुरुध्य वाक्ये सन्धिविकल्पः स्यात्। विरामेण विवक्षा, विरम्य विरम्य पदप्रयोगः, संहिताया अभाव इति यावत्। वाक्ये च तस्या अभावः कुतः। इत्थं हि वाक्यं लक्षयन्ति—'वाक्यं स्याद्योग्यताकाङ्क्षासत्तियुक्तः' पदोच्चय इति। तेनावश्यं वाक्ये पदैरासत्तिमद्भिर्भवितव्यं नो चेद् वाक्यमेव न घटेत। असंहितयोच्चार्यमाणानि पदानि परस्परमनन्वितानि भवन्ति संसृष्टार्थपदमेकं वाक्यं पठाम इति प्रतीतिं च वारयन्ति। तेन कः प्रसंगो वाक्ये विरामस्य, कश्च तन्निबन्धनस्य सन्ध्यभावस्य। तस्माद् एक एव सर्वशक्तिः ईश्वरः अस्य लोकस्य धाता विधाता च इति एव तत्त्वमित्यत्र विरामनिबन्धने सन्धिवैधुर्ये वाक्यत्वविपरिलोपः प्रसज्येत, सविरामचिह्नं चेदमेवंविन्यासं स्यात्—एकः। एव सर्वशक्तिः। ईश्वरः। अस्य लोकस्य धाता विधाता च। इति। एव तत्त्वम्। अयमत्र निर्गलितोऽर्थः—यत्र विरामस्तत्रैव सन्धिविरहो नेतरत्र। सोप्यैच्छिकः। स विरामो वाक्ये न सम्भवतीति वाक्ये सन्ध्यभावो दुर्लभः। वाक्येषु तु स निसर्गसिद्धोऽनपलाप्यः। यथा सखे, एहि, अनुगृहाणेमं जनम् इत्यत्रानुगृहाणेमं जनमित्येकस्मिन्वाक्ये विरामस्य दूरोत्सारितत्वात् सन्धिरपरिहार्यः, इतरत्र सन्धिरस्तु

मा वा भूदित्यनादरः। तेन 'निरस्तपादपे देशे एरण्डोपि द्रुमायते' 'सर्वनाशे समुत्पन्ने अर्धं त्यजति पण्डितः।' इत्यादिषु यः सन्ध्यभावस्तदसामर्थ्यं कवेः। यत्र खल्वतिदीर्घे वाक्ये विशेषणपरम्पराऽतिमहती निबध्यते कादम्बर्यादिषु बाणादिभिर्महाकविभिस्तत्र प्रतिविशेषणान्तं विरामेच्छया सन्धेरभावो नापवदतेऽस्मदुक्तम्। स्वाभाविकीयं विरामेच्छा वाक्यविश्रान्त्यामसत्यामपि श्रान्तिहेतुका विस्पष्टप्रतिपत्त्यर्था चेति न दुर्विभाव्यं सुधीभिः। अयमेव निरुक्तायाः कारिकाया अवकाशः।

अतश्च सन्धिर्नियतो वाक्ये। लोके वाक्यैरेव व्यवहारो न तु पदैः। वाक्यैरेव विवक्षितं ब्रूमो न जातु पदैः। वाक्यात्पदानामत्यन्तं प्रविवेको न कश्चनेति वैयाकरणकृतान्तः। तेन वाक्ये सन्त्येव पदान्यपोद्ध्रियन्ते काल्पनिकानि। एवं व्यवस्थिते मध्येवाक्यं विराम इति कथाऽस्तमेति।

संस्कृते तत्तद्धातुरूपाणि तिङन्तानि न सुगमानि भवन्तीति तत्परीहारेण कृत्प्रयोगेण च तत्स्थानापन्नेन सरलत्वमीप्सन्ति संस्कृतं प्रचिचारयिषन्तः। तदपि परीक्ष्यम्। इदमत्र विस्मरन्ति ते—कृता हि सिद्धावस्थापन्नो भाव उच्यते, तिङा च साध्यावस्थापन्न इति। उक्तं च प्रामाणिकैः—'कृदभिहितो भावो द्रव्यवत्प्रकाशते' इति। तेन यमर्थं 'स ग्राममगच्छत्', 'स ग्राममगमद्' इत्यादिनाऽऽह, न तमेव 'स ग्रामं गतोस्ति', 'स ग्रामं गतवान् अस्ती'त्यादिना वक्तुमीष्टे। पूर्वत्र गतिः प्राधान्येन प्रतीयते साध्यरूपाऽनपवृक्ता। उत्तरत्र च सिद्धरूपाऽपवृक्ता चेति विवेकः। पूर्वत्रासौ प्राप्तग्रामः सम्प्रतीति प्रतीतिः। अपरत्र स ग्राममुद्दिश्य गमनपरोऽभूदिति प्रतिपत्तिः। एवं सत्यर्थभेदे तिङन्तं गमिमप्रयुज्य कृदन्तेन तेनं न शक्यं निर्वोढुमिति व्यक्तं विदुषाम्। एवं स्वपिमि, क्षुध्यामि, श्राम्यामीत्यादीनां प्रसङ्गे सुप्तोस्मि, क्षुधितोस्मि, श्रान्तोस्मीत्यादि न शक्यते प्रयोक्तुम्। तदर्थस्यावाचकत्वात्।

केचिदाहुस्तत्तद्धातुप्रकृतिकानि करोतेः कर्मत्वमापाद्यापि शक्यते स सोर्थो निर्वक्तुं कष्टानि तिङन्तरूपाणि च परिहर्तुम्। यथा स्नाति, बिभेति, सेवते, अर्जयति, लज्जते, द्रक्ष्यामीत्यादीनां स्थाने स्नानं करोति, भयं करोति, सेवां करोति, अर्जनं करोति, लज्जां करोति, दर्शनं करिष्यामीत्यादि शक्यं प्रयोक्तुमिति। बाढं शक्यम्। परं क्वचिदर्थान्तरप्रतीतिप्रसङ्गोपि

जायतेऽनिष्टः। भयं करोतीत्यस्य भयं जनयतीति प्रायोऽर्थः। भयंकरमित्यत्र करोतेर्जननेऽभूतप्रादुर्भावे दर्शनात्। एवं लज्जां करोतीत्यस्यापि लज्जयति व्रीडयतीति प्रायिकोर्थः। तथापि यदि चारुत्वं बन्धस्य नाद्रियते, लाघवं वा न गण्यते तर्हि विस्रब्धमत्र ऋजुनि वर्त्मनि प्रवर्ततां लोकः। न वयं विरुन्ध्मः, न वाऽभ्यसूयामः।

इष्टं नः सरलीकरणमित्यवस्तादवोचाम। तेन तदुपायं नः सम्मतं निर्दिशामः। कृभ्वस्तीनां प्रयोगस्तावद् दुष्परिहर इति प्रतिपन्नप्रायम्। भौवादिका धातवो हि सुग्रहाः प्रायेण प्रतीततमाश्च, तेन तदुपेक्षायां बीजं न पश्याम इति ते व्यवहार्याः प्रायेण। तत्रापि यदि केचन दुःस्मरा दुर्ग्रहाः प्रयोगमनवतीर्णा वा सन्ति कामं ते परिहर्तव्याः। एवं गणान्तरेषु पठिता याति-पुष्यति-चिनोति-जानाति-प्रभृतयः प्रचुरं प्रयुज्यमाना अपि समादर्तव्याः। प्रयत्नो हि फलाद् व्यतिरिच्येतेति कथङ्कारं युज्येत। तेन भौवादिकेष्वपि कांश्चिदेवोपादाय शक्यः स सोर्थो निर्वक्तुम् आत्मा च क्लेशेन विना कर्तुम्। कथमिति चेदुच्यते—उपसर्गसहचरिता अल्पा एव धातवो बहूनर्थान्स्रवन्तीति यद्युपसर्गप्रयोगेऽवधीयेत तदा सा सा विवक्षा पूर्येत, तत्तद्धातुस्मरणजः क्लेशश्च हीयेत। परिगतोपसर्गार्थश्छात्रो नात्मानं कदर्थयेत्परश्शततिङन्तरूपावलिस्मरणेनोद्वेजकेन। व्याख्यातचरोऽयमर्थोऽस्माभिरनुवादकलायामिति नेह वितन्यते। अयं चापरो गुण उपसर्गयोगस्य स्थाने कृतस्य। सुभगकरणा उपसर्गा इति सौभाग्यमपि किमपि निषिञ्चन्ति वाचि।

अपरे मन्यन्ते शास्त्रेण यत्पदद्वैविध्यं परस्मैपदमात्मनेपदं चेति प्रथितमुपदिष्टं तत्रात्मनेपदं शक्यं परित्यक्तुम्। परस्मैपदेनैव सर्वत्र व्यवहारसिद्धेः। काव्यनाटकादिषु बहुत्र साङ्कर्यदृष्टेश्चेति। तत्र ब्रूमः सत्य पूर्वैः सूरिभिरनेकत्र पदयोरेतयोः प्रविवेकेण प्रयोगो नाकारि, तथापि नैतावताऽऽत्मनेपदपरित्याग उपपत्तिमान्भवति। कामं बहुत्र वाक्यरचनायां परस्मैपदेनैव निर्वहयति कार्यं परं सन्ति केचनात्मनेपदप्रदेशाःस्वा यत्र तदन्तरा कर्तृगामिफलता न शक्याऽभिव्यङ्क्तुम्। इष्यते च। यथात्र सन्दर्भे यः परः स द्वेष्यो भवति। अहमन्यमाहन्यामित्युद्यन्नेव विलीयते भावः। कथङ्कारमात्मानमाघ्नीयेति। यथा वात्र यद्यहं परं दुर्गतमुद्धरामि, आत्मानमेवोद्धरे।

परं चेदनुगृह्णामि, आत्मानमेवानुगृह्णे। परस्य साचिव्यं चेत्करोमि, आत्मन एवं साचिव्यं कुर्वे इति। भिक्षाका याचन्त इत्येव युज्यते वक्तुं न तु भिक्षाका याचन्तीति। विपरीतार्थगतेः। परापकारप्रियाः केचित्साधवः। कूपतटाकादिनिर्मित्सया धनं याचन्ति लोकमित्येव वक्तुमुचितम्। आत्मने-पदप्रयोगस्तु विरुद्धमतिकृदित्यनवसरगृहीतः। तेनोभयोः पदयोर्यथायथं प्रदेशा इत्यात्मनेपदस्यात्यन्ताय प्रहाणं न सम्भवीति क्वाचित्कोऽस्य प्रयोग एषणीय एव। वागिघ परत्र बोधसंक्रान्तये प्रयुज्यते सा चेदयथार्थं बोधयेन्नार्थोऽनया।

ये चाद्यत्वे सरलत्वकामाः संस्कृतेनार्थनिबन्धने हिन्द्याः सरणिमनुसरन्ति ते नालं विदुः संस्कृतस्यात्मानमेव हिंसमः, स्वरूपमेवास्य क्षिणम इति। अस्ति खलु कश्चिच्छिष्टजुष्टः प्रकारः संस्कृते यो यत्नेन गवेषणीयो वेदनीयो रक्षणीयश्च। शास्त्रकारो ह्यप्रथमान्तेन सामानाधिकरण्ये लटः शतृशानचौ शास्ति विकल्पेन। परं हिन्दीमनुकुर्वन्तो वर्तमानतायां च व्यामुग्धाः प्रवृत्त-क्रियाऽऽचिख्यासया यत्र तत्र शतृशानचावादेशौ कुर्वन्ति न चाप्रथमान्तेन सामानाधिकरण्ये तौ स्यातामिति शिष्टिमनुरुध्यन्ते तेन च व्यवहारमुज्झन्ते। तस्मात्कटं कुरुते। देवो वर्षति। रावणो हन्यते। ते भुञ्जते। वयं विचारयाम इत्यादीनां स्थाने कटं कुर्वाणोऽस्ति। देवो वर्षन्नस्ति। रावणो हन्यमानोऽस्ति। ते भुञ्जानाः सन्ति। वयं विचारयन्तः स्म-इत्यादि व्यवहारानन्नुपातीति पराकरणीयम्। प्रारब्धोऽपरिसमाप्तश्च वर्तमानः इति पचतीत्युक्ते योऽर्थो गम्यते स एव पचन्नस्तीत्यनेन। तेन नार्थः कृद्वृत्तिसमाश्रयेण, केवलं व्यवहारोऽतीयते! प्रथमान्तेन सामानाधिकरण्ये क्वचिदेव शतृशानचाविति वृत्तिकारः। यथा—उद्यास्यन्वा अरेऽहमस्मात्स्थानादस्मीति मैत्रेयीं प्रति भगवतो याज्ञवल्क्यस्योक्तिः। क्वाचित्कत्व च नालं लोकव्यवहारनिबन्धन-ताया इति न वेदनीया विचक्षणाः।

अन्यत्रापि हिन्दीमनुरुन्धाना इदानीन्तनाः संस्कृतज्ञा व्यवहारमति-पतन्ति, तत्प्रसङ्गादुच्यते। यद्यपि प्रायाद्वाक्ये नियतः पदानां क्रमः कश्चि-न्नास्ति, पात्रमाहर, आहर पात्रम् इत्युभयथा प्रामाणिकप्रयोगदर्शनात्तथा-प्युपाख्यानोपक्रमः प्रायेणास्तिना क्रियते—अस्त्ययोध्यायां चूडामणिर्नाम

क्षत्रिय इति। क्रियान्तरेण वाक्योपक्रमो नानुज्ञायते। अद्यत्वे तु अध्यूषतुः कमपि ग्रामं कौचित् प्रतिवेशिनौ विप्रावित्येवमप्युपाख्यानमुप-क्रमन्ते। इतरत्रापि वाक्ये पदाभिसम्बन्धे याथाकामी नेष्टा शिष्टानाम्। वाक्ये षष्ठ्यन्तं विशेषणं विशेषणान्तरेणाऽव्यवहितं विशेष्यात्पूर्वं निपतीति शिष्टव्यवहारः। एकातपत्रं जगतः प्रभुत्वम् इति। नात्र जगत एकातपत्रं प्रभुत्वमित्येवं क्रमः शक्यः विपर्यासयितुम्। न ब्रूमो वृत्तभङ्गभया-दिति। किन्तर्हि व्यवहारातिक्रमादिति। एवं हि व्युत्क्रमेणोच्यमाने व्यव-हारोऽतिक्रान्तो भवतीति। एवं सर्वगुणसम्पन्नस्तस्य सुतः कस्य स्पृहां न जनयति। सर्वैर्योषितां गुणैरलंकृतेयं वरवर्णिनी कस्य धन्यस्य दारा इत्यत्र तस्य सर्वगुणसम्पन्नः सुतः, योषितां सर्वैर्गुणैरलङ्कृतेत्येवमानुपूर्वीकः पद-न्यासो न पार्यते कर्तुम्। स चेत्क्रियते हिन्दीवाग्व्यहारानुसार एव तत्र मानमिति गृहाण। 'स्याद्भाण्डमश्वाभरणेऽमत्रे मूलवणिग्धने' इति नानार्थ-वर्गेऽमरः। तत्र वणिजो धनं वणिग्धनमिति पूर्वं षष्ठीसमासः। ततः किंल-क्षणं तदित्याकाङ्क्षायां मूलं च तद् वणिग्धनं चेति मूलवणिग्धनमिति विशे-षणसमासः। चेच्छब्दो वाक्यादौ न प्रयुज्यते परमद्यत्वे चेत्कृष्णं नंस्य-सि स्वर्गं यास्यसीत्येवं बहवः प्रयुञ्जते नैतदेव। पूर्ववाक्ये चेच्छब्दप्रयोग उत्तरवाक्ये तदा तर्हीति वापि व्यवहरन्ते। अयमपि व्यवहारातिक्रमः। बह्वत्र वक्तव्यम्। विस्तरभिया तूदास्यते। इदमेव व्याहृत्य पर्यवसाययामो वाचम् इष्यतां सारल्यं यत्यतां च तदर्थं स्मयतां च न हि सारल्यं नाम पर्याकुलीभावपर्याय इत्यों शम्।

इति श्रीचारुदेवशास्त्रिणः कृतौ प्रस्तावतरङ्गिण्यां विचारात्मकप्रस्तावविषयः प्रथमस्तरङ्गः॥ १॥

## अथ द्वितीयस्तरङ्गः

### संक्षिप्तशब्दार्थका विचारात्मकाः प्रस्तावाः

इह तरङ्गे संक्षिप्तशब्दार्थकाः कतिपये प्रस्तावाः प्रणीयन्ते, ते यथा प्रतिपाद्यं व्यक्ततरं निरवशेषेण च प्रोक्तं स्यात्तथोपपत्तिभिर्निदर्शनैश्चोप-बृंहणीयाः। अनपेक्षितवाक्प्रपञ्चश्च सर्वत्र परिहरणीयः।

## ( १ ) धनं दानाय भुक्तये

तिस्रो हि धनस्य गतयो भवन्ति—दानं भोगो नाशश्चेति। सर्वो जनो लोकयात्रागतो धनमपेक्षते। सुखार्थी लोकः सुखोपकरणानि मृगयते, धनव्ययेनैव च तानि लभते। अयमेव धनस्योपभोगः। एतेनैव धनम-र्थवद्भवति। प्राकृतो हि प्रायेणात्मार्थमेव धनं व्यययते। उदात्तस्तु परा-र्थेऽपि तत्प्रकुरुते, तद् दानम्। दीयमान धनं भुज्यमानात्सुदूरं प्रकृष्यते। अन्यथा 'काकोपि जीवति चिराय बलिं च भुङ्क्ते' इति काकवृत्तितो नातिरिच्यते मनुष्यः।

यश्च धनस्येशानोऽपि नाद्यो भुङ्क्ते न च ददाति स कृपार्हः कृपणः। यो हि मितं पचति, स्वं क्लिश्नाति, स्वीयांश्च न पुष्णाति सोऽधन्यः। यश्च समर्थोऽपि हव्यकव्ययोरुदास्ते स याप्यः, स स्तेनः। कृपणं हि कुत्सयन्ति शास्त्रकाराः, परिहार्यदर्शनं च निर्दिशन्ति। अभुज्यमानमदी-यमानं च धनं नावतिष्ठते। पाटच्चरैर्वाऽपह्रियते, वह्निना वाऽऽत्मसा-त्क्रियते, राज्ञा वा ह्रियते।

धनस्य दानमिति प्रथम उपयोगः, भोगश्च द्वितीय इति धर्मदर्शिनः। अत एवोपपद्यते दानस्य प्रथमनिर्देशः प्रकृते श्लोकचरणे। दानं नाम पात्रे प्रतिपत्तिः। दानान्नातिदुष्करं लोक इति प्रथमे मुनयः। आत्मानुग्रहाय तदित्यार्य्याः। पराभ्युपपत्तय इति च प्राकृताः। सर्वावस्थागतेन पुरुषेण सर्वभावेन देयमित्यृषयः। तथा च वेदान्ताः—श्रद्धया देयम्। अश्रद्धया देयम्। श्रिया देयम्। ह्रिया देयम्। भिया देयम्। संविदा देयम् इति।

अयं च व्यतिरेको दानभोगयोः। दीयमानाः स्वा विवर्धन्ते, भुज्यमा-नाश्च क्षीयन्ते। दानस्यैष कोपि महिमा लोकोत्तरो यदेकत्र विरुद्धधर्मद्वया-न्वयः। तस्माद् द्वयी धनस्य गतिर्हितकरी-दानं भुक्तिश्चेति, तां जुषेत सुधीः।

---

## ( २ ) सर्वे गुणाः काञ्चनमाश्रयन्ति

इह काञ्चनमिति रजतादेर्द्रव्यस्योपलक्षणं हीरकमौक्तिकादीनां च। न केवलं कलावेवातिक्रान्तेष्वपि युगेषु धनवतः समादरो विशिष्टोऽभूदित्यत्र धन्यशब्द एव लिङ्गम्। धनगणं लब्धेति पाणिनीयानुशासनेन धनं लब्धरि धन्यशब्दो व्युत्पादितः। यो हि धनं लब्धवान्धनिकोऽभूत्तं धन्यं कृतार्थं मेनिरे जना इति हि ततः स्फुटत्यर्थः। तथा चैतरेयब्राह्मणे—'रूपं हिरण्यं पशवो विवाहा' इति।

अति हि मानयन्ति लोका धनिनम्। असतोपि गुणांस्तत्र धनिनि समुत्प्रेक्षन्ते, तं तं गुणं वा तत्रारोपयन्ति, तेन तेन गुणेन युतं दोषेण च वियुतं तमुत्पश्यन्ति बहु चाद्रियन्ते। अयमेवार्थः 'सर्वे गुणा काञ्चनमाश्रयन्ती'त्यस्य कविवचनस्य।

अविद्योऽपि वित्तवान्सविद्यवत्पुरस्क्रियते। किं न दृश्यतेऽनक्षरप्रायान् श्रेष्ठिनोऽधीच्छन्ति[1] पण्डिताः साभापतं[2] सनाथ्यतामिति शास्त्रं वा व्याक्रियतामिति। आभणन्ति च लौकिकाः—यस्य धान्याचिताः कुसूलास्तस्यान्धाः सुतादयोप्यनघा इति। यत्सत्यं मूर्खा अपीमे प्राज्ञवत्पूज्यन्ते, विरूपा अप्यभिरूपवदाद्रियन्ते, उद्वृत्ता अनाचारा अपि सद्वृत्तवदर्च्यन्ते। नैतदेव। अगुणा अपि गुण्या[3] गुणज्ञाश्चाभिमन्यन्ते। सदसद्विवेकचणाश्च गण्यन्ते। सोऽयं सर्वो विभवप्रभावः। उक्तं च कविना—

> "पूज्यते यदपूज्योऽपि यदगम्योऽपि गम्यते।
> वन्द्यते यदवन्द्योऽपि स प्रभावो धनस्य च" ॥ इति।



---

१. सत्कारपूर्वकं व्यापारयन्ति। २. अश्वपत्याद्यैश्वर्येण। ३. गुणवन्तः। यप्रत्ययः।

## ( ३ ) स्वधर्मे निधनं श्रेयः परधर्मो भयावहः

अत्र स्वधर्मशब्देन शास्त्रविहितो वर्णाश्रमाचारो गृह्यते यत्र ब्राह्मणादयो ब्रह्मचारिप्रभृतयश्चाधिक्रियन्ते। न तु नानादर्शनसमुत्थमार्यानार्यादीनां प्रातिस्विकं[1] मतम्। तादृशस्य मतस्य प्रत्याख्यानस्य गीतासु प्रस्तावस्यासत्त्वाद्, अर्जुनस्य परमतपरिग्रहानौन्मुख्याच्च। ज्ञातिविध्वंसभीतेर्निवृत्तिलक्षणं शमप्रधानं ब्राह्मणधर्मं शिश्रीषति धनञ्जयः, तत्प्रतिषेधति भगवान् 'स्वधर्मे निधनं श्रेयः' इत्यादिप्रबोधनेन। किं च धर्मशब्दो न क्वचिदपि मतपर्यायो दृष्ट इत्यभ्यु[2]च्चितो हेतुरत्र द्रष्टव्यः।

"चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः" इति वचनाद् गुणकर्मविभागशो ब्राह्मणादीनां तत्तदाचारनियमः। पुराकृतकर्मानुरोधेन सत्त्वादिगुणप्रधानभावेन ब्राह्मणादीनां कर्तव्यकलापनिश्चितिरिति सा न हेलया शक्याऽन्यथयितुम्। शास्त्रप्रतिनियतानि कर्माणि सहजानि भवन्तीति स्थितेर्यस्तानि जिहासति स स्वभावं जिहासतीति महदस्यानिष्टमाशङ्क्यते। सति कर्मव्यतिहारे[3] सर्वाः संकीर्यन्ते स्थितयः। न च तास्ताः क्रिया यथावन्निष्पद्यन्ते, न चापि लोक इष्टेनाभ्युदयेन च युज्यते।

परधर्माचरणे स्वरूपप्रच्युतिरेव परं दूषणम्, अत एवोक्तम्—

'स्वभावनियतं कर्म सदोषमपि न त्यजेत्।' इति।

नैतदेव, किन्तु—

'श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात्।'

इत्यपि ध्येयम्। एतदेवानुस्मारयति शाकुन्तले राष्ट्रियेण 'विशुद्ध इदानीमस्याजीवः' इत्युपहसितस्येदं मत्स्याजीवस्य वचनम्—

"सहजं किल यद्विनिन्दितं न तु तत्कर्म विवर्जनीयम्।
पशुमारणकर्मदारुणोऽनुकम्पामृदुरेव श्रोत्रियः॥" इति।

मोहाल्लोभाद्भयाद्वा परधर्मप्रवणता दृश्यते लोके।

---

१. स्वस्मिन्स्वस्मिन्भवम्। २. अभ्यधिकः। ३. यत्रैकोऽन्यस्य योग्यां क्रियां करोति स कर्मव्यतिहार इत्यभिप्रेतः।

## ( ४ ) सहसा विदधीत न क्रियामविवेकः

### परमापदां पदम्

'मत्वा कर्माणि सीव्यन्तीति मनुष्याः' इति नैरुक्ता मनुष्यशब्दव्युत्पत्तिमाचक्षते। न च सर्वे तत्समाचारा भवन्ति। व्युत्पत्तिमन्तोऽपि प्रेक्षावन्तोऽपि बहुधाऽसमीक्ष्यकारिणो भवन्ति मनुष्याः। तत्र तरसा प्रवृत्तौ लोभो वा क्रोधो वा प्रणयातिरेको वा कारणतां याति। कस्कोऽनु[1]बन्धो मे भविष्यति कर्मण इत्यविविच्य प्रवृत्तस्योपनमन्त्यापदोऽनेकाः। तद्य इच्छेत्सुविहितानि मे कर्माणि समृध्येयुर्विपदश्च मां मोपनंसिषुरिति स इदं प्रास्ताविकमिदमप्रास्ताविकम्, इदं साध्विदमसाधु, इदं फलवदिदमफलमिति सुविचिन्त्य प्रारभेत। उक्तं हि—

गुणवदगुणवद्वा कुर्वता कार्यजातं
परिणतिरवधार्या यत्नतः पण्डितेन।
अतिरभसकृतानां कर्मणामाविपत्ते-
र्भवति हृदयदाही शल्यतुल्यो विपाकः॥ इति।

गुरुलाघवमर्थानामारम्भे कर्मणां फलम्।
दोषं यो न विजानाति स बाल इति होच्यते॥
अविज्ञाय फलं यो हि कर्म त्वेवानुधावति।
स शोचेत्फलवेलायां यथा किंशुकसेवकः॥ इति च।

बह्वीरविवेकस्य दुष्परिणतीः पश्यामः। जानक्या सौमित्रिं प्रति 'भ्रातृजायां मां जायामिच्छसि, तत एव जीवितसंशये वर्तमानस्य भ्रातुरार्तरवं शृण्वन्नपि तमभ्युपपत्तुं न यासी'ति यदुक्तं तत्तस्य[2]मर्माविदासीत्। स च कुटीरान्निरियाय, जहार च पौलस्त्यः सीताम्। एवं द्रौपद्याः स्वयंवरे नाहं सूतपुत्रेण परिणयमिच्छामीति रभसोक्तिरपि महतेऽनिष्टाय जाता।

---

१. परिणामः। २. मर्माणि विध्यतीति मर्माविद्। क्विप्। पूर्वपदस्य दीर्घः।

## ( ५ ) मानो हि महतां धनम्

मानश्चित्तसमुन्नतिः। मनऔन्नत्यमिति यावत्। तेनात्मनि संभावना परकृताधिक्षेपासहत्वं च लक्ष्येते। मानिनो मनस्विनो महामनसोऽत्र महान्त इति विवक्ष्यन्ते। मान एवैषां धनम्। अतस्तद्रक्षणपराः [1]प्राणानामपि पणन्ते [2]पणाय्यचरिता महात्मानः, न तु तनीयसीमप्यभिभूति सहन्ते। कदर्थिता अपि, विषमपतिता अपि, न मानमुज्झन्ति, न देहीति दीनवत् ब्रुवन्ति, [3]नाक्रोशमुपक्रोशं[4] वा मृष्यन्ति, विमाननासहचरितां सुधामप्यवधीरयन्ति। अनुश्रूयते राधेयेनात्तगन्धो[5] युधिष्ठिरो गाण्डीविनं जगर्ह, स च तन्न सेहे, हन्तुं चाग्रजं प्रचक्रमे।

यदपि कर्म लाघवमापादयति तद्यत्नेन परिहरति मनस्वी। न जात्व पथे पदमर्पयति। 'गङ्गातीरमपि त्यजन्ति मलिनं ते राजहंसा वयम्' इति हंसवृत्तमाचरति। न हि परसंश्रयेण वृत्तिं कल्पयति। न परेण हतं भक्ष्यं व्याघ्रः खादितुमिच्छति

क्षुद्रास्तु तद्विपरीताचाराः। तानेवोद्दिश्य नयविदाम्—

> अवमानं पुरस्कृत्य मानं कृत्वा च पृष्ठतः।
> स्वार्थं समुद्धरेत्प्राज्ञः स्वार्थभ्रंशो हि मूर्खता॥

इत्यनुशासनम्। एते हि प्राकृतमर्थजातमेव धनमभिमन्यन्ते तदेव च सततं गवेषयन्ते, धनिकद्वाराण्युपासते, [6]राजास्थानीरुपतिष्ठन्ते[7]ऽधिकृतानासेवन्तेऽवहेल्यमाना विविधमाक्रुश्यमाना अपि धनामिषलाभेन तदन्तिकं न जहति। यत्र मानहानिर्भवति न तत्रैकाहमपि तिष्ठन्ति मानिनः, असून्वा मुञ्चन्ति ततो वाऽपक्रामन्ति, न तु तत्रावमता वसन्ति।

तदुक्तम्—'सतां माने म्लाने मरणमथवा दूरसरणम्।' इति।

---

१. कर्मणि शेषे षष्ठी। २. स्तुत्यचारित्राः। पणायतिः स्तुतिकर्मा। ण्यत्। ३. शापम्। ४. अपयशः। ५. अभिभूतः। ६. राजसभाः। ७. 'वा लिप्सायामि'-त्यात्मनेपदम्।

## ( ६ ) गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः

योऽयं लोके गुणवत्समादरो दृश्यते स गुणसव्यपेक्षो भवति न स्त्रीपुंसत्वनिबन्धनो न वा वयोनिबन्धनः। गुणाश्च दयादाक्षिण्यादयो भवन्ति प्रज्ञामेधादयश्च। यदि तावद् गुणेष्वन्तः पूजानिमित्तमस्ति तदा शिशुत्वं वा भवतु स्त्रैणं वा, तेन किम्। यदि पुरुषे गुणाः सत्कृतिभाजस्तर्हि त एव स्त्रियामुपलब्धाः कुतो न। यदीमे वृद्धेऽभिख्यामावहन्ति तदा बाले कस्मान्न।

अत्यल्पमिदमुच्यते "न च लिङ्गं न च वयः" इति। गुणाभिपूजायां यथा स्त्रीत्वपुरुषत्वे नाद्रियेते तथैव गुणवतो जातिरपि न विचार्यते। वृषलस्यापि गानचुञ्चो रागपरिवाहिण्या गीत्याऽनल्पा पुरस्क्रिया भवत्येव। उक्तं च—

"प्रभुभिः पूज्यते विप्र ! कलैव न कुलीनता।
कलावान्मान्यते मूर्ध्नि सत्सु देवेषु शम्भुना॥" इति।

गुणप्रकर्षतन्त्रो हि लोके बहुमानः। तत्र वयोऽकिञ्चित्करम्। स्मरति च भगवान्मनुः—"अध्यापयामास पितॄन् शिशुराङ्गिरसः कविः।
पुत्रका इति होवाच ज्ञानेन परिगृह्य तान्॥" इति।

शिशोरपि प्रवयसः पितॄन्प्रति पुत्रका इत्यभिलापः संगच्छत[2] एवाधिगुण्यात्[1]। बालचन्द्रो हि लोकेन नमस्क्रियते चमत्कृतिविशेषान्न तु प्रथ्यानः।



## ( ७ ) सुदुर्लभाः सर्वमनोरमा गिरः

अनेकजन्मोपार्जितसंस्कारवा[3]सितान्तःकरणा लोका विचित्ररुचय इति यदेकस्मै रोचते न तदन्यस्मै। [4]एकानूकयोरपि समानाभिविनययोरपि द्वयोर्वैचित्र्यं विद्यते रुचीनां किम्पुनः पृथगन्ववायजातानां विभिन्नाभिविनयानाम्। दृश्यतेऽनुदिनं गृहेषु समानपितृकेषु पुत्रेषु कश्चिन्मधुरं रोचयते,

---

१. अधिगुणोऽधिकगुणः, तस्य भावस्तस्मात्। २. वृद्धः। प्यायतेर्निष्ठायां रूपम्। ३. वासितमिति वास उपसेवायामिति चुरादेर्निष्ठायां रूपम्।
४. एकवंशयोः।

कश्चिल्लवणं कश्चिच्चाम्लं रसमिति । एवं कश्चित्काव्यं रसयति कश्चिन्नाट्यं कश्चिच्छिल्पं कश्चिच्च गणितम् । कस्यचिच्छृङ्गारः प्रियः कस्यचिद्वीरः कस्यचित्करुणो रसः । विरलस्य कस्यचिद् बीभत्सोपि रुचेर्गोचर इति नानात्वं रुचीनां व्यवस्थितं भवति ।

एवं सत्येकैव वाक्सर्वस्य रमयेन्मानसमिति नोपपद्यते । यो नामार्षेण संस्कारेणाभिसम्पन्नस्तं मृद्वी ऋज्वी च प्रीणयति वाक् न कर्कशाऽरुन्तुदा वा । कस्यचित् पदानां सौभाग्यलाभप्रतिभूर्वैदर्भी रीतिरास्वाद्या भवति कस्यचिद् गौडी । य आत्मना विस्मितस्तस्मा अर्थवादः[1]स्वदते न भूतार्थवादः । य ईर्ष्याकषायितस्तस्मै परापवादो रोचते स्वस्य चोच्चैर्वादः । हितमप्यनुशासनं न सहन्तेऽसूयकाः, अवदातमपि दूषयन्ते पुरोभागिणः, सर्वाङ्गसुन्दरे सुभाषितेऽपि न रज्यन्ते ज्ञानलवदुर्विदग्धाः ।

यदि सर्वस्य मनोरसं वचो न शक्यं गुम्फितुं तदा किं तूष्णीं स्थेयं किं वा मिथ्याऽऽख्येयं येन श्रुतिप्रसादनं स्यात्सभ्यानाम् । अत्रोत्तरं सस्मार भगवान्मनुः—

"सभा वा न प्रवेष्टव्या वक्तव्यं वा समञ्जसम् ।
अब्रुवन्विब्रुवन्वापि नरो भवति किल्बिषी ॥" इति ।

एवं कविकर्मणि प्रवृत्ता नैतेन नः कर्मणा सर्वे सन्तोदयन्ति समेपि विज्ञातार इति, पौरोभाग्यमत्राचरिष्यन्ति केचिन्मन्दा इति वा, भिया किं परिजहति कोमलकान्तपदावलिप्रणयनम् । 'न हि भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रीयन्ते' । 'न हि मृगाः सन्तीति यवा नोप्यन्ते' ।

इति श्रीचारुदेवशास्त्रिणः कृतौ प्रस्तावतरङ्गिण्यां संक्षिप्तशब्दार्थक–विचारात्मको द्वितीयस्तरङ्गः ॥ २ ॥



१. स्तुतिः ।

# अथ तृतीयस्तरङ्गः

## आख्यानात्मकाः प्रस्तावाः ।

आख्यानात्मका हि प्रस्तावा द्विविधा भवन्ति—परवृत्तवर्णनपराः स्ववृत्तवर्णनपराश्च। पूर्वत्र कवीनां वीराणां प्रजापालानां महात्मनां च चरितानि निबध्यन्ते, परत्र च स्वमेव चरितं कश्चित्प्रथितयशाश्चारुचर्यो लोकस्य श्रेयोनुशासनं चिकीर्षुर्निबध्नाति। सेयमात्मकथा भवति। यथा चेतना अर्था आत्मानमधिकृत्य निबध्नन्ति तथाऽचेतना अपि निबन्द्धारो भवन्तीत्युपचर्यते। अन्यदीयमेव निबन्धृत्वं तेष्वारोप्य तथा वर्ण्यते वृत्तं यथा ते स्वयमाचक्षीरंश्चेतनाश्चेत् स्युः।

परकीयचरितवर्णनायां क्रमोऽवश्यमादरणीयः। जननात्प्रभृत्यानिधनं सर्वो वृत्तान्तः समासेनोपन्यसनीयः। अभिजनोऽपि निरूपणीयः। अनपेक्षितार्थोपवर्णनेन न प्रबन्धकायो मुधा बृंहणीयः। आख्यायमानस्य वृत्तशीले अपि लक्षणीये, प्रज्ञामेधे अपि निरूपणीये, अवदानानि चापि निर्देश्यानि।

आत्मकथाप्रथा सम्प्रत्यधिकाधिकं रुचिविषयतां याति लोकस्य। तदेतच्चेतनाचेतनेषु विषयेषु समानम्। अचेतनविषयामात्मकथामुपक्रममाणेनेदं तावद् विस्मरणीयमहमन्यो विषयश्चान्य इति। निबन्द्धा विषयेण स्वस्य तादात्म्यं साधनीयम्। तदेव च वर्णनीयं यदचेतने शक्यमवकल्पयितुम्, तदेव च वक्तव्यं यदचेतनं विवक्षेत चेतनं चेत्स्यात्। यदि गोरात्मकथा कथनीया तदा गोत्वमात्मनः कल्पनीयम्। तत्रापि यदनन्यसाधारणं वृत्तं कौतुककरं विस्मयकरं वा तन्निबन्धनीयमुपेक्षणीयं चान्यत्। प्रसादगुणगुम्फितं प्रहासप्रचुरं च निबन्धनीयम्। समास आश्रयणीयो न व्यासः। सर्वत्रास्मच्छब्देनैवाऽऽत्माऽऽख्यानविषय आख्येयः। अनाख्येया च स्वसत्ताविरोधिनी वाक्।

आख्यानानि भूयोऽपि द्वैविध्यं भजन्ते। एकत्र कल्पनोत्थस्यार्थस्यातीतस्यानागतस्य वोपन्यासः, अपरत्र तथ्यस्य वृत्तस्य यथाश्रुतं यथादृष्टं वा प्रकथनम्। उभयत्र कथनस्य कः क्रम इत्यनभिविनीतो न वेद। तस्माद्

गुरुभिर्यत्नतोऽभिविनेय आख्यानप्रकारेऽनभ्यन्तरो विनेयः । स हि प्रायेण कथां प्रकुर्वाणो बहुत्र पुनर्वक्त्यसमञ्जसं ब्रवीति संकुलं च कथयति । सारासारयोः प्रविवेकविकलः स सारे वाचं संहरत्यसारे च प्रपञ्चयति । यन्महार्थं तत्तिरयति यदल्पार्थं तदुद्भावयति तेन च सर्वत्राधरोत्तरं प्रवर्तयति । अतः सर्वमिदमनिष्टमिति प्रबोध्य ततस्ततो वारणीयः ।

## ( १ ) श्रीशङ्कराचार्यचरितम्

अस्ति केरलेषु पर्वतोपघ्ने[1] पूर्णायास्तटिन्यास्तटे वर्तमानः कालटीत्यग्रहारः । तत्र कर्मठानामनूचानानां विविधविद्याशीलिनां विप्राणां कुलमभूत् । इदं च विद्याधर इति वा विद्याधिराज इति वा समाख्या प्रथितो विप्रवरो भूषयाम्बभूव । अयं ह्यन्वर्थनामा पण्डितपुरोगमो लोकेऽभ्यर्हणीयतां जगाम । गृहसेव्यप्ययं संसारेऽनभिनिविष्टः । कालेनास्य शिवगुरुरिति सुगृहीतनामा तनूजः समजनि स्वस्यानुरूपः । अयमपि पितेव प्रवृत्तिपराङ्मुखो निसर्गतो निवृत्तिमेवाभ्यनन्दीत् । कृतविद्य एष समुपस्थिते गुरुकुलात्समावर्तने गुरुणेत्थमुपदिष्टः—सौम्येतो याहि, दारान्कुरु, समयोऽयं ते द्वितीयमाश्रममुपसंक्रमितुम् , तेन पितरौ प्रीणयेति । एतन्निशम्य शिवगुरुः किञ्चिदुद्विग्नमना अजायत, स्माह च—कृपाकूपारेणात्रभवता शास्त्रमर्माण्युद्घाटयताऽहंतत्त्वं परं बोधितः संसारासारतां च परिचायितः, तेन नाहं सांसारिकेषु भोगेषु रतिं मनागप्युपलभे । गार्हस्थ्यप्रवेशो मेऽनर्थाय भविष्यति कृतप्रणाशाय चेति जाने । अतः कामये त्वत्पादारविन्दशुश्रूषारतो वेदान्तानेवाभ्यस्येयाध्यात्मं च चिन्तयेय यावद् ध्रियेयेति । ततो गुरुणाऽनुयुक्तं न खलु[2] त्वं गृहान्समावर्तितुमिच्छसि । परिव्रज्यायाश्च नैष कालः, गृहाद् वनी भूत्वा प्रव्रजेदिति हि क्रममुपदिशन्ति । किं च 'ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेदि'ति शास्त्रमप्यनुविधेयं सुधिया । पञ्च महायज्ञान्नित्यमनुतिष्ठंस्त्वं कमप्यपूर्वमन्त-

१. पर्वतसमीपे । २. खलु इति प्रश्ने ।

स्तोषमाप्स्यसि स्वेनैव संवेद्यम्। तस्मादिदमेव युक्तरूपं[1] यद्‌ गृही भूत्वा मातापितृशुश्रूषायां निरन्तरायां रमेथा इति। प्राप्ते च संन्यासोचिते वयसि संन्यासं चेद्‌ रोचयिष्यसे परिग्रहीष्यस एव तम्, कस्तेऽन्तरायस्तदानीं भवितेति। एवमनुशिष्टः सान्त्वितश्च शिवगुरुः कुलसंभूतां सवर्णामात्मसदृशीं कामाक्षीं नाम कन्यां विधिवत्परिणीय गृही बभूव। गार्हस्थ्यधुरां वहतोऽस्य सप्तविंशतिर्वत्सरा अत्यायन्, जरत्प्रायतां चायमायात्, पुत्रमुखपङ्कजं सुललितं तु नालभत द्रष्टुम्। ततः शङ्कराचार्यां प्रयतौ तौ दम्पती एकसर्गेण चेतसा प्रावर्तेताम्, तिग्मं च तपश्चिरमतप्येताम्। कालेन प्रणतप्रियः प्रासदद्भगवान्। विक्रमतः पञ्चचत्वारिंशदधिकेष्वष्टसु शतेषु व्यतीते वत्सरेषु पुण्याहे मङ्गल्ये मुहूर्त्ते कामाक्षी सर्वलक्षणोपेतं सुतं व्यजायत[2]। महादेवस्य शङ्करस्य प्रसादादयं जातो जातक इत्यस्य शङ्कर इति नामाकरोत्पिता। यदाऽयमर्भकस्त्रिहायण[3] एवाभूत्तदाऽस्य पिता देवभूयं गतः। ततः प्रभृति मातैवैनमवेक्षिष्ट। पञ्चहायनस्यास्यौपनायनिको विधिरभूत् कुलपुरोहितेन निर्वर्तितः। बटोः शङ्करस्य किमपि विस्मयनीयं सहजं प्रातिभमभूत्। तेन सप्तहायन एवायं श्रुतिपरपारदृश्वतां गतो गुरुकुलात्समावृत्य मातृचरणशुश्रूषारतः कियन्तंचित्कालमजीगमत् अध्याजीगपच्च शिष्याञ्छात्रार्थंसार्थम्, अजिग्रहच्च निगमान्तसारम्।

तदात्वे सर्वत्र भारते वर्षे सौगतं मतं प्रचचार, भिक्षुसङ्घैश्चाकीर्णानि ग्रामनगराणि सरघासमूहैरिव क्षौद्रपटलानि। लोकश्च बुधो वाऽबुधो वा निर्विशेषं वैराग्येणाविष्टः प्रवृत्तिविमुखो निवृत्त्यभिमुखश्चालोक्यत। श्रीशङ्करश्च पितरमनुगतः "कारणगुणाः कार्यगुणानारभन्ते" इति न्यायेनानुक्रमेण लोकं प्रत्युदास्त। संसारबन्धाच्च कथं विमुच्येयेति चासकृदचिन्तयत्सः। इत्थमुदासीनं लौकिकेषु विषयेष्वनास्थावन्तमेनमालोक्याम्बाऽस्य भृशं पर्याकुलाऽभूत्। चिन्तयाम्बभूव च केनोपायेनैनं निवेशयेयं[4] वीतचिन्ता च भवेयमिति।

---

१. युक्ततरम्। रूपप् प्रत्ययः। २. प्रासूत। अन्तर्भूतण्यर्थोऽत्र जनिर्विपूर्वः। 'समां समां विजायते' इति सूत्रकारप्रयोगः। ३. वयसि णत्वम्। ४. परिणयं कारयेयम् (अस्य)।

एकदाऽम्बया, समं शङ्करः कमपि स्वजनं दिदृक्षुर्ग्रामान्तरं प्रस्थितः । अन्तरा च काचिदापगा लङ्घनीयाऽऽसीत् । उभावपि माता च पुत्रश्च सुप्रतरां तां सुखं तेरतुः, प्रत्यावृत्तिसमये च तथैव गाधा सेति विस्रब्धं तामवतेरतुः । परं यावत्तौ मध्येनदि प्राप्तौ तावदकस्मादोघवृद्धिरभूद् वेगश्च तथा प्रवृद्धो यथा तौ चिन्तयाऽनल्पयाऽऽचान्तौ बभूवतुर्मा नौ नदीरयः परिवीवहदिति । तदानीं शङ्करो मातरमाह—मातरिदानीमेव मया देवादेशः श्रुतः । अयं चेदम्परः—सद्योऽहं लोकात् पराङ्मुखीभूय प्रव्रजिष्यामीति मयात्रैव प्रतिज्ञातव्यं नो चेदुभयोर्नौ नद्यम्भसि निमज्जनं व्यवस्थितमिति । अतोऽनुजानीहि मां प्रव्रज्यायै । हीयते वेला । त्वरितमवधारयेति । एतदाकर्ण्य सा वज्राहतेव क्षणं मुमोह । ततः प्रकृतिमापन्ना सा विविधमनुशशास सुतम्—वत्स ! त्वमस्येकको मे सुतः । वृद्धाया विवशाया अनाथाया मे यष्टिः । त्वामन्तरेण कथं जीविष्यामि मन्दभागा । को वा मां चिन्तयिष्यति प्रव्रजिते त्वयि । कश्चाग्निक्रियादि निर्वर्तयिष्यति संस्थितायाः[1] मम । तस्मात्संन्यासे मतिं मा कृथा मा च गेहात्प्रस्थिथा इति । भूयोपि शङ्करो वत्सलां तां स्माह—मातर्मा स्म त्वां मूमुहन्मिथ्याभिरागो मयि । मत्प्राणान्परीप्ससि चेदद्यैवानुमन्यस्व मे विज्ञप्तिम् । किं च शिष्टाचरितां पदवीमनुयियासामीति नाहं वारणीयः । अन्यथोपस्थित एवोभयोर्विनाश इति । इत्थं प्रेर्यमाणा भीतभीता माता कामाक्षी सुतस्याभ्यर्थनां तां कथंचिदनुमेने । ततस्तौ क्षेमेणापगापारं गतौ गृहं च प्रत्यागतौ । ततोऽहःकतिपयेष्वतीतेषु शङ्करो गृहात्प्रस्थातुमियेष ज्ञातींश्चाकार्य प्रार्थयामास माता मे साधीयोवेक्षणीयेति । पुत्रवियोगमसहमाना जननी पुनरपि प्रतिरुरोध संन्यासम् । शङ्करश्च तां स्मारयामास प्रतिज्ञां देवतासाक्षिकाम् , प्राबोधयच्च महान्तमुपसर्गं तस्यामपरिपालितायाम् । ततः सुतरां विकलकरणां शोकपरिप्लुतामम्बामालोक्य शङ्करस्याप्यन्तरङ्गं किमपि प्रार्थ्यथिष्ट, पर्यश्रुणी चास्याक्षिणी अभूताम् । अम्ब ! एवं विधिविधत्ते । नियतिरियमलङ्घनीया । मन्ये निर्भाग्यस्य मे मातृचरणशुश्रूषालाभो नास्तीति । मद्विरहिता त्वं कथं गमयिष्यसि कालमिति

१. मृतायाः ।

चिन्ता मामत्याचामतीव। परं किं कुर्वे देवादेशोऽप्रत्यादेश्यः प्रतिश्रवश्च रक्षणीय इति। तदा माता दीर्घमुष्णं च निःश्वस्याह—अस्तु, नाहं ते प्रयाणं विरुन्धे यदि परं प्रतिजानीषे वत्सरे सकृत्त्वामुपेत्य द्रक्ष्यामीति। एवमहं धारयिष्यामि जीवितमन्यथा सम्प्रत्येव सिञ्च मे तिलोदकमिति। इदं निशम्य श्रीशङ्करः क संन्यासः क च कादाचित्कोपि स्वजनसंसर्ग इति जानानोपि वैषम्यं मातृप्राणाः परित्रातव्या इति यथादिष्टं प्रत्यजानीत।

द्राक्च निरगादुपास्थाच्च कान्तारमतीत्य नर्मदातीरगं श्रीगौडपादशिष्यस्य यतो गोविन्दनाथस्याश्रमम्। विविधं चास्तावीद् गुरुवर्यम्। ब्रह्मसंस्थामधिजिगमिषुरहं त्वामुपसीदामिति च निभृतं[1] न्यगादीत्। समाधेर्व्युत्थितो गुहागतः स भगवाञ्श्रीशङ्करे व्यापारयँल्लोचने अपृच्छच्च को भवानिति। तदा सोऽश्रुतपूर्वमिदमुत्तरमुत्तमं प्रादात्—

स्वामिन्नहं न पृथिवी न जलं न तेजो
न स्पर्शनो न गगनं न च तद्गुणा वा।
नापीन्द्रियाण्यपि तु विद्धि ततोऽवशिष्टो
यः केवलोस्ति परमः स शिवोहमस्मि॥

इदं निशम्य विशेषविदेव प्रत्यगात्मनि प्रबुद्धः पुंसामुत्तमो दुर्लभः शिष्येष्विति समुपात्तहर्षस्तं शिष्य इति परिजग्राह श्रीशङ्करस्य प्रदीप्ताभ्यां प्रज्ञामेधाभ्यामलोकसामान्याभ्यां परं विस्मयमुपागमद् गुरुरतिरिक्तं चाह्लादम्। श्रीगोविन्दपादस्याश्रमे वसञ्श्रीशङ्करोन्तर्वाणिरपि[2] सन् विशेषेण पुनरधिजगे वेदवेदाङ्गानि दर्शनानि धर्मप्रवचनानि च सारं च सारस्वतं जगृहे। यदा चायं दशवर्षदेश्योऽभूत्तदार्हत्येष गुण्यो ब्राह्मणस्तुर्याश्रमं प्रवेष्टुमिति तस्मै दण्डपात्रादि प्रदाय तं विधिवत्संन्यासे दीक्षयामास "शङ्कराचार्य" इति च तस्य नामाकरोत्।

गुरुमनुमान्याश्रमात्प्रस्थितः शङ्कराचार्यो दिशो विदिशश्च विजेतुं हिमगिरिशेखरां सागरमेखलामिमां भरतभुवं भ्रमितुं प्रचक्रमे। सर्वत्र देशे वेदान्वेदान्तांश्च प्राचीचरत्। इदं चाजूघुषदनादिनिधनस्य ब्रह्मणो वि-

१. विनीतम्, सप्रश्रयम्। २. शास्त्रविदपि।

वर्त एष लोकः, मायाप्रपञ्च एवायमवास्तवो व्यवहारमात्रसत्ताकः, ब्रह्मैवैकमद्वितीयं परमार्थसदिति। निरीश्वराणां सौगतानां च विविधानि मतान्यपूर्वेण स्वेन प्रेक्षाबलेन निरास्थत्। तान्त्रिकाणां कदाचारांश्च बलवज्जगर्हे। शिवभागवतानां[1] भागवतानां च बाह्यलिङ्गेषु धर्मबुद्धिं प्रत्याचचक्षे। तेनेह बहवो विमानिता वयमिति शङ्करस्वामिन्यवैरायन्त।

तदानीमिह देशे सुधन्वा नाम राजा वसुमतीं शशास सौगते मते स्थितः। [2]तन्निगममुपेत्य निगमान्तकेसरी श्रीमदाचार्यस्तदास्थानीगतैर्विपश्चिद्भिर्वादमैच्छन्निर्णयान्तम्, पर ते तस्याद्भुतां प्रतिभां प्रत्युत्पन्नमतितां शास्त्रपारावारपारीणतां च श्रुतवन्तः श्रुतवन्तोप्यबिभयुस्तत्संमुखं च नोपायुः। परमल्पश्रुतोऽपि सुधन्वा सुमतिरासीदिति श्रीमदाचार्यस्य व्युत्पत्तिं प्रतिभां च प्रथितां कर्णे कृतवानासीदिति च व्यादिशद्राजसभापण्डितान्वादः प्रवर्त्यतामिति। एवमादिष्टास्तेऽनिच्छन्तोऽपि श्रीशङ्करेण वादं पर्यग्रहीषत। तत्राचार्यवर्योऽखण्डनीयैस्तर्कैर्दुरुत्तराभिश्च वाचो युक्तिभिस्तेषां निरीश्वरवादं शून्यवादं च निराचकार। ततो निरालम्बं युक्तिविरहाद् दुर्बलं च सौगतं मतमिति व्यवसाय श्रीसुधन्वा वैदिकं मतं शिश्राय श्रीशङ्करे च दृढाभक्तिर्बभूव। पुण्यधामन्यत्र महात्मनि मा स्म कश्चिज्जाल्मोऽपचारीदिति रक्षिवर्गं तेन समसकरोत् स्वयं च साचिव्यं चकार।

सर्वप्रथमं काशीं विजित्य तत्रत्यानामार्याणामाचारविचारयोः सञ्जातं किमपि वैकृतं प्रबोध्य तदपनुत्तये च तान्प्रेर्य बौद्धानाहूत वादाय तन्मतं च तर्कैः कुलिशकठिनैरदयं निराकृत। काशीतः प्रस्थाय स गिरिकाननान्यनेकान्यतिक्रम्य बदरीं पुण्यभूमिं प्राप तत्र च वसतिं चकार। तत्र वर्तमान ऋषिभिर्वादं प्रवर्तयमानो द्वादशवर्ष एवायं ब्रह्मसूत्राण्युपनिषदो भागवतीश्च गीता व्याचकार, उपदेशसहस्रिकादीननेकान्ग्रन्थांश्च जग्रन्थ।

बदरीतः स दक्षिणामाशामालम्ब्य प्रयागमगमत् कुमारिलं भट्टाचार्यं जिगीषुः। श्रीकुमारिलस्तदानीं तुषानले पतितः कालमेवोदैक्षत। ततोऽसौ

[1] शिवो भगवान् भक्तिरेषां तेषाम्। [2] तस्य पुरम्।

रेवाकूलवर्तिनीं माहिष्मतीं नाम नगरीं प्रतस्थे । इमां च दिगन्तविश्रान्तकीर्तिः प्रदीप्तब्रह्मवर्चसः[1] सर्वतन्त्रस्वतन्त्रः प्रवृत्तिशास्त्रैकनिरतो मीमांसकधूर्वहः श्रीमण्डनोऽध्युवास । अस्यैव दिदृक्षया श्रीमदाचार्य इह प्राप। मण्डननिकेतनं जिज्ञासमानः स भगवान्मध्याह्ने जलाय गन्त्रीस्तद्दासीः प्रपच्छ क मण्डनपण्डितौक इति । ततस्ताः—

स्वतः प्रमाणं परतः प्रमाणं कीराङ्गना यत्र गिरो गिरन्ति ।
द्वारस्थनीडान्तरसन्निरुद्धा जानीहि तन्मण्डनपण्डितौकः ।।

इत्यादिश्लोकत्रयेण प्रत्यूचिरे चिरस्य जातां चास्य दिदृक्षामुपचिक्रियरे। एवं कृतसंकेतः श्रीमदाचार्यः श्रीमण्डनस्य सदनमाससादाभ्युवाद च—सौम्य विवादभिक्षामिच्छंस्त्वत्सान्निध्यमागतोस्मि, साऽन्योन्यशिष्यपणा प्रदेया, प्राकृतभद्यभैक्ष्ये ममादरो नेति । ततः श्रीमण्डनः प्रत्युवाचाद्योदितानि मे भाग्यानि परिणतानि च मे सुचरितानि यदार्यो मे गृहान्संभावयति विवादं च मया समं सम्प्रार्थयते । ममाप्येष कामश्चिरन्तनोद्य समृद्ध इति महान्प्रहर्ष इति । यतिवर्यः श्रीशङ्करस्तावत्प्रास्तावीदत्र विवादे नौ जयपराजययोरुदारधिषणाऽत्रभवतः सहधर्मचारिणी भारती साक्षिणी भविष्यतीति । मण्डनश्चाम् इत्यवोचत् । ततः शीशङ्करः प्रत्यजानीत ब्रह्मैवैकं परमार्थसच्छुक्तौ रजतवत्स्वमायया विश्वप्रपञ्चरूपेण भासते । तज्ज्ञानात्सर्वस्यास्य प्रपञ्चस्य लयस्तेनात्मस्थितिरूपो मोक्ष इत्यत्र श्रुतिशिरोवचनानि मानमिति। गृहमेधिवर्यः श्रीमण्डनस्तु चित्स्वरूपे परे पदे वेदान्ता न प्रमाणकोटिमाटीकन्ते, कर्तव्यकलापे पूर्वमीमांसैव जैमिनिप्रोक्ता प्रमाणम् , शब्दानां कार्यमात्रं प्रति शक्त्यभ्युपगमात् । कर्मभिरेव मुक्तिरिष्टा तनुभृताम् , इमानि चायुषः परिसमाप्तेराचर्याणीति समगिरत । एवं संवृत्ते मिथः समये समुपन्यस्ते च यथायथं पक्षे दिनकतिपयानि प्रावृतद्विवादः कृतिनोस्तयोः । अन्ते च भारती निणयमदाज्जितो मे भर्ता यतिवरेणेति । एतेन विजयेनाचार्यशङ्करस्य प्रथितमपि वैदुष्यं प्रथिततरमभूत् । अजय्योयं तर्कावष्टम्भेन केनापि तार्किकतल्लजेनेति च प्रख्यातिराहिमवत आ च कन्यान्तरीपात् प्रासरल्लोकेषु ।

1. ब्रह्मणो वर्चो ब्रह्मवर्चसम् । अच् समासान्तः ।

एवं सर्वत्र सन्ततं सौगततमिस्रं स्वीयेनालोकसामान्येन ज्ञानालोक-
नापहृत्य सतामभिगम्योऽसतां चाप्रधृष्यः प्रतिवादिनां च भयङ्करः श्री-
शङ्करः केदारनाथे स्थितो द्वात्रिंशद्वर्ष एव पादोदर इव निर्ल्वयनीं भौतिकीं
तनूमपास्य शिवसायुज्यमाप ।

शिशोरपि श्रीशङ्करस्य स्वर्णरजतादिषु हीरकमौक्तिकेषु चाश्मखण्डा एत
इति बुद्धिरासीत्परा च निःस्पृहता वैषयिकेषु सुखेष्वितिवृत्तेनैकेन समुद्भा-
व्यते। एकदा केरलाधिपतिः स्वममात्यमाज्ञापयद् बालमप्यबालबुद्धिप्रभा-
वमतिमर्त्यशक्तिसमन्वितं श्रीशङ्करं शृणोमि तत्पादरजसा चात्मानमुद्धर्तु-
मिच्छामीति । तेन द्विरदरत्नमेकं प्राभृतीकृत्यानुनय तमस्मान्संभावयेति ।
अमात्यश्च यथादिष्टमकरोत् । श्रीशङ्करस्तु तद्वाचिकमाकर्ण्य प्राभृतं च
विलोक्य स्वस्यासङ्गतामलोलुपतां च विशदयन्स्माह—निगमान्तविशार-
दानां विप्रबटूनां कृते शाकं रूक्षं भैक्ष्यमन्नमजिनं च परिधानं विधत्ते, वर्णा-
श्रमधर्मश्च न जातु हेय इति च ब्रूते । नैजमाचारं विहाय परार्ध्यैर्दन्तावलै
राजार्हैः किं नु करिष्यामः । तस्मान्नैवं पुनर्वाच्यं नास्मदादयः स्वधर्मात्प्र-
च्याव्याः । एवं सन्तर्जितोऽमात्यप्रवरः प्रत्यगाद्राजानं प्रण्यगादीच्च वृत्तं
यथातथम् । ततः स राजा स्वयमेव श्रीशङ्करस्य पादमूलमुपेतो हाटका-
युतं च समर्प्याशिषो ययाचे । महासत्त्वः स बालोऽभीष्टाः प्रादादाशिषः,

नो हिताय मम हाटकमेतद् देहि नस्तु गृहवासिजनाय ।

इति चोक्त्वा [1]परादादुपग्राह्यमग्राहयच्च[2] स्वस्यागृह्णुतां तं महीपम् ।
अमेध्यादपि काञ्चनं ग्राह्यमिति न्यायमनुसरन्नहयुतालेशेनास्पृष्टो
ब्रह्मवादी श्रीशङ्करो विनीतोऽप्यात्मानं विनीततरमिच्छन्सवदा सर्वतः सुभा-
षितमादित्सुर्जघन्यजेनापि क्रियमाणामनुशिष्टिं प्रति बद्धादरोऽभूत् ।

[3]खस्वस्तिकमारूढेऽग्निगर्भैर्मयूखैस्तपति तपने श्रीशङ्कर आह्निकवि-
धित्सया सहशिष्यो जाह्नवीमियाय । मार्गे सोन्त्यजं भीषणैश्चतुर्भिरनुसृतं
[4]विश्वकद्रुभिर्ददर्श दृष्टमात्रं च तं दूरमपसरेति निजगाद । यदा च—

---

१. निराकरोत्, प्रत्याख्यात् । २. उपायनम् । ३. नभोमध्यम् ।
४. श्वाखेटकाभिः ।

गच्छ दूरमिति देहभृता हो देहिनं परिजिहीर्षसि विद्वन्।
भिद्यतेऽन्नमयतोऽन्नमयं किं साक्षिणश्च यतिपुङ्गव साक्षी॥
ब्राह्मणश्वपचभेदविचारः प्रत्यगात्मनि कथं तव युक्तः।
बिम्बितेऽम्बरमणौ सुरनद्यामन्तरं किमपि नास्ति सुरायाम्॥

इत्यमृतसहोदराणि श्रुतिशिरःसारभूतानि वचांसि शुश्राव तदातीव प्रससाद बभाण च सहजामालम्ब्य विनीतताम्—

सत्यमेव भवता यदिदानीं प्रत्यवादि तनुभृत्प्रवरैतत्।
अन्त्यजोयमिति सम्प्रति बुद्धिं सन्त्यजामि वचसाऽऽत्मविदस्ते॥ इति।

यद्यप्याचार्यवर्यो यत्र क्वापि स्त्रीपुंसयोर्धर्मव्यतिक्रमं धर्मे त्रिपुण्ड्रादि-लिङ्गप्राधान्यं मलीमसा वा पौरुषेयीर्व्यवस्था लुलोके तत्रैव बलवज्जगर्हे। तथा हि बौद्धानां वर्धमानं कदाचारं तान्त्रिकाणां व्यभिचारं शैवानां वैष्णवानां च बाह्यलिङ्गादिपरतां प्रकाशं निनिन्द। तथापि सर्वत्र समदर्शनः सर्वस्य शन्तातिमिच्छन्मनसापि विपक्षाणामर्थहानिं वा मानहानिं वा प्राणहानिं वा नाचीकमत। एकदा किल मध्यदेशेश्वरः कश्चित्सौगतैः समं श्रीमत आचार्यस्य विवादं संव्यदधात्। अयं च तत्र समयः स्वीकृतोऽभूत्—योऽत्र वादे पराभविष्यति स समिद्धे हिरण्यरेतसि प्रक्षेपमवाप्स्यतीति। अयं खलु महीपः समिद्धशक्तित्रयोपि मन्दमेध इवासीत्। शास्त्रार्थचर्चातः प्राक् स वादिप्रतिवादिनः, सम्बोध्यावोचत्—चिरं शास्त्रं विमृशतां स्वमतसमर्थनायां परमतनिराक्रियायां च वाचोयुक्तीरनेकाः प्रयुञ्जानानामत्रभवतां मध्ये कतर उत्तरोऽभूत्कतरश्चाधर इति कः प्रमास्यते कथं चेति न विद्मः। मन्दस्याप्यमन्दमेतद्वचनं निशम्य सर्वे संप्रावदन्त[1] साधु भवान्पश्यतीति। ततो राजमन्त्रिणा रिक्तं पात्रं सपिधानं संनिधाप्योक्तं ब्रूत भोः पण्डिततल्लजाः किमस्यान्तर्निहितमिति। इदं चावेत[2] यः शक्नुयादनुयोगमिममुत्तरीतुं स जयभाग्भवेदिति। सौगताः प्रत्येकं यथामनीषमिदमस्यान्तरिति, एतदस्यान्तरेऽस्तीति च प्रत्यवोचन्। आचार्यपुरोगमस्तु भीषणः कृष्णसर्पोत्र वर्तत इति प्रत्यवादीत्। एतदा-

१. व्यक्तवाचां समुच्चारण इति तङ्। २. अवपूर्वादिणो लोण्मध्यमबहुवचने रूपम्। जानीतेति चार्थः।

कर्णोभौ राजमन्त्रिणौ सौगताः श्रीशङ्कराचार्यश्च समं वितथवाचोऽधर्मज्ञा
अधार्मिकाश्चेति सेनाते । परं यदा श्रीमदाचार्यस्यानुरोधेन पिधानमप-
निन्ये तदा सत्यमेवान्तरवस्थितः फटाटोपभयङ्करो विषधरो ददृशे । एते-
नाश्चर्य्येण परवन्तौ राजमन्त्रिणौ यतिपुङ्गवं साष्टाङ्गं प्रणेमतुः । सौगतैः-
सह विवादे श्रीशङ्करः सर्वपथीनया धिषणया सर्वातिरिक्तेन च तर्क-
सामर्थ्येन तत्तत्तेषां मतं प्रतिचिक्षेप, परं दयार्द्रचेता उदारचरितोऽयं महा-
त्माऽग्निकुण्डे प्रासनममीषां प्रत्यादिदेश । तस्माद्ये केचिदाहुरेतद्देशजानां
बौद्धानामुपपीडने समुत्सादने वा श्रीशङ्करः प्राचोदयत्तादात्विकान्नृपतीन्
प्राकोपयच्च प्रजास्तत्रादयं वर्तध्वमिति तदेतेन प्रत्युक्तं वेदितव्यम् ।

इह भारते वर्षेऽर्वाग्वक्रमतो न बहवोऽभूवंस्तत्त्वं चिन्तयितारः पर-
मार्थं प्रतिपत्तारो मन्तारः शास्त्रौघं वा बोद्धारो ये श्रीशङ्कराचार्य्येण
शक्यास्तुलयितुम् । सौगतोपप्लवं शमयितुमनीशा दैन्यपरीताः प्रकृष्ट-
प्रज्ञानाः समेऽपि नैयायिका उच्चकैराक्रन्दन्नभ्युपपत्तारमिति तत्कृतिभ्यः
शक्यमनुमातुम् । आचार्यवर्य एव प्राभवत्तान्सौगतान् परासितुम् । अद्य-
त्वेऽपि न केवलमिह देशे विदेशेऽपि महानस्यादरो विशेषज्ञेषु । एतदुपज्ञम-
द्वैतवादः सार्वत्रिकीं विचारसरणीमस्पृशत्पर्यवर्तयच्चेति सार्वलौकिकम्[1] ।
शर्मण्यदेशे शोपन्हारडासन्प्रभृतयस्तत्त्वज्ञा विमशोकाः श्रीशङ्करस्य कृति-
भिर्वासितान्तःकरणास्तेन तेन तदीयेन भावेनोपरक्तास्तस्य भगवतो जगद्-
गुरुतां प्रतिपन्ना इति न निरालम्बं वचः । अत्र तु स विशेषदुर्लभो
यः पण्डिताख्यां भजते, श्रीशङ्कर-प्रतिपादितं विवर्तवादं च न प्रति-
पद्यते तत्प्रवणो वा जायते । अदृढाः प्लवा ह्येते यज्ञरूपा इति मते
स्थितोऽपि स्वात्मप्रतिलम्भमेव परं मन्यमानोऽपि स भगवान्न हि यस्य
कस्यचित्प्राकृतस्य कर्मसु प्रवृत्तिं न्यषेधीन् । इत्थं हि स प्राबूबुधल्लोकम्—
अलङ्कारो ह्ययमस्माकं यद्ब्रह्मात्मावगतौ सत्यां सर्वकर्तव्यताहानिः कृत-
कृत्यता चेति । तेनानतीतव्यवहारावस्थितिकानां नैष्कर्म्यं नोपादिशत्सः ।
तस्माद्यदत्र केचिदाहुराचार्यशङ्करः सर्वं लोकमविशेषेण प्रव्रज्यायै प्राचूचुद-

1. सर्वस्य लोकस्य विदितम् ।

न्मर्यादाश्च सर्वाः समकिरदिति तन्निरुक्तेन वचनेन प्रत्याख्यातपूर्वमिति वचनान्तरं नापेक्ष्यते ।

भगवतः शङ्करस्य कृतयोऽपि महतोऽमहतश्च सर्वस्य लोकस्य महिताः[1]। प्रसन्नगवीगुम्फा अत्यमृतमाधुर्यप्राग्भारभृता ललितपदबन्धा आचार्यस्य प्रबन्धा यत्सत्यं मधुनो धाराः प्रक्षरन्ति, [2]अध्यायकानामध्यापकानां च हृदयानि समं समाकर्षन्ति । ब्रह्मसूत्रभाष्ये न केवलमसाधारणी तर्कप्रयुक्तिर्वाग्घोरणी चापि । इदं हि पदवाक्यविन्यासेनापूर्वेण व्याकरणमहाभाष्येण बृहदारण्यकेन च संवदतीति प्रतिपन्नं प्राच्यैः प्रतीच्यैश्च पण्डितैः । किं बहुना । आदिकवेर्वचः किञ्चित्परिवर्त्य प्रकृते शक्यमिदं भणितुम्—

यावत्स्थास्यन्ति गिरयः सरितश्च महीतले ।
तावद्धि शाङ्करं भाष्यं लोकेषु प्रचरिष्यति ।। इति ।

इदं चोदाहृत्या प्राचां वचनं प्रकृतमुपसंहरामः ।

वादिव्रातगजेन्द्रदुर्मदघटादुर्गर्वसंकर्षणः
श्रीमच्छङ्करदेशिकेन्द्रमृगराडायाति सर्वार्थवित् ।
दूरं गच्छत वादिदुःशठगजाः संन्यासदंष्ट्रायुधो
वेदान्तोरुवनाश्रयस्तदपरं द्वैतं वनं भक्षति ।। इति ।

## ( २ ) महात्मनः श्रीगान्धिनश्चरितम्

अर्थकामयोः प्रसक्तं हिंसाभिरक्तं स्वार्थानुसन्धानपरं लोकमिमं पावनेनानुशासनेनावदातेन च स्वचरितेन समुद्धर्तुं रामराज्यं चेह प्रतिष्ठापयितुं द्विपदां वरिष्ठो मुनिवृन्दारकवृन्दवन्द्यः कोटिशो नराणां नायकः सविग्रहो धर्म इव महात्मा श्रीगान्धी बाणनेत्राङ्कशशाङ्कमिते विक्रमवत्सरे कार्तिकस्य मङ्गल्यायां कृष्णप्रथमायां पोरबन्दरपुरे गुण्याच्छ्रीकर्मचन्द्रात्प्रातःस्मरणीयायां 'श्रीपुतलीबाई' देव्यां सत्यामजायत । अमा-

---

१. पूजिताः । २. अध्येतॄणाम् ।

त्य 'कर्मचन्द्रेणा' धीष्टः पुरोधा अस्य पृथुकस्य जातधर्मादिक्रियाः शास्त्रदृष्टेन विधिना व्यधात् । ततो दशम्यामुत्थाय पिताऽस्य मोहनदासकर्मचन्द्र गान्धीति नामाकरोत् । द्वादशवर्ष एवायं 'कस्तूरबाई' इतिनामधेयामात्मनः सदृशीं सवर्णां कुलोद्गतां कन्यामुपायंस्त । प्रथमे वयस्येव श्रीमोहनः प्रकृत्या ऋजुः सत्यप्रवणश्चासीत् । मातापितृशुश्रूषण उपोषणे चास्य रतिरभूत् । तत्र मातृचरितमेवास्य प्राभवच्चेतसः । स्वदोषप्रख्यापनमप्ययं पर्यशीलयत् । इदमेवास्य भविष्यतो महिम्नो बीजमभूत् । राजकोटे भावनगरे चायं शिक्षामुपादित । मध्य एवायं छात्रोऽभून्नातिपटुर्नाप्यपटुः । ततोऽपरिसमाप्यैव कालेजशिक्षां विधानाधीतये इङ्गलेण्डमगात् । प्रस्थानात्प्राक् च मात्रे प्रत्यजानीत—"सुरां न पास्यामि, मांसं नाशिष्यामि, व्यवायं[1] च वर्जयिष्यामी"ति । तदनुगुणमेव चाचरद् विप्रोषितः, न च मनागपि ततो विचलितः ।

विधिज्ञपरीक्षां विधिवदुत्तीर्य श्रीमोहन इमं देशमावर्तत, विधिज्ञवृत्तिं च कञ्चित्कालमुपाजीवत् , न च पुष्कलमायमार्जत् । सुराष्ट्राभिजनैः कैश्चिन्सुहृन्मदीयैः श्रेष्ठिभिराकारितः स दक्षिणाफ्रीकामगात् । तत्र च विंशतिं वत्सरानवात्सीदनेकधा च तत्रत्यान्भरतवर्षजानुपाकार्षीत् । बूरसमाघाते[2] जुलूसम्पराये च स महाभागः शासितॄणां विविधं साहायकं व्यधात् क्षतविक्षतसैन्यव्रणविरोपणादिकर्त्रीं सेवकमण्डलीं च संव्यधात् स्वयं च तामध्यष्ठात् । परं ते शासितारो भरतदेशजेषु न साधु व्यवाहरन् । ते तन्न्यक्करणाभिप्रायकान्किथतोऽपि विधीनभ्युपायाननुविधेयांश्च निरदिशन् । यदा च श्रीगान्धी प्रत्यादिश्यन्तामिमे विधय इत्यभीक्ष्णं सानुनयं सयुक्तिकं च मन्त्रिणः प्रेर्यापि कृतितां नायात्तदा तानन्याय्यं तं समाचारं प्रबोधयितुं तांस्तान्विधींश्च परिवर्तयितुं सत्याग्रहं प्रावर्तयत् । अयं हि तस्य निष्प्रमाथे प्रतिरोधे प्रथमोऽनुभवोऽभूत् । अस्य सत्याग्रहस्य हेतोः श्रीगान्धी राज्याधिकृतैः कारावासं लम्भितः, रक्षिभिरितरैश्चावमानितस्ताडितश्च । सर्वमिदमाभील[3]मवहेलनं च स महामनाः........

1. मैथुनम् । 2. युद्धे । 3. कष्टम् ।

प्रमनाः स्मेराननस्तूष्णीं पर्यमृष्यच्चेतसाऽपि च कष्टदानामशिवं नान्वध्या-सीत्। कारायां निरुद्धोऽयं स्मटसमहाभागस्य कृते उपानद्युगलं निरमा-सीद् यद्यापि सोऽभ्यागतेभ्यः प्रीतिदाय इति प्रदर्शयति। दक्षिणाफ्रीका-राजमन्त्रिणोऽनिच्छन्तोऽपि श्रीगान्धिनोक्तं प्रत्यपद्यन्त संयतं च तं व्यसर्ज-यन्त। अत्रान्तरे स स्वकां चर्यां भूयसा पर्यवीवृतत्। आरण्यकवद्वा तापस-वद्वा प्रयत आचारे यतश्च व्यवहारेऽभूत्। अन्वभूच्चाहिंसा नानापक्रियाणां प्रतिक्रियायां स्वस्य धर्मनिष्ठायाश्चाविचाल्यतायां दृढं साधनमिति। चिरं चारंस्त दैवतोपासायाम्। स्वस्य लोकस्य च निरन्तरयाऽकारणया च वरि-वस्यया[1] हृदयान्यावर्ज्यं तेन संमानितो विसर्जितश्च भरतभूखण्डं प्रत्ययात्।

नेत्रमुन्यङ्कचन्द्राब्दे वैक्रमे श्रीगान्धी मुम्बापुर्यां पोतादवातरत्। तस्मिन्नेवाब्दे शिवपुर्यां वाराणस्यां हिन्दुविश्वविद्यालयस्य शिलान्यासो लार्डहार्डिञ्जमहोदयेन श्रीमालवीयप्रार्थितेन करणीय आसीत्। तत्राव-सरे श्रीगान्धी चाप्यभ्यर्थितः संनिधानेन[2]। नायं तदा लोकस्य संस्तुतोऽ-भूत्। कृतविद्या वार्तापत्रादीनामध्येतारश्चैव तं समस्ताविषुः[3]। निमन्त्रिता राजानो महाराजाश्च तत्र संन्यधीयन्तायमपि। तत्र विद्यालयाधिकृतै-रुपदिशतु नो भवानिति विज्ञप्तः स यां सत्यां पथ्यां च वाचं प्रव्यक्रम-त्रस्तं चावोचत्तस्याः किञ्चिदेवोद्धृत्येह विन्यस्यते—यस्मिन्नुज्ज्वले श्रीमति मण्डपे राजप्रतिनिधिना शिला न्यासि तत्र भवद्भिः किमदर्शि यदि [4]पेरेसरत्नकराणामग्र्योऽपि कश्चित्तत्राभविष्यन्नूनं रत्नभाभिस्तस्य चक्षुष्प्र-तिघातोऽभविष्यत्। हीरकमौक्तिकादिप्रचयं वहत इमानीश्वरान्महेश्वरांश्च दृष्ट्वा भरतवर्षीयाणां कोटिशो जनानां च दुर्दशां मनसिकृत्येदमेवैनान-भिधित्सामि—भ्रातरः! यावदिमानि हीरकमौक्तिकादीनि शरीरादवरो-प्याकिञ्चनेभ्यो न वितीर्यन्ते तावद्देशस्याभ्युत्थानमसंभवि। लार्ड् हार्डिञ्ज-महोदयः श्रीजार्जः पञ्चमो वा नेच्छति राजानुरक्तिप्रदर्शनाय त्रिचतुरा मञ्जूषा विरिच्यापादचूलं रत्नानि प्रणिधाय तानुपासीमहीति।

तत्रैव संवत्सरे काङ्ग्रेसपरिषद आब्दिकमुपवेशनं लक्ष्मणपुरेऽभूत्।

---

१. शुश्रूषया। २. हेतौ तृतीया। तृतीयैवात्र व्यवहारानुगता न द्वितीया। ३. पर्यचैषुः। ४. रत्नपरीक्षकाणाम्।

तदापि जनकदम्बकं श्रीगान्धिनं साधीयो नावेत्। यद्यपि दक्षिणाफ्रीकायां कृतस्य लोकसंग्रहस्य कारणात् सबहुमानमस्य नामधेयमकीर्त्यत जन-पुरःसरैः। ततः परिणते विश्वाभिव्यापिनि महासंख्ये राज्याधिकृतै रौलट्-विधानानि सर्वलोकविद्विष्टानि प्रवर्तितानि तद्विरोधाय च महात्मा ( एष ह्यस्यातःप्रभृति व्यपदेशोऽभूत् ) यत्र तत्र देशे सत्याग्रहार्थाः समजीघट-त्सभाः। सर्वो भरतवर्षस्थो जनो महात्मनश्चोदनामभिनन्द्य तद्विधान-विरोधे तदतिक्रमे चानभिशङ्कितं प्रवृत्तः। स्वभावसरलतया पूताचारविचार-तयाऽकारणहितैषितया सत्यसङ्गरतया तेजस्वितया च महात्माऽचिरेण जनताहृदयान्यहार्षीत्। स हि तेषामाशानिबन्धनं जातः। एवं खलु प्रत्यभाल्लोकम्—आत्माऽनात्मना संग्रामयते[1]ऽहिंसा हिंसया सत्यं चास-त्येनेति। संघटनेऽपि काप्यदृष्टचरी नैपुणी तस्य सिद्धेति स त्वरिततरं जननायकतामयासीत्। सर्वत्र च व्यतिकरे जनताहृद्गतानभिप्रायानञ्जसा[2] विद्वान्भावितान्तरो[3]ऽधरीकृतनायकान्तरो महात्माऽल्पीयसाऽनेहसा केवलो धूर्वहो जातः।

खद्गगङ्कचन्द्रमिते ख्रिस्तवत्सरे सोऽसहोद्योगान्दोलनं प्रावर्तयत्। तेन सर्वस्मिन्देशेऽभूतपूर्वोऽवृतत्संक्षोभः। हिन्दवो मुहम्मदीयाश्च संभूय ब्रिटिशशासनं व्यरुधन्। परं "चौरीचौरा" इत्यत्र प्रकुपितैः कैश्चित्प्रम-थिता गुल्मस्थाः केचिद् रक्षिण इति दूनचेता महात्मा व्यरीरमदसहयो-गम्। तत्कालमेव चासौ राजप्रतिनिधिनाऽऽसेधं गमितः, षडब्दांश्च कारावासं लम्भितः। परं वर्षद्वयाऽभ्यन्तर एवाभ्यान्त[4] इति विसर्जितः। वेदद्गगङ्कचन्द्राब्दे ख्रिस्तीये स बलग्रामे काङ्ग्रेससम्मेलनस्य सभापतिपदे स्थितः काङ्ग्रेसकर्तव्यकलापे ग्रामोद्धारं खादीप्रचारसङ्घनिर्माणं चान्तरक-रोत्। तत आरभ्याब्दचतुष्टयं महात्मा खादीकार्यमेवावाधात्। साबरमत्यां तस्याश्रम एतद्देशजानां विदेशजानां चागन्तूनां तीर्थतामयात्। अयं च जगति जीवतां पुंसामुत्तम इति प्रत्यपादि प्राच्यैः प्रतीच्यैश्च नयकोविदैः। परमस्य यन्त्रनिर्मितवस्तुप्रतिषेधो [5]महावेशनादिविरोधो वर्तमानार्थप्रस-

---

१. संग्राम युद्धे इति चुरादिरनुदात्तेत्। २. समीचीनम्। ३. शुद्धान्तःकरणः। ४. रुग्णाक्रान्तः। ५. आवेशनं शिल्पिशाला।

क्तिनिषेधश्चेह देशे परत्र च द्वेष्यतामयुः । केचिदवोचन्नयं लोकस्य विचार-संकोचं चिकीर्षति । प्रष्ठं[1] वा जनौघं पृष्ठतः कर्षति । इदमस्थाने इदमसंभवि । नायमत्र सकामो भवितुमर्हतीति । अपरे सर्वेषु वृत्तान्तेष्व-विशेषेण सत्यनिष्ठामेवानेनानुशिष्यमाणां न साम्प्रतिकीमदर्शन् ।

वसुनयनाङ्कचन्द्रमिते ख्रिस्तीये हायने साइमनधिष्ठितं गौराङ्ग-मण्डलमिह देशे प्राप्तं सर्वत्र च लोकैः परिहृतम् । तत्र लोकप्रवर्तनायां महात्मैव हेतुतामगमत्सकामतां च । शमप्रधान उदारमतिः श्रीगान्धी बला-त्कृतिं नाभ्यरोचयत्, सामप्रयुक्तां प्रेरणामेवार्थकरीममन्यत, प्रत्यर्थिने-ऽवसरो देय इति च साध्वजानीतेति सहसाऽस्य देशस्य नात्यन्तायाङ्गलैः सम्बन्धविच्छेदमकामयत, तदायत्तामेव देशेऽन्तर्व्यवहारेषु स्वच्छन्दतामै-हत । परं यदा लार्डअर्विन्महोदयः किमपि प्रतिश्रोतुं नापारयत्तदा महात्मा सविनयाय शासनातिक्रमाय प्राचोदयल्लोकम् । प्राणयच्च लोकविश्रुतां डाण्डीयात्राम् । ततो गान्ध्यर्विन्सन्धिः स्वीकृतिमगादान्दोलनं च विर-तिम् । ततः कांग्रेससदस एककः प्रतिनिधिरिति निर्धारितः स द्वितीयं नन्दनभवं गोलफलकसम्मेलनमुपास्थात् । तत्रापरितुष्टोऽयं यावदेव मु-म्बायां पदमर्पयति तावदेव प्रगृह्यते । प्रगृहीतश्च प्रकृतिपुरुषेण[2] मैक्डान-लेन दत्तमवान्तरजात्यधिकारनिर्णयमन्त्यजविश्लेषकरं हिन्दुजातेविघ-टकं सम्पश्यंस्तद्विरोधाय प्राणानामपि पणते प्रायोपवेशनं च श्रयते । तेन सहसाऽवबुध्यते चिरस्य निद्रितः सर्वोऽयं लोकः । शतशोऽन्त्यजेभ्यः प्रतिषिद्धद्वाराण्येकपद एव विव्रियन्ते देवतायतनानि । यत्सत्यं प्रातिहा-र्यमिव वर्तते । ततः पुण्यपत्तनसन्धिर्निर्वर्तते, श्रीगान्धी च पुण्यपत्तनका-रातो विमुच्यते प्रायश्च[3] समाप्यते ।

अत्र ऊर्ध्वं महात्मा राजानीतिक्षेत्रात्परावर्तत । हरिजनोद्धार एव च काश्चित्समाः सर्वात्मना व्यापृत । बाणाग्निनन्दचन्द्रमिते ख्रिस्तीये वत्सरे धारासभाः पुनरपि संशोधिता अभूवन्, अमात्यपरिषदश्चाधिकारैः

---

१. अग्रगामिनम् । २. प्रकृतिः प्रधानम् । प्रधानपुरुषेणेत्यर्थः । ३. अनशनम् । प्राय इत्यदन्तः शब्दः ।

कैश्चिदतिरिक्तै रूषिताः कार्यस्वातन्त्र्यं च प्रत्यायिताः। तेन महात्मा
स्वाननुगान्प्राचोदयत् प्रवेष्टव्या इमा अधिकारिपदं चाध्यासितव्यमिति।
अत्र राष्ट्रान्तर्वर्तिनामेकादशानां विषयाणामष्टासु विषयेषु कांग्रेससद-
स्यैरेव जनपुरोगमैरमात्यपरिषदः संघटिताः। परं राजकार्येषु प्रवृत्तास्ता
नचिरेणान्वभूवन्भोग[1]पतिभिरस्मद्व्यापारेष्वनधिकृतं चेष्टयतेऽभीष्टः कार्य-
क्रमश्च प्रतिहन्यत इति तस्मान्महात्मनाऽनुशिष्टाः सर्वेऽधिकृता अनर्हं
तुच्छमिति यथास्वं पदमपास्य राजसदनेभ्यो निर्गताः।

अङ्कवह्न्यङ्कचन्द्रमिते ख्रिस्तीये संवत्सरे द्वितीयो विष्वङ्[2] सम्परायः
प्रावर्तत, षडब्दांश्च प्रवृत्तोऽभूत्। यदा च जापानसैन्यान्याक्रान्तब्रह्मदे-
शानि भरतभूसीमसु सज्जान्यासंस्तदा ब्रिटेनाधिकृतैः क्रिप्सो नाम नीति-
विदिह प्राहीयत। युद्धान्ते प्रदायिष्यते[3] स्वातन्त्र्यं यदि सम्प्रति भरत-
वर्षीयाः सर्वात्मनोपकुर्युराङ्गलानामिति नेतृनन्वशात् क्रिप्सः। परमापातत
एव तत्राधिकारप्रतिश्रवोऽभून्न वास्तवः। ततोऽकृतार्थो भग्नमनोरथ एव
प्रत्ययात् क्रिप्सः। प्रतियाते तस्मिन्महात्मा विजहीतेमं देशमित्याङ्गला-
नाज्ञापयत्। इदमेव च महात्मनः शासनं सोल्लासम[4]घुषन्प्रजाः। ततोऽ-
गस्त्ये मासि सर्वत्र देशे विसृमरः शासनातिक्रमः प्रवृत्तः। महात्मा
श्रीजवाहरलालप्रभृतयस्तदनुप्लवा[5]श्चासिद्धाः कारासु निक्षिप्ताः। आसि-
द्धेषु जननायकेषु राज्याधिकृताः प्रामथ्नन्प्रजाः, ताश्चापि तानिति मगधेषु
वङ्गेष्वन्यत्र च सर्वं तन्त्रमाकुलतामयात्। इदं चाविदुर्ब्रिटेनमन्त्रिणोऽति
हि जागरिता व्याक्षेपस्यासहाश्च भरतभूमिजा इति। एवं विप्लवं पश्य-
न्नपि न पूर्ववद् व्यरीरमदान्दोलनं महात्मा। दास्याज्जनहत्यापि श्रेयसीति
सोऽपश्यत्। देशस्थितिं सम्यक् संविदन्त आङ्गला लार्ड् मौण्टबेटन-
परामर्शमनुसरन्तो मुनिवेदाङ्कचन्द्रे ख्रिस्तीये वत्सरेऽगस्त्यमासस्य पञ्चदशे
वासरे भरतभुवे स्वातन्त्र्यं सम्प्रदाय स्वं देशमसंनिवृत्त्यै गताः। परं
देशविभक्तिजन्यो यो मिथः सम्प्रहारोऽभूद् हिन्दूनां मुहम्मदीयानां च,

---

१. विषयाधिपतिर्भोगपतिरुच्यते, योऽसावाङ्गलया गवर्नर इत्याख्यायते।
२. अभिव्यापकः। विश्वव्यापीत्यर्थः। ३. कर्मणि चिण्वदिट् च। ४. लुङि रूपम्।
५. सहायाः।

यश्चास्य सखोऽभूत्तेन स्वातन्त्र्यमहोत्सवो महाशोकेन तिरस्कृतोऽभूत् । इममेव मिथो विद्वेषं शमयितुं प्रयत्तः श्रीगान्धी मुहम्मदीयाननुगृह्णातीति विभ्रान्तेन केनाप्यधन्येन तरुणेन माहाराष्ट्रेण हिन्दुनाऽऽग्नेयगुलिकात्रयेण दिष्टान्तं गमितः । सर्वश्च लोकः परेण शोकेन योजितः सन्तमसे च निपातितः ।

अवसितं चरितानुवर्णनं महात्मनः । इदं चात्र युक्तमुत्पश्यामो वक्तुम्—इह तपसा त्वगस्थिभूता महसां राशयो धर्मवैराग्ययोर्निधयो महात्मानोऽपि बभूवुः, नृपनीतिनिष्णाता हिताहितयोः प्रविवेक्तारो जनानां नेतारोऽपि । पूर्वे सत्ये प्रतिष्ठिताः सर्वभूतानभिद्रोहे स्थिता अपि संसारादुद्विजमाना वैदिकेभ्यो लौकिकेभ्यश्च कर्मभ्यः पराचीना[1] पराय पुमर्थाय प्रयेतिरे, लोकः केन पथा याति कथं वा निर्वहतीति चिन्तां नापेदिरे । परे लोकस्यास्य हितं कामयमाना अभ्युदयं वा मृगयमाणा येन केनाप्युपायेन जिह्मेनाजिह्मेन वा तं प्रसाधयितुमीहाञ्चक्रिरे । तथाचरणं च निर्दुष्टं मेनिरे । महात्मा श्रीगान्ध्येवैकोऽपरिग्रहोऽपि निर्ममोऽपि मुनिसत्तमोऽपि निष्कामोऽपि कर्मसङ्गीव लोकाभ्युदयेऽनारतं व्यापृतोऽभूत् । न केवलमुपेयेनानवद्येन भवितव्यमुपायेनाप्यदूषितेन [2]भाव्यमितीदम्प्रथमतयाऽन्वशाल्लोकम् । इदं च प्राबोधयत्तं यथा व्यक्तेर्व्यक्त्यन्तरं प्रति व्यवहृतिशौचमार्जवं चेष्येते, तथैव समष्टेः समष्ट्यन्तरं प्रति समाजहितसाधनायां राष्ट्रश्रेयःप्रकल्पनायां वाप्येषणीये । नैतद्युज्यते व्यक्तेः कृत एकं नयशास्त्रं धर्मशासनं वा स्यादपरं समष्टेरिति ।

आईन्स्टाइन् इति प्रथितनामधेयस्य विज्ञानवित्तमस्य वचोभिरेतं लेखमुपसंहरामः—इह जगति जनिष्यमाणो मनुजवर्गः कथंचिदेव श्रद्धास्यते भूतल इत्थम्भूतः सशरीरेन्द्रियः कश्चिदात्मा साक्षात्पर्यक्रमीदिति ॥

---

१. पराङ्मुखाः । २. आवश्यके ण्यत् ।

## ( ३ ) पानीपतसमरः

पानीपतीये सामराङ्गणे त्रयः किल समरा बभूवुरितीतिहासविदः। तत्र यस्तृतीयोऽब्दालेश्च माहाराष्ट्राणां च तमिहाऽऽचिख्यासामः।

इदं तावद् विचार्यं किंकृतोऽयं पानीपतसमर इति। दक्षिणापथे यथा माहाराष्ट्राणामायति[1]र्विंतेने तथोत्तरापथेऽपि। मल्हारराव होल्करो रघुनाथरावश्चोत्तरापथस्वत्रीकरणाय सम्प्रस्थितौ। यद्यपि रघुनाथो राजस्थाने चतुरो मासान् रुद्धोऽभूत्तथापि विंशतिसैनिकसहस्राण्यधिष्ठितः सखारामो बापूस्तेन विसृष्टः केनापि बुद्धिवैशारद्येन गङ्गायमुनयोरन्तरालवर्तिजाटजातेः साहाय्यकं काममलब्ध। ततोबष्टब्धा[2] माहाराष्ट्रा देहलीराजस्थानमन्त्रिभिः[3] सन्धायाऽब्दालिप्रतिनिधेर्नाजिबुद्दौल्हस्य व्यपरोपणमचिन्तयन्त। मुनिबाणर्षिचन्द्राङ्किते ख्रिस्ताब्देऽगस्त्ये मासि ते देहलीमवास्कन्दन्, तेन नाजिबेन च प्रसह्यात्मसमर्पणमकारयन्, स्वस्याभिमतानभिसन्धींश्चाङ्गीकारयन्। तत उभावपि रावावब्दालितनूजात्, तिमूरशाहात्पञ्चनदमाच्छेत्तुं व्यवास्यताम्। वर्षात्परेण च मार्चमासि सरहिन्दं गृहीत्वाऽप्रेले च लवपुरमग्रहीष्टाम्। तत्र स्थानीयमादीनबेगं प्रतिनिधाय पञ्चसप्ततिं लक्षाणि च रजतमुद्रा वार्षिकं करं प्रदेद्यामीति तं संविदं कारयित्वा ततो न्यवृतताम्। लब्धप्रशमनाय द्विषद्वारणाय च पर्याप्तां चमूं च तत्र नारक्षताम्। रघुनाथरावस्य नीतिपादपस्याटकावधिकस्य हिन्दुसाम्राज्यस्य स्थितिः फलमभूदिति सत्यम्। पुण्यपत्तनभाण्डागारस्य कृते त्वमुना प्रशासनप्रचयेन काणवराटकोऽपि नापि[4] ऋणं त्वदभ्रं श्रेष्ठिभ्यो देयजमनि, वेतनशेषश्च सैन्येभ्य आजिश्चाब्दालय इत्यनर्घाय महते सर्वसिदमयाजत।

षण्मासाभ्यन्तर एवादीनबेगो यमधानीं गतः, पञ्चनदो देशश्च संकुलताम्। तच्छमनाय साबाजिसिन्धियास्तत्रोगपतिर्नियुक्तः। अयं च न चिरं तं भोक्तुमीश्वरोऽभूत्। पञ्चनदो हि दुर्राणीसैन्यनिवहेनाधृष्येण धर्षितो

१. आयतिः प्रभावः। २. कृताक्रमणाः। ३. राजसभाऽमात्यैः। ४. [illegible] । आप्नोतेः कर्मणि लुङ्।

देहलीराज्यात्प्रच्यावितश्चात्यन्ताय माहाराष्ट्रैर्हारितोऽभूत्। अहमदशाहोऽब्दालिरिदानीं देहलीमभिषेणयाम्बभूव[1]। दत्ताजिसिन्धियां तावत्स्थाण्वीश्वरे परास्य देहलीं प्रति बलान्न्यवर्तयत्। यदा च माहाराष्ट्रसेनानीर्देहल्या अवरेषु दशसु क्रोशेषु वराड़ीघाटेऽफगानैरसूंस्त्याजितस्तदा माहाराष्ट्रसैन्या दुर्राणीसैनिकैरनुसृता दक्षिणपश्चिमां दिशं विद्रुताः। परं सदाशिवरावभावस्तत्र प्राभूद्यत्रेतरे नालम्बभूवुः। उत्तरे भारते वर्षे स कियतोपि सहायान्संगृह्य देहलीं वशेऽकरोत्। परं देहल्या वशीकरणेन न मात्रयाप्युपकृतं माहाराष्ट्राणाम्। कष्टोपजनश्च[2] तेषां केवलोऽभूत्। खश्रुतुमुनिचन्द्रमिते वत्सरेऽत्तूबरमासस्य नवविंशे वासरे सदाशिवः पानीपतं प्राप्तः।

एवमफगानाश्च माहाराष्ट्राश्चेतिहासप्रतीते पानीपतीये रणाजिरेऽन्योन्य समासेदुः। पुराऽपीह भीषणं द्विरायोधनं बभूव बाबरस्य सूरिणाऽकबरस्य च हेमुना। अब्दालेरर्थे युयुत्सया समवेता अफगानाः षष्टिः सहस्राण्यासन्। एतदर्धमब्दालेः प्रजा अभूवन्। तासां त्रयोविंशतिः सहस्राण्यश्वारोहाः सप्त सहस्राणि च पदातय इति विवेकः। अपरार्धमेतद्देशजारतस्य सहायाः। तेषां सप्त सहस्राण्यश्वारोहास्त्रयोविंशतिः सहस्राणि च पदातय इति विशेषः। माहाराष्ट्राणामश्वानीकं पादातं च समुदितं पञ्चचत्वारिंशत् सहस्राण्यासीत्। अब्दालेरश्वीयं[3] वरीयोऽभवत्। लोहद्युष्यादिकं च साधीयोऽलङ्कर्मीणं सुखसंवाह्यं च। अब्दालेश्च भूपतयो दंशिता[4] आसन्माहाराष्ट्रास्त्वदंशिताः प्रायेणेत्यपरो विशेषः। बलविन्यासेन संयमादिनापि चाफगानानीकिनी माहाराष्ट्रवरूथिनीं सुदूरमतिशिश्ये। शिबिरे वा रणचत्वरे वा सममप्रतिहतशासनत्वं स्वल्पस्याप्यतिक्रमस्याधिष्ठितजनकृतस्य तीव्रं दण्डनीयत्वं सर्वस्याधिकृतस्य चेष्टादेरवेक्षणं नियमनं च निरन्तरायम, आ सेनापतेरा च सामान्यात्सैन्यादधिकृतानामानुपूर्व्याऽभीष्टया संस्थापनं सेनापतेश्चादेशसंक्रमायाऽविहताय[5] कर्मण्य[6]जननियोजनं सर्वस्य सैन्यस्य वशीकरणं चेत्यादयोऽब्दालिसेनां ह्यधिषन्गुणाः। प्रकर्ष

१. सेनयाऽभिययौ। २. कष्टाधिक्यम्। ३. अश्ववृन्दम्। ४. वर्मिताः। ५. अविघ्नाय। ६. कर्मणि कुशलः कर्मण्यः।

च तस्याः किमप्यकुर्वन् । यत्सत्यं तदात्वे सर्वत्रैशियाभूखण्डे नैवं गुणगरिम्णालङ्कृतं सैन्यान्तरमभूत् । किं चैब्रफगानेषु किमपि समरपाटवं व्यवहारचातुरी चासाधारणी विजयायालमभूताम् । अधिपोऽप्यमीषां चरितोत्कर्षेणाऽसामान्यो बभूव । अयं हि नादिरवदपकृष्टोऽपि सन्स्वेनाभियोगेन विमलेन च प्रज्ञानेनोच्चैस्तमं पदमाटिटीकेऽजय्यतां च साम्परायिके[1] लेभे ।

अयं चापरो विशेषस्तदनुग्राहकः । अवधनरेशः शुजो 'माहाराष्ट्रा मुस्लिमप्रतिष्ठायाः प्रत्यर्थितमा' इति प्रतिपन्नस्तेषामन्तःशत्रुतामयात् । रुहेलाश्च महाराष्ट्रैरुद्वेजितास्तत्रापरागं गता राजपुत्राश्चापि बालाजिप्रयुक्तस्य दुर्णयस्य कारणात्ततो विमुखा इति ।

„अध्यर्धमासद्वयं पानीपतमभितो माहाराष्ट्राः स्वल्पा आजीररातिभ्यः प्रादुः । एतेन कालेन खाद्यसामग्र्या वैकल्येन ते कदर्थिता अभूवन्योधघातेन च संविग्नाः । ततोऽमी पानीपतेऽब्दालिं समासत्तमभिक्रान्ताः[2] इत्थं च व्यूढमभूदब्दालेरनीकम्—मध्येऽष्टौ सजातीयानि योधसहस्राणि शाहवलिखानेन महामात्रेणाधिष्ठितानि, दक्षिणत उत्तरतश्च प्रत्येकं पञ्च सादिसहस्राणि प्रकृष्टकौशलानि, केन्द्रमुत्तरेण च नाजिबशुजौ, दक्षिणेन च रुहेला विन्यस्ताः । माहाराष्ट्रं बलं तु त्रिधा विन्यस्तमभूत्—मध्यं तु सदाशिवेन स्वयमधिष्ठितम्, वामपार्श्वे नियतभृतय इब्राहीमखानस्य सैन्याः, दक्षिणे च मल्हाररावहोल्करस्य जानकोजिसिन्धिया[3]श्च ध्वजिन्योऽवस्थापिताः ।

माहाराष्ट्रा लोहसुषिप्रयुक्तेन सन्ततेनाग्निवर्षेण विग्रहमारभन्त विक्रान्तवच्चायुध्यन्त, प्रक्रमे च सिद्धिमपि कियतींचिदलभन्त । इब्राहीमो दुर्राणीवरूथिन्या दक्षिणं पार्श्वं तथा रभसेन प्राचण्ड्येन चास्कन्दद्यथा नवदशानि सहस्राणि रुहेला हता वाऽऽहता वाजायन्त । सदाशिवोऽपि वलिशाहाभिरक्षितं दुर्राणीसैन्यकेन्द्रं तथा बबाधे यथा मुहूर्त्तं प्रत्यभान्न हि

---

१. युद्धे । २. अभीतवद्रणे याताः 'अहितान् प्रत्यभीतस्य रणे यानमभिक्रमः' इत्यमरः । ३. इति षष्ठ्यन्तम् ।

कश्चिदरातिवीरो नरशार्दूलस्यास्याग्रतः स्थातुं सहिष्यत इति। परमब्दालि-देशकालविदिति विषमेऽमुष्मिन्काले त्रयोदशभिः सहस्रैर्योधैरुपाचिनोन्म-ध्ये स्थितं स्वकं सैन्यं दक्षिणस्मिंश्च पार्श्वे। एतेनोपचयेन माहाराष्ट्राणां विग्रहनैरन्तर्येण विक्लान्तानां भृशमवासीदन्तर्हृदयानि। सदाशिवस्त्वनु-बन्धमनालोच्य भूयस्त्वं च प्रतिद्वन्द्विनामनादृत्य प्राणांश्च तृणीकृत्याभीत-वद् युयुधे न चोपरेमे, सिद्धिं तु नोपलेभे। अपराह्णे द्विवादनवेलायां वि-श्वासरावः पेशवात्मजो निसूदितोऽभूत्। एतेन सदाशिवस्योद्दिदीपेऽभ्य-सूया। यद्भवतु तद्भवत्विति कृतमतिरसौ यन्नान्तरमातिष्ठद् ह्रियमाणां महाराष्ट्रश्रियं परित्रायेयेति। परमत्राप्यस्य सिद्धिर्नाभूत्। पादोनहोरात्रया-त्मिकायां वेलायां निमेषमात्रेणैव सर्वा माहाराष्ट्री पताकिनी कान्दिशीका[1]-ऽभूत्, कर्पूरवच्चान्तरधात्। पञ्च दुर्राणीसादिनः सदाशिवस्य महार्घे नेपथ्ये लुब्धास्तच्छिरश्चकृतुः। इत्थं स महावीरः सदाशिवः स्वस्य राष्ट्रस्य जातेश्च मानपरित्राणाय प्राणान् प्रियानुपाहरत्। इदं चावश्यमभ्युपेयं पानीपतसमराङ्गणे माहाराष्ट्राणामभिषङ्गे[2] सदाशिवस्य स्वपदयाणामनाद-रोऽन्यथाचिन्तिताश्चोपाया हेतुतामयुः। परास्तस्य माहाराष्ट्रसैन्यस्य नेतार एकैकशो विगतविग्रहा बभूवुः, सहस्रशश्च योधाः। महच्चात्र कदनमभून्ना-गरिकाणाम्। अत्राहुर्यदुनाथसरकारमहाभागाः—अयं पराजयः सर्वस्य राष्ट्रस्य विप्लावकं व्यसनमभूत्। महाराष्ट्रे नैकमपि गेहम्बभूव यदधि-वसतामेकतमो निधनं न यातः। कञ्चित्त्वाजीवसंयार्जयितारो गृहपतयोऽपि प्राणैर्वियुक्ताः। सर्वेऽपि नेतारो जनानामेकेनैव प्रहारेणोत्सादं गता इति। अत्र महाहवे विजेतारोऽनन्तं धनराशिमजयन्। माहाराष्ट्राः पञ्चा-शतं सहस्राण्यश्वारोहान्, लक्षद्वयं वाहनीभूतं पादबन्धनं[3] कतिचित्सहस्रा-णि क्रमेलकान्, पञ्च शतानि करिणो बह्वी रजतमुद्रा मणिमौक्तिकादि चानल्पमहारयन्।

राष्ट्रपतिर्यद्दमणा गृहीतो नैतां घोरां व्यापदं चिरायात्यजीवीत्। भग्न-मनोरथः स पुण्यपत्तने एकषष्ट्यधिकेषु सप्तदशसु शतेष्वतीतेषु ख्रिस्तवत्स-राणां जूनमासस्य तृतीयस्मिन्दिवसे यमाध्वन्यध्वनीनो बभूव।

१. भयाक्रमणाद् द्रुता। २. पराभवे। ३. गोमहिष्यादि।

सोऽयं तृतीयः पानीपतसमरो माहाराष्ट्राणां सर्वाङ्गीणाय विनाशाय जज्ञे, महाराष्ट्रसाम्राज्यप्रगतिं च रुरुधे। महान्ह्यत्र प्राणव्ययोऽभूदर्थव्ययश्च, महीयांश्च निर्वेदः। इदं च प्रसाधितमभूत्—माहाराष्ट्राणां मैत्रकं समुपस्थिते विषमेऽकिञ्चित्करं शरकाण्डप्रतिमं कृशमनालम्बनीयं चेति। इत ऊर्ध्वं माहाराष्ट्रसंघटनं विजघटे, राष्ट्रपतेश्च प्रभुशक्तिरतितरां चिक्षिये। यत्सत्यमनेन सम्प्रहारेण क्षीणा माहाराष्ट्रा न पूर्वतनं विभवं पुनरापेदिरे।

अयं चापरो विनाश एतत्समुत्थोऽभूत्-तृतीयः पानीपतसमरो भरतवर्षस्य भाग्यावसायो[1]ऽभूत्। माहाराष्ट्रा मौहम्मदाश्च [2]मारात्मकेनानेन सम्परायेण स्वस्य शक्तिसंक्षयं समपादयन्नाङ्गलानामाधिपत्यप्रतिष्ठापयिषाश्चार्ध्नुवन्[3]। अभ्युदैष्यन्त आङ्गला इह देशे स्वस्य शासनं प्राभवत्यं च द्रढयितुमपेक्षितमवसरमुत्तमं लेभिरे। युक्तमिदमाह कश्चिदैतिहासिकः—यदि पलासीविजयेनाऽऽङ्गलसाम्राज्यबीजवापोऽभूत्तदा पानीपतस्थेन तृतीयेन समरेण तस्य बीजपोषस्य मूलबन्धस्य चावसरसम्प्राप्तिरिति॥

## ( ४ ) छत्रस्यात्मकथा

सौम्य किमति मां निध्यायसीव। मन्ये समेतिवृत्तं जिज्ञाससे प्रत्यादेशकातरश्च न मां पृच्छसीति। यद्येवं नावगच्छसि तत्त्वतो माम्। नाहमेवं रूक्षं वियातं[4] वा। इदं ते कथयामि स्वचरितं संग्रहेण। किं मन्यसे किंवयोऽस्मीति। अथवा कृतमनेनानुयोगेन। दुर्वचोऽयं त्वया। मृदितकल्पानि म्लानानि मेऽङ्गानि चिन्तयित्वा न श्रद्धास्यसे द्विवर्षमस्मीति। इदं च ते खेदाय महते भविष्यति युवजरदस्मीति। अस्तु। प्रकृतमनुसरामि। कलिकतायां क्वचिदावेशने मे जनिरभूत्। अद्यत्वे भूमानं गतः स्वदेशजवस्तुप्रेमेति नैकमपि ममाङ्गं वैदेशिकम्। स्वदेशोद्भवा

---

१. भाग्यान्तकृत्। भाग्यस्यावसायः। स्यादन्ततेति णः। २. घातुकेन। ३. अध्नोतेर्लङि। ४. धृष्टम्।

एव मम शलाका: पटो वेत्रदण्डश्च। आवेशनस्थमहं नावेदिषं कस्कोऽर्थः सेत्स्यति लोकस्य मम जीवितेनेति।

एकदा क्रयार्थं प्रसारितेष्वर्थेषु धन्वदेशवास्तव्यः कश्चिच्छ्रेष्ठी सद्यो-निर्मितं भास्वदाकारं सर्वाङ्गसुन्दरं मां दृष्ट्वाऽक्रीणात्। क्रीणानश्च यथा मां पर्यैक्षत तथा तस्मिन्मे प्रद्वेष इव कश्चिदजायत। दिष्ट्या नाहं [1]तस्मिं-श्चिरमतिष्ठम्। मासात्यये स मां पाञ्चनदाय परिकर्मरसिकाय कस्मैचिद् वदान्याय व्यक्रीणीत। स मदीयमाकारमभ्यरोचयदहं च तस्येति महान्नौ प्रणयो मिथोऽभूत्। तेन समं विचरदहं कदाचिल्लवपुरं प्राप्तम्। तत्रैकदा सर्वजनीने लारेंसोद्याने मां सहादाय व्यहरन्मे स्वामी। तत्र काले कश्चि-ज्जाल्मः कामपि कुलाङ्गनां विहारार्थमागतां विप्राकरोत्, मम च स्वामी नेदं व्यसहत। स मया दण्डकाष्ठेनेव हताशं तं कितवं बलवदताडयद्येन सपादि व्यद्रवत् सः। सा च वरवर्णिनी स्वामिने शतशो धन्यवादानुदीर्य यथासुखं स्वपथमन्वयात्।

अतीते षण्मासे मे स्वामी मोटरयानमक्रीणीत। तदा प्रभृति विरलो ममोपयोगोऽभूत्तन्मे नास्वदिष्ट। परं परायत्तं किं करिष्यामि। तदा तस्य प्रैष्यः कश्चिन्माणवको मामुपायुङ्क्त। तद्विषये न बहु वक्तव्यमस्ति। यथा लोकः परकीयेष्वर्थेषु नादृतो भवति तथाऽसौ मय्यप्यभूत्। परमहं तस्याप्युपाकरवम्। एकदा तमहं प्रकुपितात्सैरिभाद्गोपायम्। स इदं ममो-पकृतं स्मरति न वेति न जाने। विरला हि कृतवेदिनो भवन्ति। अस्तु वृत्तं ते प्रचक्षे एकदा मत्सखः स विपण्या[2] गृहान्प्रति गच्छन् दुर्मदेन महिषे-णावस्कन्नः। महिषो ह्यकाण्डे विशिखायां धावन्सं[3]सरणमागादन्तक इवा-परः। स च तं माणवकं क्षणेनैवाभ्यहनिष्यद्यदि तत्राहं तस्योपकरणीभावं नागमिष्यम्। प्रतिपत्तिमान्स माणवकः साध्वसवशमगत्वा सहसैव तम्प्र-ति मामुदघाटयद्येन बलवद्भीतः स सत्त्वोऽह्नायाभजद्दिशः।

अयं हि परिचारकश्चुराशील आसीत्। अन्तराऽन्तरा स स्वामिनो

---

१. सामीपिकेऽधिकरणे सप्तमी। यथा—पतिसेवा गुरौ वास इति स्मृतिप्रयोगे।
२. हट्टायाः। ३. घण्टापथम्।

रसवतीपात्राणि वस्त्वन्तराणि चास्तेनयदापणिकेभ्यश्च व्यक्रीणीत। स तथा शठोऽभूद्यथा चोरिकायां कृतायां शान्ताकारोऽस्खलद्वागेवासीदनभिशङ्कनीयः। नैकदापि स कर्मगृहीतो लोप्त्रगृहीतो[1] वाऽभूत्। स्वामिन आशङ्का तु तस्मिन्कालेन केनापि द्रढीयसी समजनीति सोऽन्ते व्यंसकं व्यसर्जयत्। स च विसर्जितो मां खहादायैव निरगात्। तेन संवसदहं भृशमदूये। खलसम्पर्कः कस्यात्मनीनो भवति। क्षुल्लकजनसमागमः कस्य श्रेयसे स्यादिति यदुक्तं सूरिभिस्तदवितथमितीदानीं विशदमनुभवामि। तस्य मयि कर्कशो व्यवहारो मम कष्टतरोऽभूत्। सुखोचितस्य शिष्टविशिष्टजनहस्ततलालितस्य सदयं कुमारीजनकरकिसलयधृतस्य ममाणुरपि क्लेशः साम्प्रतमसह्योऽभूत्। यत्सत्यं स यत्र तत्रार्थे मामुपायुङ्क्त न च मात्रयापि समाद्रियत। एवमदयं समाचरन्स मामकाले जीर्णतामगमयत्। पश्य पटो मे सूत्रदरिद्रतां गतः, शलाका अपि काश्चन भग्नाः, दण्डमुष्टिरपि त्रुटितेत्यङ्गभङ्गविक्लवमहमिह प्रतिसमाधातरि वर्ते। मम चोरस्वाम्येव मामत्रोपानयत्। अद्येह मासद्वयमवतिष्ठे। मलदूषितस्तामिस्रपूर्ण एष आपणः। नरकं पतितमस्मीति जाने। संभावयामि स धूर्तः कस्यचिद् दुष्कर्मणः कारणादासेधं प्राप्तः क्वचित्कारायां कालमतिवाहयतीति, अत एव मां प्रत्यानेतुं नोपैत इति।

---

## ( ५ ) अश्वतरस्यात्मकथा

सम्प्रति जीर्णोऽस्मि जातः, परिस्पन्दश्च मे पूर्वो नास्ति, कर्कशानि मेऽङ्गानीति मन्दमन्दमिह गोचरे संचरामि शष्पाणि च चरामि। एवमवस्थोऽहं बहुशः स्वं कैशोरमनुध्यायामि। मन्ये पेशलतमः सुखतमश्च स समयोऽभूत्। न हि तदा कश्चिन्नियोगो मेऽभूत्। अव्यापारः स्वैराहारविहारोऽहं जीवितं निर्वृतिमयममन्ये। यत् सत्यं सर्वत्रार्थे कामचारोऽभूत्। आजानेयीमारण्यकुलसंभवां[2] मातरं स्वच्छन्दतोऽन्वधावम्। भूयसा सस्याढ्येषु

---

१. लोप्त्रं चोरितं धनम्। २. कुलीनाम्।

क्षेत्रेषु कालमनयं नवनवांस्तृणाङ्कुरानलङ्घयं पारिप्लवतया च नैकत्र प्रदेशेऽतिष्ठम् । ह्रेषमाणो हर्षमाणः[1] कूर्दमानश्च यत्र तत्र व्यचरम् ।

इयं चावस्थितिश्चिरकाला शाश्वती वा नार्हद्भवितुम् । सापगमा ह्यागमा भवन्ति । यावदेवाहं द्वितीयं वयोऽस्पृक्षं तावदेव कश्चिद्विनेता दीर्घेण दाम्ना मां गले बद्ध्वा मण्डलेनावर्तयच्चिररात्राय कशासहायः । क्रूरेणानेन कर्मणा मन्युराविशन्मां भीतिश्च । परं किं करिष्यामि परवान्वराकः । स च मां तावदभ्रमयद्यावद्भ्रान्तमिव मे शिरोऽभूत् । पद्भ्यां स्थातुं च नापारयम् ! माता च मामन्वशाद् वत्स ! अलं विरोधेन । कष्टोऽप्यभिविनयस्ते सुखाय भविष्यत्यायत्यां साधीयसे च निर्वहणायेति मा स्म भूरुद्विग्नः । किं च साधारणमिदमस्मज्जातेर्दुःखमिति धैर्यं धेहीति । एवं प्रबोधितोहमभिनेतृप्रयुक्त आस्कन्दिताद्याः पञ्च धारा यथावदशिक्षे आरोहाय चाकल्पे, वल्गु चतुरं च व्यक्रमे[2] ।

एवं शिक्षितस्य ममोदितं पुण्यैः । उच्चैः पदस्थो राजमानितः कश्चिदाङ्गलो मामक्रीणाज्ज्यायसा वस्नेन[3] । अस्याश्वपृष्ठमारुह्य सायम्प्रातिके विहरणे महत्यभिरुचिरभूत् । अश्वानां परस्परजिगीषया धावनेऽप्यसौ रसिको निपुणः सादी च दयार्द्रचेताश्चासीदिति तत्र सुखोषितोऽहं क्लेशलेशमपि नान्वभूवम् । यथेष्टं सम्पोषितोऽवेक्षितश्च [4]भाण्डभृदहं कामप्यभिख्यामबिभरम् । एवं परितुष्टोऽहं स्वामिन आदेश एवाद्दृतम् , अनुक्तोऽप्यनोदितोऽपि तत्संज्ञामेव विज्ञाय त्वरितं तद्दिष्टमापीपदम् । यदा च तदारूढोऽहमश्वान्तराण्यत्यधावं तदा विजयिनं स्वामिनं हृदाऽमभाजयमात्मानं च कृतिनमदर्शम् । परं दैवदुर्विपाकः कोऽप्युपानमन्माम् । मदीयः स्वामी सीधुनि प्रसङ्गादधमर्णतां गतः । अत्यायो हि तस्य व्ययोऽभूत् । मदीयं पोषणमपि यथापुरं न भवतीति दूयमानः स कस्मैचिन्नैगमाय मां व्यक्रैष्ट । इदानीं भाग्यविपर्ययो मे महानभूत् । अति हि कदर्थितोऽहमनेन दास्याःपुत्रेण । महानस्यार्थे गर्धः । अयं मां पण्यवाहनेऽयुक्त ।

---

1. 'हृषंमाणो विकुर्वाणः प्रमना हृष्टमानस' इत्यमरः । ताच्छील्ये चानश् ।
2. 'वेः पादविहरणे' इति तङ् । 3. मूल्येन । 4. भाण्डमश्वभूषा ।

आसीदस्य धनिकस्य कश्चिन्नराधमो नियुक्तः। स मामनारतं व्यापारयददयं चाप्यपीपिडत्। [1]अकश्यमपि मां कशाप्रहारैर्ग्रीवायां पार्श्वयोश्च बाढं प्रातुदत। अध्वखिन्नं क्रमणाय ग्लानमपि मां न व्यश्रमयत्। गतं तैर्दिवसैर्यत्र मे स्वामी मां जीवितमिव द्वितीयं मन्यमानः प्रत्यग्रदर्शनं परिक्रमिताङ्गं च दृष्ट्वा प्रह्लादेन परवानभूत्।

अस्तु। किं तैर्दुःस्मरैः स्मृतैः। प्रकृतमनुसरामि। प्रैष्यहतकस्य दुर्व्यवहारमालोक्याहमपि स्वं व्यवहारं पर्यवीवृतम्। यावच्छक्यं मन्दमन्दमेवाक्रामम्। यदा चायं प्राजिता मयि कशया प्राहरत्तदा पथि यत्किञ्चिन्निशाम्य भीतो नाम भूत्वोदग्रपादोऽतिष्ठम्। एतच्चावेदिषमितस्ततः पृष्ठतः पार्श्वतो वा विचलनं पटुरुपाय इति। तस्माद्यदा कदा स मां [2]चक्रयानेऽयुङ्क्त कशां चाभ्याघातयत्तदा नाहं प्रासरम्। प्रत्यभिनिविष्टश्च प्रत्यसरम्। एवंवृत्तं मां ज्ञात्वा मत्स्वामी मयि निर्वेदमगमत् पापर्द्धिरुचये[3] कस्मैचन नागरिकाय च मां व्यक्रीणीत।

अहमनेन स्वामिपरिवर्तनादभ्रं प्रासदम्। भूयोऽपि स्वात्मन्पर्याणारोपमरोचयं विश्वकद्रुभिश्च[4] समममाखेटमन्वसरं धौरितकं च स्वमरसयम्। एवं सुखं वसतोऽनुकामं चरतो मे कियानपि कालोऽत्यगात्। परं दुर्योगस्तं रसप्रवाहं व्यच्छिदत्। एकदा मत्स्वामी परिखां लङ्घयेति मामनुदत्, अहं चाजानां नेशिष्ये तां लङ्घितुमिति तथापि स्वामिवचोऽनुविधेयमिति कृत्वा सर्वात्मना प्रायसं न च प्राभवम्। अन्तःपरिखं च न्यपतं स्वामिनं च न्यपातयम्। स्वामिनो मे बाहुर्भग्नः, मम च पादो गर्हितं विसंहितः। अहं च कतिचित्सप्ताहानातुरालये शालिहोत्रेणोपचरितो[5]ऽभूवम्। यावदेवोल्लाघः समजनिषि तावदेव मे स्वामी मां विनीताश्वव्यपेक्षाय कस्मैचित्सुजनाय व्यक्रीणीत। अयं चाहमिव स्थविर इति साधर्म्यान्ममातिमात्रं दयते। अद्य वर्षपूगो[6]ऽतिक्रान्तस्तं सेवमानस्य मे। अल्पायाससाध्यमेव मया कारयति कृत्यम्, भोज्यं, चेष्टं पुष्कलं च पूर्ववदुपकल्पयति।

---

1. अन्दाहम्। 2. चक्रयुक्तं यानम्। तस्मिन्। 3. आखेटरसिकाय।
4. मृगयाकुशलैः श्वभिः। 5. चिकित्सितः। 6. वर्षसमूहः।

अद्यत्वे विरलव्यापारोऽहं गोचरे स्वच्छन्दं तृणानि चरामि शान्तः सन्तुष्टश्च जीवामीत्यवसानं मे कथायाः ।



## ( ६ ) रूप्यकस्यात्मकथा

भ्रातरद्यत्वे महान्तोऽध्यारोपितमहत्त्वा वा लोकाः स्वानि चरितानि स्वयमेवाचक्षते । अहमप्यात्मानं संभावयामि गौरवं च तत्र पश्यामीति महतां वृत्तमनुकुर्वंस्ते स्वचरितं समासेन ब्रवीमि । यदीदं प्रागल्भ्यमिदं मे मृष्यताम् । इतश्चतुर्षु वर्षेषु पुण्यपत्तनस्थटङ्कशालायामहमाहतोऽभूवं सवयोभिः समं समादरेण प्रत्यवेक्षितश्च । ततोऽहं राष्ट्रिये भाण्डागारे लब्धप्रवेशः कालपर्यये सर्वजनसाधारणे न्यासालये पदमकरवम् । ततोऽहं तत्र न्यस्तार्थोपादित्सयोपेतं कमपि धनिकं समक्रमिषम् । यदा सोऽर्थराशिमादाय गृहमासादयत्तदा प्रकृतिचपलस्तस्य कनिष्ठः सुतो मामीक्षमाणो मदीयया सुषमया हृतचेताः पितरमननुमान्यैवार्थमञ्जूषाया मामपाहरत् । अयं च मां रत्ननिधायमदधात्स्वस्योपधानस्य चाधस्तात्सततं न्यधात् । बाढं ह्येष मयि प्रीतिमानभूत्, बह्वादृतश्च । अहं च तदा तथाऽभिरूपो भासुरश्चाभूवं यथा मदीयस्य बालस्वामिनोऽग्रजो मयि नितरामलुभ्यत् । नक्तं सुषुप्ते ममेश्वरे किशोरे स लोभाकृष्ट उपधानस्याधो मामपाहरत् । श्वोभूते प्रतिबुद्धो मे स्वामी मामपहृतं ज्ञात्वा भृशमतप्यत भ्रातरं चाशङ्कत । कालान्तरे तत्सकाशे मामवालोकयदवदच्च—भ्रातश्चोरितस्त्वया मम रूप्यः, प्रत्यर्पय तं मामिति । यदा स नार्पयन्मां तदा तयोः प्रावृतत्कलहः । चिरं कलहायमानयोस्तयोराक्रोशं निशम्य जनकस्तत्रोपागादपृच्छच्च किंकृतोऽयं कलह इति । अग्रजो मे रूप्यकमचोरयन्न चाद्यापि प्रत्यर्पयति मह्यमित्यनुजोऽभणीत् । ततस्तयोः पिता मधुरया श्लक्ष्णया च वाचा कनीयांसमात्मजमुपासान्त्वयज्ज्यायांसं च प्राबोधयत्प्राचोदयच्च प्रत्यर्पय रूप्यकमिति । एवं कलिः शमितः । अहं च यथापुरं तेनैव प्रीतिभाजा बालेन संगमितः । एतेन व्यतिकरेणेदम्प्रथमतयाऽजानां क्रियान्मे विभव इति ।

कदाचिदहं तस्यार्थभज्ञातो रन्ध्रद्वारेणावापतम् । कस्यचिद् दरिद्रस्य च हस्तेऽपतम । स सौनिकमुपागान्मया च मूल्येन किंचित्पललमक्रीणात् । मलीमसे तत्रापणे नाहं जीवितमरोचयम् । परं ततो निर्मोक्षाभ्युपायं नाविन्दम् । गते बहुतिथे काले फलितानि मे सुचरितानि पुराकृतानि । स दरिद्रः कस्यचित् कुसीदिकस्याधमर्णोऽभूत् । तेनेदानीं सवृद्धिकं निर्यात्यमासीदृणम् । तेनाहं ततो निर्मुक्तो वार्धुपिकस्य हस्तं गतः । अयं च वार्धुषिकः सुतरां मितम्पचोऽभूत् । एष हि मां लौहमञ्जूषामवारुधत् । स्वातन्त्र्यं च ममाच्छिदत् । प्रतिप्रत्यूषं जागरित्वा स कदर्यो मञ्जूषामुद्घाट्य सस्पृहं मामपश्यत् , न च क्वचिन्मामव्ययत् । तेनाहं समुद्गके निरुद्धश्चिरं न्यवसं जीविताय च पर्यग्लायम् । एकदा कदर्यस्यापि तस्य मोदकखादिकायां स्पृहाऽभूत् । स मौदकिकस्यापणमागान्मोदकांश्च मयैकेन रूप्यकेण प्रस्थमक्रीणात् ।

ततो मौदकिकादहममृतसरसीयस्य[1] नैगमस्य गृहमयाम् । स चैकदा रेलयानविरामस्थानं गमिष्यंष्टांगायानपतये मां वितरीतुमैच्छत् , परं न जाने तत्कालं कस्मात्संकल्पं पर्यवर्तयत् । मन्ये सोऽचिन्तयदयं किल श्रेयांसं व्यवहारमर्हतीति । सोऽयं मौदकिकः कदाचिद्बान्धवान्द्रष्टुं लवपुरमयात् । तत्र प्रीतिदाय इति मामुपदशवर्षायै कन्यकायै सबहुमानमदात् । यत्सत्यं नाहमभिरोचयामि चटुलप्रकृतीन्विवेकविधुराञ्शिशुकान् ! मन्दा एते महार्हाणामप्यर्थानां न विजानन्त्यर्घम् । घुणोत्कीर्णमिवाक्षरममीषां सम्मानना भवति, विमानना तु नियता । प्रतीहि वा न वा, तया शिशुकयाहं गगनमुत्क्षिप्तः पार्श्वयोस्ताडितो मध्ये चाभ्याहतो यत्र प्रास्तः खेलान्ते चोद्याने क्वचिद् भुवि निखातः । अनुमिनोमि भ्रातृव्येण तस्याः कलहोऽभूत् । स प्रत्यजनीत ध्रुवं ते रूप्यकमात्मसात्करिष्यामीति । तत्प्रतिषेधाय सैवमचारीदिति । अन्येद्युः सा मामुदखनत , गन्धचिकीषया च मां गान्धिकं समक्रमयत् । अथ षण्मासास्तत्र वासं श्रितवतो मे । सर्वजनमनोहरा गन्धा अधिवासयन्ति[2] मां सुरभीणि विविधानि तैलानि च

---

1. अमृतसरसमिति संज्ञा । 'अज्ञोश्माय:सरसां जातिसंज्ञोरि'त्यच् । ततश्छः ।
2. वास उपसेवायां चुरादिः ।

तर्पयन्तीति यत्सत्यमनप्सरःसंवास उत्तरकुरुवासो मयानुभूयते । दुःख-मुपभुक्तवतो मे सम्प्रति सुखोपनतिरतिसुखावहा जाता । यदुक्तम्—'यद्दै-वोपनतं दुःखात्सुखं तद्रसवत्तरम्' इति । इहैवावस्थित आयुःशेषं क्षपयेयं मा स्म ममेतोऽन्यत्र संक्रमो भूदित्यहरहर्हरिं याचे ।

## ( ७ ) यद्यहं शिक्षामन्त्री भवेयम्

य इदानीमिह देशे शिक्षामन्त्रिपदमध्यास्ते स स्थविर इति वा त्रस्नु-रिति वा व्यामूढ इति वा प्राप्तावसरमपि बहूपेक्षते कृत्यं किमुतायतिकम् । पुरातनीमधुनातनीं च शिक्षापद्धतिं चिरमञ्जसा चाचिचिन्तम् । जाने नूत्नायां पद्यायां बहुप्रतिविधेयमस्ति बहु च नूतनमाधेयम् । परम-धिकारमनवाप्य प्रतीकारे प्रतियत्ने[1] वा नाऽलमस्मि । तस्माद्यदि कथंचिन्मन्त्री भवेयं तदा किं किं कुर्यामिति शुश्रूषा चेद्विस्तरेण कथयामि सर्वमिदमवधीयमानं चेच्छामि ।

शिक्षणं हि शिक्षकायत्तमिति सर्वप्रथमं शिक्षकनियोगकरणं प्रतिसं-स्करिष्यामि । अद्यत्वे यः कश्चिद् बी० ए० परीक्षाम् , एम्० ए० परीक्षां शास्त्रिपरीक्षामाचार्यपरीक्षां वा लघीयसो भूयसो वाङ्काँल्लब्ध्वोत्तरति सोऽ-ध्यापकतां सद्योऽर्हति प्रक्रमते चाध्यापयितुम् । प्रायेण समाप्तविद्यस्याध्या-प्यानां च वयसोश्चतुष्पञ्चा वत्सरा विशेषो भवति । अयं चाकिञ्चित्करः । न ह्यागमकालेनैव परीक्षोन्मुखेनानेन सारः सारस्वतो गृहीतः, कलारहस्यं वाऽऽकलितं, विज्ञानं वाऽऽचार्यप्रत्तं विज्ञातम् । पल्लवग्राहि नन्वस्य पाण्डि-त्यम् । नास्य मर्म ज्ञातमस्ति । तेनाध्यापकतायाः सर्वथाऽनर्होऽयं सद्यस्तत्र नियुज्यमानो वाङ्मनसातीतां क्षतिं करोतीति विशेषज्ञाः । अतोऽहं नियम-मव्यभिचारिणं करिष्यामि यः सत्तमः परीक्षायां सोऽध्यापकवृत्त्या सना-थ्यतां नेतर इति । तस्येतरस्य कृतेऽन्यान्यपि कार्याधिकरणानि सन्ति नाम । इदं च नियमयिष्यामि यः कश्चिच्छात्रानुसन्धिमाचरति, पञ्चावरा-

---

1. गुणान्तराधाने ।

नन्द्रान्स्त्वेन पाठ्यं शास्त्रं च परिशीलयति तेन चाचार्यमधिष्ठातारं वा परितोषयति, सोऽध्यापकतामधितिष्ठेन्नेतरः। सर्वः शिक्षायामधिक्रियतेऽर्थी समर्थः, न तु सर्वोऽध्यापकतायामधिक्रियते। ये नाम केवलं वृत्तिहेतोरध्यापकत्वमिच्छन्ति व्यवसायैरपरैः सामान्यं नेदं पश्यन्ति न चात्र पुण्यबुद्धयो भवन्ति, तेऽनर्हा अस्येति निर्देक्ष्यामि। सति सम्भवे यानीह पाठकुलानि प्रथितानि येषु परम्परीणमौपाध्या[1]यकमाचार्यकं[2] वा समस्ति तेभ्य एव ज्ञानविज्ञाननीविभ्यो[3]ऽध्यापकान्संग्रहीष्यामि। अध्यापकानां च तथा पुष्कलां वृत्तिं क्रमिकां वृद्धिं च कल्पयिष्यामि यथा निरपेक्षास्तेऽध्ययनाध्यापनयोरेकायनगता[4] रमेरन्, शिष्यबुद्धिमाचिन्वीरन्, शिष्याचारं च समादधीरन्। या चाद्यत्वे राजनियुक्तानां गर्हिततमा वृत्तिः स्वे गृहे शिष्यगृहे वा भृतिमादाय स्वातन्त्र्येणाध्यापनं शिष्याणामित्येवंरूपा तामत्यन्ताय निषेधिष्यामि[5] गौरवं हीयमानं गुरूणां भूयोऽवस्थापयिष्यामि।

ये चाद्यत्वे स्वस्वमतप्रचारायार्यसमाजसनातनधर्मसभादिभिर्विद्यालया महाविद्यालयाश्च प्रतिष्ठापिताः प्रचालिताश्च सन्ति; तेभ्यो राजसाहायकं दीयमानं विरमयिष्यामि, उदेष्यतश्च वर्द्धमानान्निरोत्स्यामि गच्छता कालेन चेमान्सर्वान्राजसात्करिष्यामि।

शिक्षाद्वारीभूतामाङ्ग्लीं वाचमपनीय हिन्दीमेव तत्स्थानमापादयिष्यामि। नात्र चिरं करिष्यामि। वैदेशिक्या वाचो द्वारीकरणेन या ज्यानिरस्य देशस्याजनि तदजन्य[6]मिवाभूत्। सत्यं पक्षपातकषायितलोचनैराङ्ग्लैः शासनाधिकृतैर्नृशंसमाचरितमेतद्देशजेषु यदत्रत्याः पेलवधियः सुकुमाराः कुमाराः परकीयया वाचा सर्वं शिक्षणीयं हठाद् ग्राहिताः, सोऽयं महाननर्थः, एनमप्यपाकरिष्यामि।

अत्र देशे भूयिष्ठा अनक्षरा अल्पिष्ठा एव साक्षरा ये पठितुं लेखितुं गणयितुं च विदुः। पुंसु प्रतिशतमष्टौ सन्त्येवंविधाः साक्षराः स्त्रीषु च चतस्र एवेत्यबोधतामिस्रनिलीना जनताऽऽत्मानमुन्नेतुमनीशा देशस्य

---

१. उपाध्यायकृत्यम्। २. आचार्यकृत्यम्। ३. ज्ञानं विज्ञानं च मूलधनं येषां तेभ्यः। ४ अनन्यमनसः। ५. षिध गत्यौ भ्वादिः सेट्। ६. उत्पातः।

पाताय सर्वाङ्गीणाय कल्पतेतमाम्। अमूमनिष्टामवस्थां प्रतिविघातुमादितः पञ्च कक्षा व्याप्नुवतीं बालशिक्षां निःशुल्कामावश्यकीं च विधास्यामि।

अध्याप्येषु विषयेष्वपि गुर्वर्थं कमपि परिवर्तं विधास्यामि। विद्यालयेषु संस्कृतं सर्वस्य पाठ्यमवधारयिष्यामि। महाविद्यालयेषु न्यायादिदर्शनान्यैच्छिकेषु पाठ्यविषयेष्वन्तःकरिष्यामि। नागरिकशास्त्रं शारीरशास्त्रं स्वास्थ्यशास्त्रमित्यस्यां शास्त्रत्रय्यां पूर्वतोऽधिकतरमवधानं दीयमानमेषिष्यामि। इतिहासशिक्षणविधामपि साधूकरिष्यामि, येन देशस्यास्य प्राक्तनो गरिमा विजृम्भेत मातृभूमिप्रेमा चोपचीयेत। यथा पाठ्यविषयेषु वैशारदी परीष्टिषु यथेष्टाङ्कलाभायाऽपेक्षितेति मता तथा शरीरसौष्ठवमप्यपेक्षितं करिष्यते। खेलास्वन्यतमायामार्हन्तीमपि परीक्षोत्तरणेऽङ्गं करिष्यामि। सरुजः कृशाङ्गा विकलाङ्गा वा परीक्षाः समुत्तीर्णा अपि किं करिष्यन्ति वराकाः। वर्चस्विन इष्यन्ते युवानो न तु निच्छायवदना म्लानानना वा। इदं च नियमयिष्यामि मा तावत्कश्चित् परीक्षोत्तीर्ण इति प्रमाणितो भूद्यावत्स चतुरवरान् मासान् प्रगल्भवयसोऽपठितिनो[२] नापीपठदिति।

प्रवर्तमाने शिक्षासंविधाने कलाः शिल्पानि चोपेक्षितप्रायाणि, तन्नाहं सहे। अत्र बुद्धिव्यायामो भवति न पाणिपादव्यायामः। नैतदेवानिष्टम्। अनिष्टान्तरमपि महत्तरमस्ति। नानाभाषागणितेतिहासादीन्विषयानधीतवन्त उच्चैस्तमामपि कक्षामुत्तीर्णवन्तो न क्षमन्ते विपुलां वृत्तिं वर्तयितुम्। भूयांसस्तथाऽभिविनीताः स्वतन्त्रां व्यापृतिं राजनियुक्तिं वा नासादयन्ति, क्षुधा च बलवदवसीदन्ति। शिल्पादिशिक्षासंविधानेन निर्व्यापारता यूनामपैष्यति, तेन चाभ्यधिकं पदार्थजातमुपयोग्यमुद्भविष्यति समर्धिष्यति च देशः।

अविदितपूर्वाण्यसम्यग्विदितानि चेतिहासादीनां तत्त्वानि यथा विदन्तो विविदिषन्तो वाऽनुसन्दधीरंस्तथा तत्कार्यनिर्वाहणाधिकरणानि राजकीयकोषानुगृहीतानि प्रवर्तयिष्यामि एवंविधान्यपराण्यपि विज्ञान-

१. योग्यताम्। २. पठितमेभिरिति पठितिनः। इनिः। ते न भवन्ति।

स्यानुसन्धातॄणि विधास्यामि येन ज्ञानविज्ञानभासा भारतमिदं वर्षं[1] भूय उद्भासितं स्यात्।

अद्यत्वे यः कश्चिन्मैट्रिक्युलेशनपरीक्षामुत्तरति शुल्कादिदाने च समर्थो भवति सोऽविशेषेण महाविद्यालयं प्रवेष्टुमर्हति। अर्होनर्हो वाऽयं भूयोविद्याया इति न गण्यते। रुचिरस्य तत्र तत्र विषयेष्वस्ति न वेति न चिन्त्यते। प्रज्ञामेधे वाऽस्य ग्रहणधारणोपयोगिन्यौ भवतो न वेति न विचार्यते। अयमपि महाननर्थः। इदंलक्षणाश्छात्रा न केवलमात्मना नाधीयते परेभ्योपि साध्वध्येतुं न दिशन्ति। ते हि गुरुभिः प्रोक्तानर्थान् न साधु प्रतिपद्यन्ते, तेनान्यत्रमनसो भूत्वा सांराविणं[2] विदधते। एवं विधिवत्प्रक्रान्तमध्यापनं प्रतिहन्यते, येऽध्येतुकामास्ते मुधा सीदन्ति न च पारयन्ति ज्ञानवृद्धिमभिकाङ्क्षितां सम्पादयितुम्। अतोत्र नियमं करिष्यामि मैट्रिक्युलेशनपरीक्षामुत्तीर्णाः कालेजं प्रविविक्षवो भूयः परीक्ष्यन्तां तेषामुत्तीर्णानां केचनैव व्युत्पत्तिमन्तः प्रवेश्या इति निर्धार्यतामपरे च पराक्रियन्तामिति। तेन निरुक्तः प्रकृतो दोषः प्रतिविधास्यतेऽध्ययनाध्यापने च निरन्तरायं प्रवर्तिष्येते।

यदीदं मया संकल्पितमनुष्ठीयेत सर्वस्येष्टं विधीयेत भद्रं च सर्वत्र भाव्येत। अयमेव तु खेदः सुदुर्लभं मया मन्त्रित्वमिति।

---

## (८) दायं चेदतर्कितं हरेथाः कथं तमुपयुञ्जीथाः

कुतो मे भाग्यं दायं हरेयेति। अहमस्मि दीनः सुतरां विनिपतितो व्यूढश्च। ज्ञातयश्च मे दृक्पातेनापि नानुगृह्णन्ति माम्। सम्पत्सम्पदमनुबध्नाति विपद्विपदमिति, ईश्वरानेवेश्वरतरान्करोति [1]शतधृतिरिति च बहुशः श्रुतोऽयमर्थः, तेन न संभावयामि दायं हरेयेति। परं यदि नामासंभाव्यमुपनमेदहं च दाये भागी स्यां तदा कृती स्यां धन्यं च भगवन्तमसकृद् ब्रूयाम्।

---

१. अभिव्यापकं संरावम्। २. ब्रह्मा।

यदि मे कोटी रजतमुद्रा दाय इत्युपनमेयुस्तदा ताः कथमुपयुञ्जीयेति जायते विचारणा। अल्पीयसि तु सहस्रकतिपयात्मके दाये तदुपयोगकथन्ताप्रश्न एव नोदेति तावतोऽर्थराशेर्योगक्षेमसंसिद्धावेव निःशेषमुपयोक्ष्यमाणत्वात्।

कोटिर्मुद्रा इति महानयमर्थराशिर्नाम। तेन स्वसविधे दूरक्षा इमा इत्येताः सपदि धनागारे न्यसिष्यामि। तेन तत्र सुरक्षिताः स्थास्यन्ति यथेष्टं च वृद्ध्या वत्स्र्यन्ति[1]। "आत्मानं सततं रक्षेद् दारैरपि धनैरपी"ति नीतिविदामनुशिष्टिमादृत्य स्वे साहित्ये नदीष्णोऽपि कापिलादिषु दर्शनेषु लब्धवर्णोऽपि पाणिनीये च प्रवीणोऽपि विदेशान्प्रस्थास्ये भूयो विद्यायै। शर्मण्यदेशे आङ्गलदेशेऽन्यत्र च यथापेक्षं कलाः शिल्पानि च राजनीतिं चार्थशास्त्रं च प्रकाममभ्येष्ये। एवं व्युत्पन्नोऽपि बहुश्रुतोऽपि शिल्पेष्वनेकेष्वभ्यन्तरोऽपि बहुदृश्वा स्यामिति मनीषया भुवं भ्रमिष्यामि। सर्वप्रथमं यं यूरोपभूखण्डस्य नित्यरुग्णं[2]ग्लास्नुं मानुषं समाचक्षते, यश्च कामलपाशा इत्यनेन नायकेन पुनरुल्लाघीकृतस्तरुणीकृतश्च तं, तुरुष्कदेशं दिदृक्षुरुपयास्यामि। ततो रूसदेशं च प्रपत्स्ये। तत्र स्टालिनादिभिर्महाभागैर्वैषम्यं व्यावर्त्य कथं साम्यं सार्वत्रिकं समस्थापि परितोषश्चाभूतपूर्व उदपादीति ज्ञास्ये। ततो जापानं व्रजिष्यामि। तत्र लोकानाममेरिकापरिभूतानां चित्तवृत्तीरालोचिष्ये, प्रथाश्च लौकिकीरवलोकिष्ये, ग्रामशिल्पानि च प्रतिकुटीरं प्रवृत्तानि समीक्षिष्ये। ततश्चीनदेशं क्रमिष्यामि। कालिकेन[3] मिथः कलहेन समुत्सादितं महान्तमिमं नीवृतं संनिकृष्टः प्रेक्षिष्येऽन्तर्भेदस्य च हेतूनुपलप्स्ये। ततोऽहमृद्धिमतीममेरिकां प्रपत्स्ये। तत्रत्यं तं तं समयम्, इहलोकं च प्रति पौराणां जानपदानां च कीदृशी बुद्धिरिति विशिष्य परीक्षिष्ये। एवमुपलब्धभुवनवृत्तान्तोऽहं महान्तं यात्राप्रबन्धं प्रणेष्ये यत्र च तत्तल्लोकवेदनीयं कौतुककरं चार्थजातं प्रकाशयिष्ये।

स्वं देशं प्रत्यावृत्तोऽहं परिशिष्टेन मदीयेन द्रव्यनिचयेन जीर्णां विलुप्तप्रायामेतद्देशजां संस्कृतिं पुनरुद्धर्तुमना योगां[4]स्तांस्तानास्थास्यामि। सम्प्रति

---

१. वर्धिष्यन्ते। २. रोगेण क्षीणम्। ३. प्रकृष्टकालेन। ४. उपायान्।

दुःस्मरः स्वप्नायितः स कालो यत्र ग्रामे ग्रामे काठकं कालापकं चाधीयते स्म। यत्र सूतस्य च वैयाकरणस्य च शब्दसाधुत्वे प्रावृतद् विवादः। नचिरातीतः श्रीभोजसमयोऽपि मर्मसु नः स्पृशतीव स्मर्यमाणो यत्र-तन्तुवाया अपि कविकर्मणि कुशलाः 'कवयामि वयामि यामी'त्यभूवन् वक्तारः। नेदानीं क्वचिदृचोऽधीयन्ते, यजूंषि पठ्यन्ते सामानि वा गीयन्ते। निःस्वाध्यायानि श्मशानतुल्यानि द्विजन्मनां गेहानि जातानि। न हि क्वचिन्निगमेषु पत्तनेषु ग्रामेषु वा रामायणं वा भारतं वा वाच्यते, पुराणं वा प्रक्रियते। अस्तंगताः सम्प्रति विद्वत्समाजाः शास्त्रार्थविचाराश्च। समुत्सादं गताः शास्त्रविधयः पारम्पर्यागताः समाचाराश्च। विलयं गताऽऽस्तिक्यबुद्धिर्भक्तिश्च। हन्त विपर्यस्तं जगत्। किमेतेन मे द्रव्य-निचयेन यद्यहं 'दुःसमाधानामिमामवस्थां न समादधीय। तस्मात्सर्वत्र देशे वेदवेदाङ्गविद्यालयान्स्थापयिष्यामि, यत्र वन्द्यचरणान् विद्यापारगान्विप्रानध्येषिष्यामि, समुचितेन च योगक्षेमप्रकल्पनेन तान्निकामं परितोषयिष्यामि पर्याप्तं च पुरस्करिष्यामि। संस्कृतेरुद्धारकं सङ्घं च प्रवर्तयिष्यामि, तन्निघ्नाश्च प्रतिग्रामं गीतासभा निर्मापयिष्यामि। यत्र सर्वो लोको बालो वा युवा वा वृद्धो वा स्त्रीजनो वा भगवन्मुखारविन्दनिर्गतानि ग्राहयिष्यते गीताक्षराणि। इदं च संविधास्ये सर्वत्र—देवतायतनेषु रामायणं वा भारतं वाऽनुदिनं वाच्येतेति। सङ्घेन च निरुक्तेन यत्र तत्राटाट्यमानेन धर्मप्रवचानि कारयिष्ये, पुरातनं देशगरिमाणं ख्यापयिष्ये श्रद्धां च युवसु समुत्पादयिष्ये। आशंसे समानेनोद्योगेन यथेष्टमभ्युदेष्यति देशः, पुनरुज्जीविष्यति संस्कृतिर्जागरिष्यति चाभिनवा धर्मेऽभिरतिरिति।

इदं च मत्कर्तव्यतामरिष्यति-देशो मे दारिद्र्योपहतः, स उद्धर्तव्यः। सन्तीह भूयांसः सकलाङ्गाः प्रकृतिस्थशरीराश्चारुगात्रा ये दिनस्य द्विः पर्याप्तं भोक्तुं न लभन्ते। तेनाहरहः क्षीयन्ते, क्षीणाश्च वृत्ततो हीयन्ते। स महाननर्थः। सोऽयं सपदि प्रतिविधातव्य। एतं प्रतिविधित्सुरहं समु-

---

१. दुःखेन समाधातुं शक्याम्। खलर्थे युच्।

चितेषु प्रदेशेषु शिल्पशालाः कलाभवनानि च भावयिष्यामि यत्र शतशः सहस्रशश्च यून उच्चावचेषु शिल्पेषु कलासु चानेकास्वभिविनाययिष्यामि, येन ते यत्र तत्र नियोगं लभेरन् भुक्तिं च विपुलामश्नुवीरन् सुखं च वर्तेरन्निति ।

इदं चापरमनुपेक्ष्यं मम । सन्त्यत्र देशेऽर्थिनः समर्थाः शास्त्रेणापर्युदस्ता इति सर्वथाधिकृता [1]उपाकर्मण्यन्यत्र चागमेषु । परं दैवहतकेन पर्युदस्ता इति न पारयन्ति विद्यया[2] स्नातुम्, अकाले च समावर्तन्ते गुरुकुलात् । अयं हि महतीनां शुचामवसरो यन्नेह क्वचिदपि प्रणिपातेन सेवया च शक्या विद्योपादातुम् । शुल्केनैवाल्पेन महता वा वितीर्यते सेति ये नेशते शुल्कं वितरीतुं ते न सहन्ते विद्याकणानप्युच्चेतुं किमुत सारस्वतं सर्वस्वमादातुम् । सम्प्रति नवाऽध्यापनवैदग्धी, नवश्चाध्ययनडम्बरः । भृतका अध्यापका भृतिमात्रे समादृता न शक्ताः शिष्यान्पुत्रीयितुमिति येऽनीश्वरा यथावदात्मानमपि यापयितुं ते पुस्तकावलिमध्येयां कुतः क्रीणीयुः कुतश्च गुरून्प्राभृतैस्तोषयेयुः । अतः सहस्रशः कुमाराः प्रदीप्ताभ्यां प्रज्ञामेधाभ्यामुपपन्नाः कर्मसु दक्षा व्यवहारे च दक्षिणा अपि शुल्कादिदानेऽसमर्था इत्यकाल एवाधीतिं विरमयन्ति, शोकेन चासह्येन पितॄन् योजयन्ति हृदयालूंश्च मद्विधान्खेदयन्ति । अयमपि वारणीयोऽनर्थ इति तद्वारणाय तेषां कृते पुष्कला वृत्तीः कल्पयिष्यामि मासिकीः, येनामीषामध्ययनमप्रतिबन्धेन प्रवर्तेत न चान्तरा विच्छिद्येत ।

प्रत्येम्येवं सूपयुक्तो मम दायो भविष्यतीति ।

इति श्रीचारुदेवशास्त्रिणः कृतौ प्रस्तावतरङ्गिण्यामाख्यानात्मकप्रस्तावविषयस्तृतीयस्तरङ्गः ।। ३ ।।



---

१. संस्कारपूर्वके वेदारम्भे । २. विद्यापरिसमाप्त्या कलणेन स्नातुम् ।
३. सहृदयान् ।

## अथ चतुर्थस्तरङ्गः

### वर्णनात्मकाः प्रस्तावाः

इमं विषयमधिकृत्य [1]न्यक्षेणोक्तमुपोद्घाते। यदत्रातिरिक्तमनुशासनीयं तत्समस्य विन्यस्यते। वस्तुवर्णने नैपुणीमभीप्सता वर्ण्यस्वरूपं निर्वर्णनीयम्। इदमस्य प्रथमं कृत्यम् [2]सनीडस्थितश्चेदर्थो विवर्णयिषितस्तदा कात्स्न्र्येनासौ विलोकनीयः। असंनिहितश्चेदुत्प्रेक्ष्य करामलकवत्पुरः संनिधापनीयः। बहुशः पश्यन्तोऽपि वयं तस्य तस्यार्थस्यानेकान् [3]विशेषान्न पश्यामः, येनास्मद्वर्णनं तत्तदंशोपेक्षया विकलं भवति न सकलम्। वर्णननदीष्णाः कवयितारो हि निध्यानसम्पन्नाः साधीयश्चक्षुष्मन्तो भवन्ति। दृष्टविशेषेण च कृत्स्नेन सारासारविवेकपूर्वमसारमपास्य सारो वर्णनीयः। नो चेत्तस्य वर्णनाऽतिविस्तरा विरसा च स्यात्। यदेव युक्ततरं विच्छित्तियुतं च स्यात्तदेव संगृह्णीयात्। यथा ग्रामीणमुपवर्णयंस्तन्नेपथ्यं तत्संभाषां तदुच्चारणापूर्वतां च विशिष्य निरूपयेत्। सर्वत्र वर्णने क्रमविशेषं कञ्चिदातिष्ठेत्। उपमानादीनर्थालङ्कारान्यथास्थानं प्रयुञ्जीत यदि तत्र प्रभुः स्यात्। अनुप्रासादींश्च शब्दालङ्कारान्न बह्वाद्रियेत। अर्थनित्यः स्यान्न त्वनर्थकशब्दडम्बरे प्रणयवान्भवेत्।

### ( १ ) ग्रामोत्सवः

ग्रामोत्सवो नाम येन केनाप्यपदेशेन पुण्याहमिति व्यवसिते वासरे ग्रामीणानां प्रमुदितमनसां क्वचित्संनिवेशे[4] संनिपातः कदाचित्कस्यचित्सांयुगीनस्य[5] शूरस्यावदान[6]कीर्तनाय, कदाचिद् ग्रामाधिदेवताया गुणानुवर्णनाय, कदाचिद्विविक्तस्य सम्यग्दर्शनोपपन्नस्य लोकोत्तरस्य साधोर्दर्शनलाभाय, कस्यचिद्धर्माय स्वदेशाय वा त्यक्तजीवितस्य प्रकृष्टसत्त्वस्य

---

१. कात्स्न्र्येन। २. समीपस्थितः। ३. अङ्गानि। ४. निकषणे। ५. रणे साधोः (=प्रवीणस्य)। ६. अवदानं कर्म वृत्तं स्यात्।

शंसितव्रतस्य कस्यचित्पुंविशेषस्य श्रद्धयाऽर्चनाय, तच्चरितश्रवणाय वैष संनिपातो भवति लौकिकानाम्। मुदां प्रमुदां चायमवसर इत्यध्यवसाय-सोत्कलिकमेनममी प्रतीक्षन्ते। यथा यथा संनिधीयत उत्सवस्तथा तथै-धते तेषामौत्सुक्यमवसरप्रतीक्षाणां[1] विशेषेण शिशूनाम्।

उत्सवदिने प्रातस्तरां समुत्थायाऽऽवश्यकं[2] कृत्वाऽऽह्निकं च निर्व-र्त्योल्बण[3]माकल्पं परिकल्प्य विविधं च परिकर्म विधाय क्रेयकलापाय च विनियोज्यमर्थराशिं च सहादाय स्त्रियः पुरुषाश्चामोदातिरेकिणो यथा-यथं निकेतनेभ्यो निष्क्रामन्ति, उच्चावचैराक्रन्दैर्हृदयोल्लासं विजृम्भयन्तः सांराविणं[4] च कुर्वन्ति। उत्सवभुवं प्राप्तास्ते यथेष्टं विचरन्ति, स्निग्धै-र्वयस्यैः संगत्य विस्रब्धं लपन्ति, सोत्प्रासानि नर्माणि[5] च व्याहरन्ति, प्रणयपिशुनानीङ्गितानि च कुर्वन्ति, स्वोपज्ञाः[6] गीतिकाश्च गायन्ति, सहर्षोन्मादनिभराः समुद्धतं च समाचरन्ति।

उत्सवभुवि यत्र तत्र क्रमविशेषमननुरुध्यैव नानापण्या आपणाः सन्निवेशं लभन्ते। तत्रापूपिका मौदकिकाश्चापूपान्मोदकानन्यांश्च रसाढ्या-न्मधुरमधुरान्मृष्टानभ्यवहारान्सम्पाद्य क्रय्या इति पेशलं प्रदर्श्य यत आय-तश्च यात्रिकान्प्रलोभयन्ति, आकर्षन्ति च भूयिष्ठं जननिवहम्, अर्जन्ति चार्थौघम्। येऽपि विपणिनः खलु लवणसंसृष्टानि चणकचूर्णादिमयानि खाद्यानि विक्रीणते तेषां विपणिष्वपि भूयांसो जनाः समवयन्ति चिक्री-षया। यस्मात्सर्वत्र मेलके खादतमोदताऽश्नीतपिबता वा वर्तते विस्मृता-न्यकर्तव्यानां विप्रोषितचिन्तानां ग्राम्याणाम्।

क्रीडनकविक्रायाणां[7] रुच्यवस्तुविक्रायकाणां[8] च पण्यवीथिका अपि समाकीर्यन्ते नवनवार्थगृध्नुभिः प्रियतरपदार्थदिदृक्षुभिः क्रयेच्छुभिः। अहम्पूर्विकया च ते क्रीणन्ति तांस्तानर्थान्विनोदार्थान् रुच्यर्थांश्च, न चोपयोगमनुपयोगं वा मात्रयापि विविञ्चन्ति, द्रव्यविनियोगं वा गणयन्ति।

---

१. अवसरं प्रतीक्षन्ते, तेषाम्। णः प्रत्ययः। २. मलमूत्रत्यागम्। ३. उज्ज्वलम्। ४. अभिव्यापकं संरावम्। ५. हास्यानि। ६. स्वस्योपज्ञाः स्वयंकृता इत्यर्थः। ७. कर्मण्यण्। ८. अत्र ण्वुल्।

अत्र मेलके बालमनोविनोदाय प्रेङ्खणानि मण्डलपरिवर्तीनि चक्राणि चानेकत्र संविधीयन्ते । एतानि समारोहं समारोहं न तृप्तिमुपयान्ति शिशवः । कश्चिदैन्द्रजालिकः कुहुकं प्रदर्शं प्रदर्शं संनिहितं प्रेक्षकजनं कुतुकवशंवदं कुरुते । प्रबुद्धानपि तैस्तैः कार्मणैः[1] प्रातिहार्यैर्वा सम्मोहयति किमुताप्रबुद्धान्मुग्धानर्भकान् । कश्चिदाहितुण्डिकोऽहिखेलाः काश्चिदाश्चर्यकरीर्निदर्शयति वृत्तिं च विपुलां वर्तयति । क्वचिदगदङ्काराभासा अगदान्प्रसार्य वनौषधीश्च विविधवीर्याः समुद्घुष्य वैद्यकचुञ्चुतां च स्वस्य प्रख्याप्य कियतोऽप्यातुरानभिमुखीकुर्वन्ति बह्वर्थं च तान्मुष्णन्ति ।

कश्चिच्च ज्योतिर्विदाभासो ज्योतिर्विदाभरणमात्मानं मन्यमानो मञ्जुलेनेङ्गेन[2] सान्त्वेन[3] च भाषितेन यात्रिणो विस्रम्भयति स्त्रैणं वा वार्धकं[4] वा विशेषतः समाश्वासयति । तस्मै तस्मा[5] ईक्षमाण इव स तां वाचोयुक्तिं प्रयुङ्क्ते या सत्यमादेशिकोऽयमतीतानागतज्ञः, यद्ध यच्च जन्मपत्रिकां पर्यालोच्य व्याहरति तत्तत्परमार्थसदिति प्रत्याययति जानपदं जनम् ।

अपरत्र सामुद्रिकज्ञानलवदुर्विदग्धः कश्चिदाकारयति लोकान्भविष्यत्पृच्छापरवशान् । अयमपि कुशलः प्रतारणे । अयं प्रतिसन्धानं विधेत्यधीते । अनभ्यन्तरः शास्त्रेऽभ्यन्तरश्च कल्पनायां पटुपटुरयं किमप्यजानानोऽपि हस्तरेखा भूयो भूयः परीक्ष्येव पुरुषशीलस्य स्त्रीस्वभावस्य[6] च साधीयःसंविदानः सम्भाव्याः प्रायोभवाः काश्चन वार्ताः कीर्तयित्वा समृद्धिं व्यृद्धिं वा प्रष्टुराकारतोऽनुमाय गृहकलहादिकं च निपुणमभ्यूह्य[7] तत्तदाचष्टे, विश्वास्यश्च सद्यो भूत्वा भविष्यदधिकृत्य व्यामिश्रा वाचो ब्रवीति पुष्कलं चाजीवमर्जयति ।

अन्यत्र व्यसनिनः कांश्चिद् ग्रामीणान्व्यंसयितुं[8] द्यूतमारचयन्ति सभिकाः[9] । तत्राक्षैर्दीव्यन्तस्ते प्राकृता मातृमुखा[10] दुरोदराः[11] प्रयत्नार्जितं चिर-

---

१. ओषधिभिर्वशीकरणैः । २. इङ्गितेन । ३. अतिमधुरेण । ४. स्त्रीसमूहम् । ५. राधीक्ष्योर्यस्य विप्रश्न इति सम्प्रदानता । ६. शैषिकी षष्ठी । ७. 'उपसर्गाद्ध्रस्व ऊहतेः' इति धातोरूकारस्य ह्रस्वः । ८. प्रतारयितुम् । ९. द्यूतकारकाः । १०. मूर्खाः । ११. कितवाः ।

सञ्चितं स्वमर्थं क्षणेनैव हारयन्ति, अधन्या वयम् , अकरुणाः खल्वीश्वराः, निरनुक्रोशो हताशो विधिरित्येवमाक्रोशन्ति ।

अपरे सुरापायिन आपानमुपेत्य मनोहृत्य च पीत्वा सुरां क्षीबा घूर्णन्नयनाः स्खलद्गतयः कथं कथमपि ग्रामाय प्रयान्ति वाच्याश्च भवन्ति स्वानां[1] ग्रामवृद्धानां चेतरेषाम् ।

अस्तं यियासति भगवति भास्वति समुपसंहृतो भवत्युत्सवः, प्रहृष्टवदनाश्च लोका गृहानभित्वरन्ते, गृहगताश्च यथास्वमनुभवमधिकृत्य चिरं मिथः सम्भाषन्ते बहु प्रह्लादन्ते ॥

---

## ( २ ) तीर्थं वाराणसी

इह भारते वर्षे सन्त्यनेकानि तीर्थानि । इमानि प्रायेणानुनदि स्थितानि । अत एव ऋषिजुष्टाम्बु तीर्थमित्याभिधानिकाः । अपहतपाप्मभिर्महात्मभिश्चिरमध्युषिताः प्रदेशाः [2]प्रयता भवन्ति पूज्याश्च । अत एव 'यदध्यासितमर्हद्भिस्तद्धि तीर्थं प्रचक्षते' इति कविकुलपतिः कालिदासः । वाराणसी खल्वपि तीर्थम् । अनुगङ्गं चेयं स्थितेत्युत्कर्षप्रकर्षोऽस्याः । इयं ह्यधिवासो भगवतो विश्वनाथस्य मर्त्यलोकस्थितस्य । यथा 'जरूसलम्' ख्रिस्तीयानां यथा वा 'मक्के'ति मौहम्मदानां तथा वाराणसी भक्तिभाजनं श्रद्धास्पदं चार्य्याणाम् ।

काश्यां मरणे मुक्तिरिति श्रद्दधानाः पश्चिमे वयसि वर्तमाना विपश्चितोऽविपश्चितो वा धनिका अधनिका वा दिग्भ्यो विदिग्भ्यश्च परापत्येह निवसन्ति मृत्युं च प्रतिपालयन्ति । येऽपि नाम वाराणसीमभितो ग्रामास्तत्राप्येष समाचारो यदि ग्रामेऽन्तरेव कश्चिदुपरमति तर्हि प्रेतमिहैव[3] हारयन्ति यथाशास्त्रं च संस्कुर्वन्ति ।

सेयं वाराणसी कदा [4]प्रत्यष्ठात्केन वा निर्वृत्तेति न विशिष्य विद्मः । इदं तु प्रथते पुराणेष्वैक्ष्वाको राजर्षिः श्रीहरिश्चन्द्र इहैवात्मानं चाण्डालाय

---

१. ज्ञातीनाम् । २. पवित्राः । ३. शवम् । ४. प्रतिष्ठामगमत् ।

विचिकित्से । इदं च दृढतरं प्रतीमो यदा सुगतः सारनाथे मृगाजिरे धर्ममनुशशास तदाऽपि वाराणसी वैदिकैकनिलयो विद्यापारदृश्वनां ब्राह्मणानामावास[1]आस । तदात्वेऽपि सहस्रशो भक्तिप्रह्वा यात्रिकाः पावनीमिमां शिवपुरीं तीर्थमिति तारयिष्यति नो भवार्णवमिति च धिया सोत्कलिकं प्रपेदिरे । ब्राह्मणगाथासु बौद्धकथानकेषु चैषा बहुमानपुरःसरं कीर्तिताऽभूत् । इदं हि पुण्यतमं तीर्थमार्य्याणामित्यसहमानाः परमतमपद्विषन्तः स्वस्यैव[2] परमार्थतो द्विषन्तः पशुप्रायास्तुरुष्कप्रभृतयो मुगलाद्याश्चास्कन्तार इमां वाराणसीमवस्कन्दमवस्कन्दमुत्सादयाञ्चक्रुर्देवतायतनानि चोज्जासयामासुः । अवरङ्गजीवस्त्वक्षिदुःखितो दीपशिखामिव नार्य्याणां स्थितिं सेहे, नामीषां चरणं[3] चक्षमे न चैतेषामर्हणाविधां ममृषे[4] । अयं हि राजापसदः श्रीविश्वनाथमन्दिरमप्यखण्डयत्स्वीयानि च सुकृतानि । निरमाच्च तत्स्थानापन्नं मस्जिदाख्यं पारमेश्वरं गृहम् । परमद्यापि वाराणसी तामेव बहत्यविहतां पुराणीं सुषमाम् । अद्यापि सामगानां पुण्यो वेदध्वनिर्मूर्च्छति श्रवणयोः । अद्यापि बटूनां बद्धब्रह्माञ्जलीनां स्वाध्यायमधीयानानां द्यां स्पृशति पावनः श्रौतध्वानः । अद्यापि शास्त्रार्थप्रवृत्तानां विप्रवदमानानां[5] विप्राणां विचरति कलकलः काष्ठाः । अद्यापि पूर्ववत्समवयन्त्यत्र यतस्ततो विद्याकमनाः[6] प्रदीप्तप्रज्ञानाः । अद्यापीदं पुण्यतमं तीर्थमिति श्रद्धयोपयन्ति पुञ्जानुपुञ्जशो यात्रिकाः । अद्यापि स्थगितरोदसीकन्दराः समुच्चरन्ति देवालयेषु सायम्प्रातिकास्तूर्यनादा मङ्गल्याश्च शङ्खस्वनाः । किं बहुना । कालपरिवासेनाप्यपर्युषितशोभाऽनुपहतयाशाः पूर्ववद् विराजते नगरीयं सुरयुवतिरिव निर्जरा ।

हरिवर्षीया वाराणसीं वीनिस् इति प्रख्यातेन रामणीयकनिकेतनेनाधिष्ठानेनोपमिमते । सत्यं हरिवर्षस्योपवनायते तदिति, समुद्रोर्मिमालाभिश्च परिचुम्बितं कामप्यभिख्यां धत्त इति, वाराणसीदर्शनं त्वन्या एव जागरयति भावनाः । यदा वयं रेलयानमारूढाः प्रातस्तरां भागीरथीसेतु-

---

१. विदीपे । अस गतिदीप्त्यादानेषु भ्वादिः स्वरितेत् । २. द्विषः शतुर्वेति पक्षे षष्ठी । ३. आचारम् । ४. मृष तितिक्षायां स्वरितेद् दैवादिकः । ५. 'विभाषा विप्रलापे' इत्यात्मनेपदविकल्पः । ६. विद्याप्रणयिनः ।

मतिक्रामामो वाराणस्यां च दृशौ पातयामस्तदा यत्पश्यामो न [1]तत्प्रस्मर्तुं पारयामः । बालार्कमयूखोपरक्तानि भास्वन्ति देववेश्मानि हर्म्यशृङ्गाणि च, समुच्छ्रायवत्यः क्रमनिम्ना अवतारभूमयः, सामि वर्तुलाऽनुगङ्गं स्थिता परिणाहवती[2] च नगरी—सर्वमिदं यात्रिकचेतसि यं भावमुद्भावयति तं नालं पाश्चात्यो यथातथं द्रष्टुम् । यात्रिकस्येदं दर्शनं मृगितार्थस्योपलब्धिर्वा स्वस्य स्वप्नस्य चरितार्थता वा । यो ह्यस्य परितोषो हृदये समुल्लसति स परिच्छेदमत्यन्तमत्येति ।

देवागाराणि च भूम्नाऽमरतटिन्या रोधसि संनिविष्टानि । इमानि च निशान्ते यात्रिकसम्बाधानि भवन्ति । विशालानि बद्धभूमीनि सरित्तीर्थानि विशेषतो रम्याणि । तेषु दशाश्वमेधतीर्थं मणिकर्णतीर्थं केदारतीर्थं बृहत्तमानि यात्रिकैरासेवितानि । विश्वनाथमन्दिरस्य नेदीय इत्याख्यानेषु बहुश्रुतमिति च दशाश्वमेधतीर्थं भूयिष्ठान्समाकर्षति यात्रिकान् ।

अत्रोदीच्याः प्राच्या अवाच्याः प्रतीच्याश्च स्वेन स्वेन नेपथ्येन परिष्कृताङ्गाः सञ्चरन्ति । केचिदुष्णीषिणोऽपरेऽनुष्णीषाः, केचिदामुक्तोपानत्काः[3] परेऽवमुक्तोपानत्काः, केचिच्छाटकिनोऽन्ये [4]पादायामधृतो यथास्वं भारत्या भाषमाणाः किमपि वैचित्र्यमस्या जनयन्ति । अनारतं चेह भक्तवत्सलः परमेश्वरः कीर्त्यते प्रजागरव्रतैः प्रणतैः[5] । इदं च श्रद्धीयते तैः पुण्यप्रसन्नसलिलायां भगवत्यां भागीरथ्यामाप्लवो[6] नो निर्हेणिष्यत्येनांसीति ।

वयोवृद्धानां ज्ञानवृद्धानां चेयं वसतिर्वाराणसी । इहत्यानि देवतायतनानि प्रायेणाश्मानि[7] । नैतानि निर्माणसौष्ठवस्य हेतोरनन्यसाधारणानि, पावित्र्येण तु सर्वातिशायीनि । विश्वनाथमन्दिरमन्नपूर्णामन्दिरं च मन्दिरान्तराणि सुदूरमतिक्रामतो गरिम्णा । यदि श्रद्धाभक्त्युपपन्नो यात्रिकः शिवलिङ्गं स्प्रष्टुं लभतेऽन्नपूर्णां वा साक्षात्कुरुते तदा विपक्त्रिमाणि[8] मे

---

१. विस्मर्तुम् । २. 'परिणाहो विशालता' तद्वती । ३. बद्धोपानत्काः । ४. 'पायजमा' इत्यस्यानुकरणशब्दः । ५. भक्तैः । ६. स्नानम् । ७. अश्मनो विकाराः । ८. विपाकेन निर्वृत्तानि ।

सुचरितानि फलितानि च गुरुजनाशीर्वचनानीति धन्यमात्मानं मन्यते। वेणिमाधवमन्दिरं चात्र चित्रेण निर्माणेन किमपि विस्माययति दर्शकान्। एतत्सदेशेऽवरङ्गजीवनिर्मिता मस्जिदस्ति, यस्याः समुच्छ्रिते शृङ्गे मन्दिरस्यैवैते इति वाराणसेयैर्गण्येते। एकतरमपि समारूढेन जनेन शक्या सर्वा वाराणसी मनोरमा द्रष्टुम्। अपरं चेह तथाविधं जयपुराधीशेन श्रीमानसिंहेन कारितं विस्मयनीयं वेधगृहं चकास्ति यत्र प्राचीनज्योतिर्विदुपयुक्तानि नक्षत्रादिप्रेक्षणोपकारीणि तत्तत्कार्तान्तिककृतान्तकलनकल्पानि[1] साधनान्यद्यापि विराजन्ति।

नक्तं च यथा दीप्तिमत्तां विभूतिमत्तां च वाराणस्या विभावयामो न तथा दिवा। आरात्रिकमिति मन्द्रध्वाना नदन्ति घण्टा मन्दिरेषु त्वरयन्ति च भक्तान्संनिपातयन्ति च तान्प्रवेशद्वारेष्वङ्गणाभोगेषु च। स्फटिकविशदेन पयःपूरेण मन्दमन्दमकति मन्दाकिनी, प्रतिफलितानि चात्रोपकण्ठस्थितानि दीप्राणि हर्म्याणि देवतागाराणि च यत्सत्यमासेचनकानि[2] भवन्ति। पारेगङ्गं च निशम्यन्ते देवतार्चायां प्रवृत्तानां दैवतस्तवाः शाखानुगाः।

अस्तीहार्वाक्कालो विश्वविद्यालयः। सन्ति चेह वज्रकनिर्मिताः पन्थानः। सन्ति च वैद्युताः प्रदीपाः। सन्ति चापां नालिका नगराधिकृतैः संविहिताः। इदं चापरमभ्युपेयम्—साम्प्रतिकं वार्तोन्मुख्यं साम्प्रतिकमुद्योगतात्पर्यं साम्प्रतिकं विज्ञानवैयग्र्यं च वाराणसीमपि कलयाऽऽक्रान्तवन्ति दृश्यन्ते, तथापीदं न पार्यतेऽपह्नोतुं वक्रासु वाराणस्या रथ्यासु, महत्सु तीर्थेषु, विचित्ररचनेष्वाश्मेष्वस्या देवतायतनेषु वरीवृत्यते सुरक्षिताऽनपायिनी श्रद्धाऽनुरक्तिश्च दृढभूमिर्देवतासु। स्यादेतत्। इहाऽऽवसथेषु शीलभ्रंशः, पुरोधसो वा प्रतारका यात्रिकद्रव्यपिशितपिशाचाः, देवतास्तु समुदिता इमामेव पुण्यां पुरीमावसन्तीति॥

---

१. तत्तद्दैवज्ञसिद्धान्तनिर्णयसमर्थानि। २. 'तदासेचनकं तृप्तेर्नास्त्यन्तो यस्य दर्शनात्'—इत्यमरः।

## ( ३ ) पर्वतयात्रा

### ( अत्रात्मनानुभूतानां वृत्तान्तानामुपन्यासः )

एकदाऽहं मासत्रयात्मके नैदाघेऽनध्याये सपुत्रकलत्रः काश्मीरान्प्राप्तः, तत्राक्षयबलमिति प्रथितस्य स्रोतसः सदेशवर्तिनि ग्रामे स्थितिमकरवम्। सति मासात्यये प्रत्यासीदन्त्याममरनाथयात्रायां ममापि बुद्धिरभूदमरनाथं तीर्थराजं पादचारेण यायां बहु च पार्वतं प्रेक्षणीयं प्रेक्षेयेति ! एकतः स्फटिकविशदं शिशिरं सुरसं स्रोतःसलिलं यन्निपीयामयावी जनोऽपि क्षिप्रं कल्यतां याति चिरं वातं च जीवति, प्रैरिरन्मामवस्थितये, अपरतः [1]कर्णाकर्णि श्रुतानि हृदयसंवननानि सर्गसौन्दर्यनिदर्शनानि पार्वतानि स्थलानि प्राचूचुदन्प्रस्थितय इति यत्सत्यं चिराय दोलाचलचित्तवृत्तिरभूवं न चापपारमेकतरमध्यवसातुम्। परं तत्रैव किमप्यहः[2] समापन्नो[3] मया शरच्चन्द्रो नाम कश्चिद्वङ्गाभिजनः। सम्बन्धमाभाषणपूर्वमाहुरिति यदुक्तं पूर्वसूरिभिस्तदस्मद्विषयेऽप्यवितथमभूत्। असंस्तुतचरेऽपि तस्मिञ्जने महत्सौहार्दं ममाविरासीत्। अयमप्यमरनाथयात्रोत्सुकोऽभून्ममात्मजोपीत्यभृशायत ममापि कुतुकम्। तेन निरचैषं तेन च सुहृदा सुतेन च समं यायामिति। यात्रायामपेक्षिष्यमाणमर्थजातं सद्यः समबिभरम्। और्णानि परिधानानि नीशारादीनि च शीतपरित्राणानि संगृहीतानि वानानि[4] च वातामादीनि फलान्युपात्तानि। यद्यपि ततः कश्चिदध्वा शक्यो मोटरयानेनापि वाहयितुं तथापि यानेन यातां नो मन्दा तीर्थराजे श्रद्धेति व्यक्तिप्रसङ्ग इत्यक्षयबलत एव पदाभ्यां प्रायाम। संभारभारवहनाय तु स्थौरी[5] कश्चित्परिक्रीतः[6]। तत्स्वामिना सह चरिता वयं चत्वारोऽभूम। प्रगे ततः प्रस्थिता वयं पूर्वाह्णे मार्तण्डमागाम। मार्तण्डमिति वसतिः पण्डितकानाम्। इमे हि पौरोहित्यमात्र-

---

१. शास्त्रानुग्रहवर्जितोऽपि शिष्टजनपरिगृहीतोऽयं प्रयोग इति नास्य साधुत्वमभिशङ्कनीयम्। २. अत्र कल्पमुत्थायेतिवदत्यन्तसंयोगे द्वितीया। ३. संगतः। ४. शुष्काणि पै सोवै शोषणे, निष्ठा। ५. पृष्ठ्यः, भारवाही तुरङ्गः। ६. कंचित्कालं भाटकेन क्रीतः।

संश्रयाः प्रायेणानक्षरा लोकवंशानुक्रमरक्षणपराः कथंकथमपि वृत्तिं वर्तयन्ति। इतो नातिदूरे पुरातनं मार्तण्डमन्दिरं खण्डशः कृतं वर्तते। सर्वत्र भारते वर्षे इदमेवैकं सवितुर्देवताया आयतनमभूत्। यदस्यावशिष्यते ततः शक्यमनुमातु महापरिमाणं महोच्छ्रायं त्वाष्ट्रं निर्माणमिवापूर्वमासीदिदमायतनम्। अस्य पारिमण्डल्ये समुत्कीर्णानि श्रीकृष्णादिसादृश्यानि निपुणं परीक्ष्यमाणानि पिशुनयन्ति किमपि कलाचुञ्चुत्वं नः पूर्वजानाम्। कृताहाराः कृतविश्रामाश्च वयं ततः प्रासराम। सर्वे वयं चारशीघ्राः, नैकतमोऽपि मन्थर इति त्वरितं क्रामन्तः स्थौरिणं चातिधन्तोऽनस्तमित एवार्के पहलग्रामं प्रापाम्, नक्तं च तत्रावसाम।

श्वोभूते प्रातस्तरामेव तत उदचलाम। साधुमण्डलं तदनुगाश्च यात्रिणः परेद्यवि ततः प्रस्थातार इति ज्ञात्वा पूर्वतरमेव नः प्रस्थानं सुखं प्रियं च भविष्यति, जनसम्बन्धश्च समुद्वेगाय भवित्यति, कलकलश्च कर्णज्वरायेति निरचिन्म। पहलग्रामे या वहति गिरिनदी तामेवानुसरन्तो वयं चन्दनवाटीं प्रति प्रस्थिताः। अतीते कियत्यप्यध्वनि भगवतो भास्वतः प्रथमतराः स्वर्णवर्णा गभस्तयो नोद्गणोः संनिकर्षमायन्, महान्तं चामोदमजनयन्। हिमाच्छिन्नानि हिमवतः शृङ्गाणि समुद्भासितानि राजतानि [1]शिरोगृहाणीव कामपि सुषमामपुष्यन्। सुभगः सुरभिः शीतलश्च प्रगेतनः समीरः प्राणान्नवानिवान्तःशरीरे समचारयत्, स्फूर्तिं चापूर्वामकुरुत गात्रेषु, तृप्तिं च करणेषु। तेन नास्माकं मनागप्यध्वखेदोऽभूत्। मध्याह्नेप्यर्कमयूखा न समतपन्नः। [2]छायातरुभिः प्रस्रवणैश्च प्रच्छायशीतलास्तत्र तत्र पथिष्वासन्प्रदेशाः, येषु स्थायं स्थायं जलं च विमलं पायं पायं वयं हेलयैव चन्दनवाटीं प्राप्ताः।

चन्दनवाट्यां वयं क्रोशं दीर्घां हिमानीमालोकयाम। इदं हि नः संघातकठिनस्य हिमस्य प्रथमं दर्शनम्। अधस्ताच्चास्याः सलिलं प्रावहदिति शक्यं मुखतोऽस्या विलोकितुम्। इमां च हिमानीमतिक्रम्यैव सर्वैर्यात्रिकैर्गन्तव्यमासीत् यावता ततो व्यतिरिक्तः पन्था नाभूत्। तत्र वयमनास्वादितरसानि शिशिराण्युत्खायोत्खाय हिमशकलानि सकुतुकमभक्षयाम। इह

1. चन्द्रशालाः। 2. छायाप्रधानैस्तरुभिः।

चन्दनवाड्यां सर्वं भक्ष्यादि सुलभमासीत् । यात्रानिमित्तं चात्र कान्दुकानां[१] मौदकिकानां चापणा अचिरप्रवृत्ता अभूवन् । तेन तत्र रात्रिमुषित्वा परेद्युस्ततः प्रायाम । इतःप्रभृति क्रमेणोन्नता शैलभूरभूद् दुरारोहा च । प्रथमवया मम तनूजो द्राक्तरां परिखिन्न इति तदर्थमश्वमाशुगामिनं पर्यक्रेषि । यथा यथा यथोच्चैरारोहाम तथा तथा नववधूमिव समुज्ज्वलनेपथ्यां कुसुमाभरणां सृष्टिसुन्दरीमपश्याम । नेदानीं क्वचिद्विटपिनो व्यलोक्यन्त, तथापि शष्पैर्गुल्मैश्च हरितानि हरिदन्तराणि[२], सततमभिष्यन्दमानानि प्रस्रवणानि, नानावर्णानि नानाजातीनि विकचानि प्रसूनानि प्रासाधयन्निति हि निपुणो मालाकारो विधातेति । यत्र तत्र पर्वततटानि प्रसाधितान्युपवनानीव हृदयंगमानि लोचनातिथितामयुः । अहो वैचित्र्यं कुसुमानाम् । अहो ऋजुत्वं पालीनाम् । अहो प्रत्यग्रता सुरभिता चौषधीनाम् । यत्सत्यं रामणीयकनिधेरधिदेवतानीवेमानि स्थलानि ।

इमान्यतिक्रम्य कठोरीभूते दिवसे वयं शेषनागमुपेताः । अयं प्रदेशः समुद्रतलात्षोडशफुट[३] सहस्राणि समुच्छ्रितः । अत्रापि विमलापो रमणीयो विशालश्चास्ति कश्चन कासारः । अयं च हिमपातेन जलधरजलेन च नित्यमाप्यते[४] । अति हि शीतमिह वर्तते । सन्ततं च हिमपातभयम् । सन्ति चात्र यात्रिणां कृते काश्मीरराजकृतानि कानिचिच्छन्नानि[५] शरण्यानि । वयमप्यग्रतो यानस्य कालो नेति तत्रैव यामिनीमयापयाम । कृतनीशारा वयं सर्वरात्रं सुखं समाविशाम । अन्येद्युः कृतकल्यवर्तास्ततः पञ्चतरणीं प्रति प्रासराम । नेदानीमारोह्या शैलभूरभूत् , किन्तर्हि क्रमेण प्रवणेति सुखावरोहा । तेन खेलगतय एव वयं प्राक्राम । यावदेव च द्युमणिर्मध्यमम्बरस्यास्पृशत्तदेव पञ्चतरणीमासादयाम । पञ्चतरणीति पञ्चभिः प्रवाहैः स्यन्दमाना काचित्सरिदस्ति । नेह कश्चन्मनुष्याधिवासोऽस्ति । शून्या अत्र दिशो विदिशश्च नेह क्वचित्सत्त्वसम्पातः, न च नभ-

---

१. आपूपिकानाम् । कान्दविक इत्यमरः पठति । कान्दुक इतीव साधिवति क्षीरः 'इसुसुक्तान्तात्क' इति शासनात् । २. दिगन्तरालानि । ३. फुट् इत्याङ्गलीयं मानम् । ४. आप्यतेर्ण्यन्तात्कर्मणि रूपम् । ५. इदं धर्मसूत्रकारप्रामाण्यात्साधु व्यवहार्यं च ।

संगमसंचारः[1] । न चापि तत्कृतो विरावः । सर्वशून्यापीयं द्रोणी कस्य नयनानन्दाय न, कस्य वा हृदयावर्जनाय न । प्रशान्तापीयं स्थली भगवतः कमपि महिमानं श्रवणयोरर्पयत्येव । अत्र पटभवने दोषामतिवाह्यार्वागेव सूर्योदयात्ततः प्रस्थाय होरात्रयेण वयं श्रीमन्तममरनाथं प्राप्ताः ।

अमरनाथ इति महती कन्दरा शिखरिशिखरस्थिता । नास्या अन्तरे [2]सन्तमसमस्ति यथा कन्दरासु प्रायो भवति । इयं तु विवृतमहाद्वारा महाशालेव शालते । अविरतं चास्याश्छदिः[3] श्च्योतति । अत्र हिममयी त्रिमूर्[4]त्तिर्विराजते या दैवकृता मनुष्यकृता वेति निश्चयो नास्ति । एतां त्रिमूर्तिं भक्तिप्रह्वेण मूर्ध्ना प्रणत्य यथाशास्त्रं चाभ्यर्च्य धनं च विप्रेभ्यः प्रतिपाद्य परावर्तन्ते भक्तिमन्तो यात्रिणो न तु तत्र क्षणमपि तत ऊर्ध्वमवतिष्ठन्ते । इह केचित्पारावता अपि दृश्यन्ते दर्या अन्तिके पतन्तः । एतानपि सश्रद्धमवलोकयन्ते भक्ताः । वयमपि देवतादर्शनेनात्मानं पावयित्वा[5] ततो झटिति निवृत्ता अल्पेनानेहसा पञ्चतरणीं प्रत्यागताः । तत्र यत्किमपि लभ्यमशनं समश्य मुहूर्तं च विश्रम्य ततः प्रस्थिताः ।

योऽसौ स्थौरी स आहितः[6] सह स्वामिना पूर्वतरं प्रचलितः । अस्मत्प्रयाणसमये च निरभ्रमप्याकाशं सहसाऽभ्रितमभूत्, सूक्ष्माश्च पयःपृषताः प्रापतन् । इयं नो मनीषाऽभूद् विरंस्यति विरलमेतद्वर्षं विमलं च भविष्यति गगनमित्यव्याहतगतयः पन्थानमन्वसराम । यदा च शेषनागं यावदध्वनोऽर्धमत्यक्रामाम तदा तीव्रं प्रास्यन्दन्त घनाघनाः । रौद्राश्च [7]ह्रादिनीह्रादाश्चक्षुष्प्रतिघातकराश्च विद्युद्विलासा अभीक्ष्णमभूवन्नः सन्तर्जनायेव । एवं च प्रत्यभात्पुनरप्याखण्डलः पर्वतान्खण्डयितुं प्रवृत्त इति, हरो वा संक्रुद्धः सर्वमिदं संजिहीर्षतीति । क्षणाद्वयमभिषिक्ता अभूम । इतरेऽपि यात्रिणः सम्प्रति संगता न इति यातां सार्थो महानभूत् । अचिरेणैव पन्थानः पङ्किलाः पिच्छिलाश्चाभूवन्निति पदे पदे स्खलनभीरभू-

---

१. विहगविहारः । २. निबिडं तमः । ३. छदिः स्त्रियामिति पाणिनीयं लिङ्गानुशासनम् । ४. महेशो गणेशः पार्वती च । ५. स्वार्थे णिच् । एवमस्य बहुलः प्रयोगः शास्त्रे । ६. आहितभारः । ७. वज्रनिर्घोषाः ।

दिति तान् विहाय शरच्चन्द्रो नः सखा पर्वतोपरिवर्तिनीं वर्तनीं[1] समाश्रितः । परेऽपि केचित्तद्विधा एकपदीमनुप्रपन्नाः । आवामपि पितापुत्रौ सखाऽनुसर्तव्य इति सार्थप्रहतं पन्थानं विहायोच्चैस्तमैरपथैः प्रक्रान्तौ । कञ्चिदध्वानं च सुखमतीत्य भृगुमेकमुपयातौ । तत्रैकेन पाणिना च्छत्रमालम्ब्य द्वितीयेन चान्योन्यं गच्छन्तावावां सहसा पृथुलायां समतलायां शिलायां पतितौ । अतटेऽपि तस्मिन्प्रस्तरेऽन्योन्यसंश्लिष्टौ क्षणं निःसहं विपर्यस्तौ नाधो न्यपतावेति करुणावरुणालयो भगवानिति परिशिष्टानि नौ पुण्यानीति वा केवलो हेतुः । तत उत्थाय प्रणवं जपन्तौ मन्दमन्दं चलन्तावावां सुहृदा शरच्चन्द्रेण भूयोऽपि संगतौ । अयं च वाङ्गः परिस्पन्दवानपि परिलघुरपि कृशः कायेऽल्पप्राणश्चेति महानस्य शीतबाधोऽभूत् । शेपनागादर्वागेव न उपस्थिता रजनी । मूर्च्छितं च तमो मेघैर्मेदुरितम् । अर्धहोरया वयं शेषनागं प्राप्ताः । चिन्तां च महतीं सम्प्राप्ताः । शरच्चन्द्रोऽभ्यमितः पुप्फुसवेदनया च ज्वरेण च दाहकेन पीडितोऽभूत् । पुत्रकोऽपि मे शीतार्तः प्राक्रन्दत्कम्बलं च प्रार्थयत । त्रिचतुराणि च तत्रच्छन्नानि । एकतमस्मिन्वयमपि कमप्यवकाशं कथमपि प्राप्ताः परं कम्बलादिसंभारस्तु पूर्वप्रस्थितेन स्थौरिणोढः, न चासौ सहास्माभिः क्वचित्संगत इति शीतपरित्राणं केन कुर्म इति बहु चिन्तयन्तोऽपि नाशक्नुम किमपि प्रतिविधातुम् । अभिषिक्तानि नः शरीरधृतानि वसनानीति तान्यवतारितानि । कृपणं क्रन्दन्मम पुत्रकस्तु केनचित्काश्मीरकेण स्वेन प्रावारकेण प्रच्छाद्य सुखितः, तेन तस्मिन्नहं वीतचिन्तोऽभूवम् । परं शरच्चन्द्रो मे चिन्तामजीजनत् । कस्यचित्सकाशे वराण्डीति समाख्या[2] प्रसन्नाभूत्, तेन कापि मात्राऽस्याः शरच्चन्द्रायादायि यां निपीयास्य विशेषः कश्चिदजनि । मया च गलबन्धस्तस्मै प्रादायि । तत्रागारे प्रविष्टानामङ्गनानां महानार्तरवोऽभूत् । काचिदाह—ममाम्बा मार्गे पतिता, सापरित्रायताम् । अपराऽऽक्रोशति मदीया दुहिता ज्वरार्ता मोहं गता नाद्यापि प्रतिपद्यते प्रकृतिमिति किं करोमि मन्दभागेति, इतराऽमरनाथमेवोच्चैर्निन्दति

---

१. वर्तनी, पद्या, एकपदीति समानार्थकाः । भाषायां पगडण्डीत्युच्यते वर्तनी ।
२. सुरा ।

नायममरनाथो मरनाथ एवायम्, नेह भूयः कर्हिचिदागन्तास्म इति। अन्तरगारं जाड्यहरणाय वस्त्रशोषणाय च संभृतः कैश्चिज्ज्वलनो गुल्मकैः। ते च जलोक्षिता इति नालमग्निं समिन्धितुम्। येषां सकाशे मृत्तैलमभृत्तैर्मृत्तैलेन प्रीणितोऽपि पाणिप्रणयिनीभिर्यष्टीभिस्तर्पितोऽपि नाज्वालीद् हव्यवाहनः, धूममेव चाविरलमुदवमीत्। तेन मन्द एव तापोऽभूद् भयांश्च धूमोत्पीडः। धूसरितानि नो वासांसि, समुद्वेजितानि च लोचनानि। शैत्यबाधामसहमानाः परस्परं सम्पिण्डिताङ्गा विनिद्रा एव वयं कथं कथमपि तां निशामनैष्म। दिष्ट्याऽपररात्रे विरतं वर्षेण। तेन प्रत्यूष एव ततः प्रायास्म चन्दनबाटीं चातिक्रम्यैकाह्नैव सायं पहलग्रामं प्रायाम। ततश्च परेद्युर्मोटरयानेनाक्षयवलं प्रत्यागामेति पर्यवसानं नो यात्राकथायाः।

---

## ( ४ ) हेमन्ते वर्षवद्वासरः

इह भारते वर्षे प्रभूतं वर्षति वासवो वर्षासु। हेमन्ते तु क्वचिदेकदेशे हिमं पतति यथा कश्मीरेषु, क्वचिद् धारासारैर्वृष्टिर्भवति यथा पूर्वपञ्चालेषु, क्वचिन्मन्दमन्दा यथा...... ।

अत्र मदावासभुते विपाट्छुतुद्र्योरन्तरे भूखण्डे हेमन्ते पौषे मासि कतिचिद्दिवसाननारतं वर्षन्ति बलाहकाः। प्रथमं पुरोवातः प्रवाति ततो नवनीला अवस्तृण्वन्ति नभोऽम्बुदाः। तमोवगुण्ठिताश्च भवन्ति दिशो विदिशश्च। स्फूर्जन्त्यशनयः, विलसन्ति विद्युतः, स्तनयन्ति च स्तनयित्नव इत्येकैकमप्यलं वित्रासनाय त्रस्नूनां[1] किमुत समवायः।

यदा च प्रवर्षति वारिवाहस्तदा पथिभिः संचरमाणा जना गृहान्प्रति त्वरिततराः प्रयान्ति, छन्नं वा मार्गश्रितं किमपि मार्गन्ति[2]। जनसम्पातो विरलतां याति संव्यवहारश्च विच्छिन्नताम्। आपणिकाश्च सामिसंवृतद्वारा अन्तरापणेषु तिष्ठन्ति वाचंयमाः। विरला एव केचनात्ययिकस्य कर्मणः कारणाद्विपणिषु दृश्यन्ते संचरन्तः। त एते मा नः शीतबाधो भूदिति वासो-

---

1. कातराणाम्। २. मार्गं अन्वेषण कुर्वन्ति।

भिर्गुरुभिरात्मानमाच्छादयन्ति । आप्रपदीनैरवर्षधाराभिषेच्यैः कञ्चुकैः शिरस्त्राणैश्च गोपायन्ति । परं नैतादृशा बहवो भवन्ति । दरिद्रास्तु केनाप्यन्याह्येव्येण कृत्येन गृहान्निर्गता विरलवासस इति [1]दृढमभिषिच्यन्ते शीतेन च महता बाध्यन्ते । दन्तवीणां वादयन्तोऽङ्गानि चाकुञ्चयन्तः कथं कथमपि स्वं शरणं[2] प्रपद्यन्ते, तत्रापि च सुखं न लभन्ते । न हि तेषां वसनान्तराणि सन्ति यानि निवस्य शीतं प्रतिकुर्युः । वराका अमी गृहस्थितैस्तृणोत्करैरग्निं समिन्धते गात्राणि चोत्तपन्ते । केचित्तु शीतस्यासहा व्याधीयन्ते । धनिकास्तु गृहेष्वन्तर्वर्तमानाः सुखं निर्विशन्ति न च बहिर्निष्क्रामन्ति । तत्रैव स्थिताः कास्वपि खेलासु रमन्ते, सम्यक् संवीताङ्गाश्च शैत्येन न मनागपि स्पृश्यन्ते । मध्यमाश्च खेलासाधनोपलम्भस्यानीशानाः कम्बलैः प्रावृत्य कायं कालं किञ्चित्संवेशेन नयन्ति ।

गृहेष्वन्तःपिहिता लोकाश्चेष्टासु तासु तासू[4]चितास्वव्यापृता अभ्यवहाराणां[5] विविधानां ध्यायन्ति, तैलपक्वानि घृतपक्वानि लवणमधुराणि च विशेषेणेच्छन्ति । प्रायेण वर्षति वारिवाहे दीप्यते जाठरोऽग्निः । यदा च शीतवशाद् गृहान्निष्क्रमो दुष्करस्तदाऽभ्यवहरणीयचिन्तैव नः सहचरी भवतीति नायुक्तम् । शिशुकेषु तु विशेषेण तत्र तत्राशनीये जागर्त्यशनाया[6] । कश्चिदाह–अम्ब ! पक्वाटानशनीयामि, ते राध्यन्तामिति । अपर आह—मातर्माल्यपूपानशिशिषामि, ते निर्मीयन्तामिति । इतर आचष्टे—अद्य पायसे मेऽभिलाषस्तन्निर्वर्त्यतामित्येवं विविधाभिः प्रार्थनाभिर्मातरं व्याकुलयन्ति । मन्दायमाने च वर्षे केचिन्मिष्टान्नप्रिया मोदकादीनि विपणीतः क्रीत्वाऽऽस्वादन्ते यावन्न तेषां तृप्यन्ति ।

निरूपिता धनिकानामधनानां च वृष्टिशैत्यकृताऽवस्था । ये केपि प्रसाधनप्रिया [7]वेष्याः कुमाराः कुमार्यश्च विहाराय निर्गताः कार्याय वा निष्क्रान्ता वर्षेणाक्रान्ता भवन्ति ते कर्दमिते पथि पदे पदे स्खलन्तो

---

१. गाढबाढदृढानि चेति भृशार्थेष्वमरः । २. गृहम् । ३. उञ्छिभ्यां तप इत्यात्मनेपदम् । ४. उचितासु = संबद्धासु = अभ्यस्तासु । उच समवाय इत्यतो निष्ठा । ५. अधीगर्थदयेशां कर्मणीति शेषिकी षष्ठी । ६. अशितुमिच्छा । ७. कर्मवेषाद्यत् । वेषेण सम्पद्यन्ते शोभन्त इति वेष्याः ।

विनोदं कमपि कुर्वन्ति प्रेक्षितॄणाम् । यदा चोज्ज्वलान्येषां नेपथ्यानि पादोद्धतः पङ्को विलिम्पति क्लिश्नाति[1] च तदाऽमी सखेदभङ्गं तानि मुहुर्मुहुरीक्षन्ते सदयं च समाधित्सन्ते । एवमाचरन्तस्ते पुनरपि विडम्बनां महतीं लभन्ते ।

यत्र च प्रदेशेषु हेमन्ते मन्दमन्दा वृष्टिर्भवति तत्र सविशेषं दुःखयन्ति लोकाः । सैषा वृष्टिरेकाहं द्व्यहं वा न भवति, चतुष्पञ्चाहं पञ्चषाहं वाऽनूचीना[2] भवतीति तत्र पन्थानो विशेषतः पिच्छिला भवन्ति । पक्वेष्टकचितानामपि सदनानां छदिषः[3] प्रश्च्योतन्ति, अन्तःस्थानि सर्वाणि वस्तूनि शरीरधृतानि वसनानि क्लिद्यन्ति ।

निर्वृष्टेषु घनाघनेषु चिरप्रतीक्षिता वर्षविरतिर्भवति, विच्छिद्यन्तेऽभ्राणि, उदयते चाशीतरश्मिः । ततः शीतार्ता लोका आतपं सेवन्ते, कम्बलान्नीशारान् परिधानीयान्यास्तरणानि चातपे शोषणाय खट्वासु प्रसारयन्ति, भित्तिषु वाऽवलम्बयन्ति, भूतल एव वाऽऽस्तृण्वन्ति । कृतसुखयत्नस्थाश्च लोकाः कृत्येषु दैनन्दिनेषु पूर्ववत्पुनरपि प्रसजन्ति ।



## ( ९ ) ग्रीष्मे वातवती रजोवात्यावती चास्तमनवेला

इह देशे शीतोष्णयोः परा सीमा समस्ति । ग्रीष्मे च नात्र विरला वात्याः । न केवलमौष्ण्यातिरेको वातनिरोधोऽपि बहुलो भवति । यदा चान्तरिक्षस्थानेऽभ्यधिकमुष्णतां याति वातस्तदा वात्यां सम्भावयामः । ग्रैष्मे चाहनि यस्यां कस्यापि वेलायां वातो वा झञ्झावातो वा शक्य आशङ्कितुम् । तथापि प्रायशः सायाह्नेऽयं प्रवर्तते यदा सर्वाहं तप्तस्तपनो ज्वलनमिव मयूखैरुद्वान्तवानस्ति । इदं निशामयामहे[4] भूयसा वात्याप्रवृत्तेः प्राङ्निरुक्तो वातनिरोधोऽस्ति । नभः कपिशं भवति, अन्तरिक्षं चान्धकारितं मलीमसं च । धूमायन्त इव च दिश इति ।

---

1. क्षीणकान्तीनि मलिनानि करोति । २. निरन्तरा । ३. पाणिनीयलिङ्गानुशासनानुसारेण स्त्रियां प्रयोगः । ४. शम लक्ष आलोचने चुरादिः ।

ततो निमेषेण रजांसि विक्षिपन्तः प्रवान्ति वातः प्रतिदिशम्[1]। ध्रियन्ते गृहवर्तिभिर्गृहाणां द्वाराण्यापणिकैश्चापणीयानि। सर्वो लोकोन्तःपिहितो दाहज्वरोष्मणेव दह्यमानः कष्टमुच्छ्वसिति। यत्सत्यं पातालकुहरे नीरन्ध्रनिरुद्धमिवात्मानमनुभवति। सरभसं वहद्भिर्घोतै-र्बलवदास्फालितान्यान्दोलितानि च गृहद्वाराणि वातायनानि चानारतं खटखटायन्ते कर्णज्वरं च जनयन्ति। अन्तराऽन्तरा तु प्रतिभाति कश्चि-ल्लुण्टाकः सर्वात्मनेमानि प्रणुदतीवेति। सर्वमन्तःस्थमर्थजातं रजसाऽ-वकीर्यते, शरीराङ्गानि च सर्वाणि समं रेणुभिरुपलिप्यन्ते। भूयोपि बाल्य इव पांसुषु प्रक्रीडिता वयमिति मृदं च प्राशिताः[2] पूर्वाभ्यासादिवेति प्रतिभासते। गृहिणोऽपि वयं भस्मावगुण्ठितभिक्षव इव पांसुभिः कृताङ्ग-रागाः क्षणं तुर्याश्रम इव वर्तामहे। अनिच्छन्तोऽपि नेत्रे निमील्य तिष्ठामः, वाचाला अपि वाचंयमत्वमवशं यामः। प्रदोष इति मेदते[3] रजोविसरेण कृतमन्तरगारं तमः।

ये च पथिभिः सञ्चरमाणा वात्ययाऽऽक्रम्यन्ते तेपि किमपि कद-र्थ्यन्ते। केचिद्रथ्यया गच्छन्तो विपण्या वा चलन्तो रजसाऽऽकुलिते-क्षणा वातवेगेन च विक्षिप्ता विषमेण यान्ति, खातेषु वा प्रणाडिकासु वा निपतन्ति परस्परेण वा संघट्टन्ते। गृहपादपानां रथ्यावर्तिनां वनस्पतीनां वानस्पत्यानां वा शाखाभङ्गेन प्रकाण्डभङ्गेन वा भूतोपघातोप्यनल्पो जायते। आमेष्टकचितानि दुर्विधानां गृहकाणि [4]वातूलमसहमानानि शिथिलीभवन्ति। कदाचिच्चलौहानि चन्द्रशालानां[5] पटलान्यपि मारुततरसो-त्क्षिप्यन्ते। इमानि च यत्र क्वचिन्निषीदन्ति[6] विनष्टिं महतीं कुर्वन्ति। सैषा सप्तमीतिरिव भवति लोकानां निर्ऋतिर्वा। नगरेन्तस्ततो बहिर्वा विद्यु-त्स्तम्भताराशिञ्जमूलाः संकीर्यन्ते, तेन सर्वत्र वैद्युतः प्रकाशो विलुप्यते, टेलीफोनसंविधानमपि विच्छिद्यते। तेन सर्वं पुरं सन्तमसे निलीयते, समीपेनाप्यतिक्रामञ्जनो न लक्ष्यते।

---

१. शरत्प्रभृतित्वाट्टच् समासान्तः। २. उभयत्रादिकर्मणि क्तः। ३. [illegible]। ४. वातानां समूहो वातूलः। ५. शिरोगृहाणाम्। ६. इति [illegible] निर्घोषः।

ये मोटरयानस्था वाहनान्तराणि वाऽऽरूढा वात्ययाऽऽसाद्यन्ते ते किमपि विषममनुप्रपद्यन्ते। उभयतो मार्गान् येऽर्कमयूखनियमनेन यात्रिकसुखाय निमिता[1] वृक्षास्त एवेदानीं महते विनाशाय तेषां जायन्ते। वातोन्मूलितास्ते यत्र क्वापि सहसा निपतन्ति, मार्गं च रुन्धन्ति। अनुन्मूलिता अपि विनाशेऽङ्गतां यान्ति-। मोटरयानादीनि [2]कम्बलिवाह्यानि च शकटानि वातरंहसा प्रेरितानि पथो भ्रश्यन्ति, पथिप्रान्तस्थान्पादपांश्चाघ्नन्ति, द्राक् च पर्यस्यन्ति। न केवलमात्मनाऽवखण्डितानि भवन्ति, यात्रिणोऽपि कांश्चित्कण्डयन्ति परासुतां च गमयन्ति।

अपरत्रापि समुत्सादः कियानपि साध्यते वातेन, प्राणिनो वा प्राणात्यये निपात्यन्ते। ये नाम वात्यायां प्रवातायां मध्येनदि नावमारूढाः कैवर्तायत्तप्राणाः पारं यियासन्ति तेषां मनसि किं नु खलु वर्तते तदानीमिति न सुकरमभ्यूहितुम्। यदा वातेन प्रबलेन विक्षुभिता नौरान्दोलिता भवति, कदाचिदेकतो नीचैर्याति कदाचिदपरतः, यदा च केनिपातकैरनीशाः कैवर्तास्तां तटाभिमुखं नेतुम्, यदा च वातास्तं नदीजलं नाव्यन्तः प्रविशति, तदा भयेन किमपि वेपन्ते तेषां गात्राणि, शुष्यन्ति च विवर्णानि मुखानि स्विद्यन्ति चाङ्गानि। प्रतिपत्तिमूढास्ते हा हता वयमित्युच्चैराक्रोशन्ति, त्रातारं चाक्रन्दन्ति।

परं न हि चिरसंरम्भाणि[3] दैवतानि भवन्ति। वज्रादपि कठोराणि कुसुमादपि च मृदूनि तेषां हृदयानि, विशेषतस्तु विश्वसृजः। तस्मात्स भगवान्करुणं तेषां क्रन्दनं निशम्य दुःखौघं च दृष्ट्वा कृपया परयाऽऽविष्टो वात्यां विरमयति। न हि मयि धातरि विधातरि च स्थिते मदीयेयं सृष्टिः संहारमर्हतीति संतप्तस्य भूतजातस्य शिशिरीकरणाय रजःपटलस्य च प्रशमाय दिवो वृष्टिमीरयति। आश्चर्यमाश्चर्यम्। वाता ब्रह्मणि विवर्ता इव क्वापि विप्रलीयन्ते। अन्धकारो विनश्यति, दिशश्च प्रसीदन्ति, लोकाश्च यथापुरं चेष्टन्ते, [4]सञ्चराश्च जनसञ्चारशोभना जायन्ते।

---

१- आरोपिताः। २. कम्बलः सास्ना। कम्बली बलीवर्दः। ३. दीर्घरोषाणि। ४. मार्गाः।

## ( ६ ) दारुणा हि महाहवा भवन्ति

अतीतायां वर्षत्रिंशत्यां विष्वञ्चौ[1] महाहवौ लौकिकैरवलोकितौ, भूयश्च तृतीयाय तादृक्षाय महाहवाय क्रियमाणान् महतः सम्भारानालोकयाम इत्यवसरो यत्स्मारयेमात्मानं वैशसं जन्यजन्यम्[2]। लोकव्यसननिरपेक्षाः स्वार्थमात्रव्यपेक्षा नेतृत्वाभिकामा ऐश्वर्यगृद्धा मोहान्धाः केचन यदा युद्धं वीरवृत्तमिति प्रशंसन्ति यूनश्च विविधं प्ररोचयन्ति स्वदेशगौरवगोपनोपाय एष इति, स्वप्रकर्षसम्प्राप्त्युपकरणमेतदिति तदा, महान्तमपायमस्य लोकस्य कुर्वन्ति। युद्धे तावज्जयोऽनेकान्तेन,[3] पराभवो न्यग्भावश्च बाहुलकेन. दारुणानुबन्धाश्च नैयत्येनेति कः सुधीर्युद्धं कामयेत। न ह्यायोधनानि प्रवृत्तानि नैरपेक्ष्येण क्रौर्येण कार्त्स्न्येन च न निसूदयन्ति[4] चेतनाचेतनानर्थान्। इमानि खलु नयं च सम्प्रदायं च विद्याश्च कलाश्च संस्कृतिं च सभ्यतां चापि समं समुत्सादयन्ति।

इदं च दारुणतरं भवति युद्धे यदनायुधीया नागरिकश्रेणयोऽपि गर्हिततमां कदर्थनां लभन्ते। सैन्याः समरशिरसि वर्तमाना दुर्गस्थाः परिखास्था वा प्रायेण साधीयःसंविहितान्नाच्छादनाः सम्भवत्सौख्योपकरणसमन्विता भवन्ति। ते हि प्रधानं भवन्त्युपसर्जनं चान्ये। कोटिशो जनास्तेषां कशिपुनः[5] साधीयस्यै प्रक्लृप्त्यै सुखसामग्र्याश्च पर्याप्त्यै सन्ततं क्लेशपूगान् सहन्ते। न केवलमुच्चावचान् विषयान्भोक्तुं न लभन्तेऽत्यन्तापेक्षितैरर्थैरपि विना क्रियन्तेऽलं च कृच्छ्रगः संजायन्ते। प्रथमे विषूचि संग्रामे बहुत्र देशेष्वन्नाद्यस्य दारुणाऽपर्याप्तिरन्वभावि लोकेन, द्वितीयेनाप्यचिरातीतेन विकटं तद्वैकल्यमाकलितं[6] येनाद्यापि सर्वत्र सीदति जनौघः। अभूतपूर्वा कापि महार्घताऽऽपा[7] दर्थानां शरीरयात्रार्थानाम्। दधिपयसी मधुसर्पिषी इध्माबर्हिषी गोधूमचणकं व्रीहियवं नवनीतं

---

१. विश्वव्यापकौ। २. युद्धजन्तु। ३. अनियमेन। ४. निबर्हयन्ति। अत्र पात्वमप्रमाणम्। ५. अन्नाच्छादनयोः। ६. जनितम्। कलिवल्ली कामधेनू इति शाब्दिकाः। ७. पद्यतेर्णिचि कर्मणि लुङ्।

शर्करा सिता च स्थूलमनुल्बणं च वासः पत्त्रोर्णं च–सर्वमिदं सप्तगुणेनाष्टगुणेन वार्घेण विक्रीयते। प्रकृष्टाश्चार्था निकृष्टैरर्थान्तरैर्व्यतिकीर्यन्ते, व्यतिकीर्णा अपि च कथंचिल्लभ्यन्ते।

नैतदेव। महान्हि द्रव्यविनियोगो भवत्याहवेषु। सर्वो राष्ट्रिय आयो युद्धोपकरणेषूपयुज्यते सञ्चितचरो राशिरपि निःशेष्यते। व्यतिरिक्तश्च करो न्यस्यते, बाढं च लोको व्यथ्यते।

न चैतदेव। गतः स सम्प्रति साङ्ग्रामिकः पुरातनो न्यायो, येन स्त्रीबालवृद्धानामुपपीडयितारो निहन्तारो वा भीलुका इति वाऽऽततायिन इति वा जगर्हिरे, सायुधा निरायुधेषु, रथिनो वाऽरथेषु पादचारेषु न प्रजह्रिरे, रणाजिरेष्वेव योधाः प्रतियोधैर्युयुधिरे, पौराञ्जानपदांश्च न कलयापि बबाधिरे। अर्वाचीनेषु पुनः समरेषु व्योमयानगतैराग्नेया विस्फोटका अस्त्रविशेषा दाहका मारकाश्च गोलकाः प्रक्षिप्यन्ते प्रजास्वनेनःसु। नाङ्गना रक्ष्यन्ते न चार्भकाः, न जरठा अपेक्ष्यन्ते न च तरुणाः। सहस्रशो लक्षशश्च क्षणादेव प्रलीयन्ते। गृहाश्च धनधान्यसमृद्धाः। समुत्साद्यन्ते, सस्यशालिन्यः शाद्वलाः क्षेत्रभक्तयश्च समुज्ज्वासिताः सत्योऽरण्यान्यः सम्पद्यन्ते। अतीते महाहवद्वये निर्मितेष्वपि कालायसच्छन्नेषु सहस्रशो लोकाः शरणमलभमाना नाभसैराग्निविस्फोटकैरभिवृष्टा उत्क्रान्तजीविता अभूवन्। इटलीदेशस्याबिसीनियेत्यस्य च मिथः संगरे इटलीवास्तव्यैः सैनिकैरबोधोपहतेष्वबिसीनियाजानपदेषु व्योम्नोऽग्निवर्षेण शतशः स्त्रियो मुग्धाश्च शिशवो निसूदिताः। स्पेनदेशेऽपि गेहेन कलहेन भूताविष्टैरिव [1]सजनपदैर्वध्यावध्यविवेकविश्रान्तैर्बालाश्च स्त्रियश्च वृद्धाश्चादयं निबर्हिताः, कल्याणाचारा विविधविद्यासम्भारभासुराः [2]कृतिनोऽपि न रक्षिताः। चीनदेशेऽपि जापानदेशजैर्यथाऽऽचर्यंत तदप्यलं लोमहर्षणाय कठिनस्यापि च चेतसः सद्योद्रवाय। अधुनातनेषु युद्धेषु न केवलं विस्फोटकान्याग्नेयास्त्राणि गगनादवपात्यन्ते विसर्पिविस्फुलिङ्गानि दाहकान्यपीति महाननर्थो घटितो भवति। क्वचित्त विमानस्थैर्गरलमिश्रा मारुता अपि जनाधिवा-

---

१. समानो जनपद एषां ते, तैः। २. विद्वांसः।

सेषु प्रेर्यन्ते । भूमिष्ठाः प्राणपरित्राणस्याप्रभवन्तोगतिका लोकास्तदानीं कां दशां गच्छन्ति कथं च करुणं क्रन्दन्तो यतस्ततो विह्वलन्ति, कथं वाऽवदग्धा अनुत्क्रान्तजीविता अङ्गभङ्गमनुप्राप्ता विकलकरणा[1] आयुःशेषं क्षपयन्तीति न दुष्करमुन्नेतुम् । न केवलं गगनविहारिभिर्विमानैरयमुपसर्गः[2] साध्यते, सागरेषु [3]मद्गुभिरपि । कस्य नाम न विदितं कियान्हि विध्वंसः शार्मण्यैर्मद्गुसहायौ सांयात्रिकाणां[4] सांवहित्रस्य[5] च समसाधीति । किं चेदानीमेवोपज्ञातेन परमाणुशक्तिकेनाग्नेयेनास्त्रविशेषेणामेरिकास्थैर्जोपानदेशस्य यो विध्वंसः कृतः कस्तं विस्मर्तुमीशः । 'हीरोशीमिये'ति प्रख्यातं पुटभेदनं तथा [6]न्यक्षेणोज्ज्वासितमभूद्यथा नात्र पुरा कदाचिदधिष्ठानं[7] किमप्यासीदिति जायते प्रतीतिः । समतलापि भूरुत्खातिनी समजनि, निरुदका च सोदका, पुलिनवती च स्रोतस्वती । निर्दग्धानि राजसदनानि । संहृतानि हर्म्याणि । कषितानि कुटीराणि । भस्मावशेषतां च गतानि तरुलतानिकुरम्बाणि । सहस्रशो वपुष्मन्तः प्रतिभानवन्तः कलावन्तस्तत्पत्तनस्था निमेषेण यमधानीं प्रविष्टाः, का कथा मृगशकुनिसरीसृपादीनाम् ? गगने स्वैरविहारीणि पत्त्ररथकुलानि वासाय प्रतिष्ठमानान्यन्तराऽध्वानमग्निच्छटातापेन सन्तप्तानि विचेष्टमानानि सद्यः कालधर्मं गतानि । किं बहुना ? भूकम्पेनाप्लावेन वा न तथा [8]ज्यानिर्जीवलोकस्य कदाचिदजनि यथाऽनेनास्त्रेण नूत्नेन संस्कारातिशयविस्मितैरमेरिकास्थैः प्रयुक्तेन ।

नैतावता सम्परायरौद्रता पर्यवसितवर्णना भवति । किं नु वर्ण्येत सुकुमारहृदयानां मृदितानां मनोरथानां च भग्नानाम् । किं शोच्येत सीमन्तिन्यास्तस्या याऽनुदिनं पापमाशङ्कमाना पत्युः कुशलोदन्तमुदीक्षते चिन्ताकृशा । किं नूदाह्रियेत वत्सलाया अम्बाया यस्या एककः सुतः कश्चिद्रणचत्वरे गतचेतनो विस्मृतनिमेषाभ्यां चक्षुर्भ्यां गगने बद्धलक्ष्य इव

---

१. उपहतेन्द्रियाः । २. उपद्रवः । ३. "पनडुब्बी" इत्याख्यैः । ४. पोतवणिजाम् । ५. संवोढुः स्वस्य (=धनस्य) । ६. कार्त्स्न्येन । ७. नगरस्य । ८. हानिः ।

विपर्यस्त आस्ते । नात्रैव विश्राम्यत्यनर्थः । धर्मपादोऽप्याविर्मूलोऽधुनोद्वर्तते, तदाश्रितश्च समाजः । चिन्त्यतां तावद्गतिरनेकशोऽनूढानां फ्रांसकन्यकानां सैन्यदूषितानाम् । का नु खलु समवस्था संख्यातिगानां संगरसंभूतानामज्ञातपितृकाणां विकृताङ्गानां कृशापचनानां दुर्जातानां शिशुकानाम् । किं नैतैः कलुषीकृताः पातिताश्चा[1] समामायुगादुत्तरे पुरुषाः । यदा युयुत्सवः शङ्खान्धमन्ति ध्वजांश्चोच्छ्रयन्ति तदा किं ते विचिन्तयन्ति युद्धानुरक्तिः किम्फला भविष्यतीति । यत्सत्यं ये युद्धं युद्धमित्यसकृदुदाहरान्त, स्वयं तत्र सज्जन्ते[2], परांश्च सज्जयन्ति तेऽ[3]नुशयेनानल्पेन युज्यन्ते ।

ये नामानीकिनीषु समवेता युद्धेषु व्याप्रियन्ते ते मानुष्यकेण प्रायेण हीयन्ते, ते हि वन्यसत्त्वतामापद्यन्ते । युद्धस्यैष प्रभावो यद् यदप्यपकृष्टं मलीमसं च मनुष्यतायां भवति तदाविर्भवति । परा हि सीमा पशुसधर्मताया नृशंसतायाः क्षुद्रतायाश्चाभिव्यक्ता भवति । यदीङ्गलेण्डीयाः परिखास्थजनविध्वंसक्षमवायुविशेषमुपजानन्ति[4] येनाङ्गभङ्गः सम्पाद्यतेऽह्नाय, परिखानिलीनाश्च प्रमीयन्तेऽचिराय, तर्हि शार्मण्या अर्चिष्प्रक्षेपकं सगरं वा मारुतं जनयन्ति, अमेरिकावास्तव्याश्च परमाणुशक्तिकं प्रहरणम् ।

पुरापि खलु प्रतिभयानि समुत्साहकानि बभूवुर्युद्धानि । अन्यत्र रामरावणयोः कुरुपाण्डवानां च संगरान्महान् हि प्रमाथोऽभूत्पौरजानामाजिषु व्यतीतासु । तदात्वे दुर्गे गृहीते पत्तने वा विजिते तत्रत्यो लोकः समूलकाषमकष्यत । अलक्षेन्द्रेण तैमूरेण चङ्गेजेन यत्कदनं सर्वाङ्गीणं प्रजानामिहत्यानामनुष्ठितं तदद्यापि प्रस्फुटं स्मरति लोकः । यूरोपभूखण्डे च हूणैर्यद्रुद्रताण्डवमभिनीतं तत्कः कवीश्वरः क्रान्तदर्शनोपि परिणतप्रज्ञोपि प्रभविष्णुर्यथातथं वर्णयितुम् । परमतिक्रान्तेन महासंयुगेन दारुणतयाऽतिक्रान्ताः पूर्वे समेपि समरा इत्यविसंवादी वादः ।

किञ्चेदमपि न प्रस्मरति लोको भरतवर्षस्थो यत्सुलतानमहमूदेन चरितं सप्तदशकृत्वो देशमिमं प्रार्थयमानेन[5] । न केवलं सहस्राणि को-

---

१. आङ् कर्मप्रवचनीयः । २. भाष्यकारप्रयोगप्रामाण्यादात्मनेपदम् । ३. पश्चात्तापेन । ४. हृदयङ्गमतया जानन्ति । ५. प्रार्थनमभियानं भवति ।

पुरुषा अदयं विशसिताः,[1] देवालयाश्च समुत्सादिताः, अर्चाश्चावमानिताः शकलीकृताश्च, नगरविशेषाश्च लुण्ठिताः समुज्जासिताः सन्दीपिताश्च, शतशः सहस्रशश्च कुलोद्भूताः पुरुषाः कुलाङ्गनाश्चापि बलाद् दासीकृत्य गज्निनीं प्रापिताः मौहम्मदं मतं च हठाद् ग्राहिताः। यदा च नादिरशाहो देहलीमाचस्कन्द तदा तस्य सैन्यहतका यं कमपि जनम[2]हस्तयंस्तं वीतदयं झटित्यास[3]यन्नगरीं च दिनकतिपयान्यनारतमदाहयन्। मुगलसम्राजां पठानाधीश्वराणां चानेकान्यभियानानि यां विनष्टिं संत्रासकरीमकुर्वंस्तां चिन्तयतो लोकस्याद्यापि हृष्यन्ति तनूरुहाणि[4]। दिष्ट्या भारते वर्षेऽभूदशोको नाम महामनाः सार्वभौमः। जितकाशी न्यक्कृताराातिरप्ययं कलिङ्गसंगरे स्वैरनीकैः कृतेन समुत्सादेन तथोद्वेजितोभूद्यथा युद्धं पापकर्मेति कृतमतिरत्यन्ताय तदहासीत्, आनृशंस्यं परो धर्म इति च पर्यग्रहीत्।

ये खल्वद्याप्यसंतृप्ता युद्धस्य स्वयं युयुत्सन्ते परांश्च विभ्रममुत्पाद्य युद्धाय प्रचोदयन्ते तेऽहिता लोकाय संव[5]र्तमिव तस्य चिकीर्षन्ते। उन्मत्ता दृप्ताश्चेमे वितथां स्वश्लाघापरां वाचमुदीरयन्तः प्रतारयन्ति लोकान्। उन्मत्तस्य दृप्तस्य च वाङ्निर्ऋतिरेवाकृतिमतीति पूर्वे सूरयः। यदुक्तम्—

"ऋषयो राक्षसीमाहुर्वाचमुन्मत्तदृप्तयोः।
सा योनिः सर्ववैराणां सा हि लोकस्य निर्ऋतिः॥" इति।

रणाङ्गनदर्शनमेव प्रत्यादेशस्तेषां युद्धाभिनिविष्टानां वाचोयुक्तीनाम्। रणाङ्गने क्वचिच्छवाः शेरतेऽनवेक्षिताः पूयमानाः, क्वचिद्विफलितशीर्षा[6] कीलालपरिप्लुता[7] निःसहं विपर्यस्ता उपेक्ष्यन्ते समुच्छ्वसन्तोऽपि सांयुगीनाः,[8] क्वचिन्मुण्डानि क्वचिद्रुण्डानि गृध्रैरातापिभिश्च लुच्यमानमांसानि दृश्यन्ते, क्वचिन्निर्मांसाः कङ्कालाः, क्वचिदवचूर्णिताः कर्परा विलोक्यन्ते। अति हि बीभत्सं दर्शनं युद्धभूमेः। लेखन्यपि वेपते समुद्विग्नेव वर्णनपरा।

---

१. वैयात्य पूर्वेण्णिपेर्नियमादन्यत्र हिंसायामिट्। २. हस्तेनागृह्णन्। ३. असिनाऽघ्नन्। कर्तृकरणाद् धात्वर्थे इति णिच्। ४. अञ्चन्ति रोमाणि। ५. प्रलयम्। ६. विशीर्णमूर्धानः। ७. रुधिरालीढाः। ८. रणविशारदाः।

जिह्वापि संत्रस्तेव जोषमास्ते। स्तिम्यतीव हृदयं वेदनाविवशं मन्दायते च दृष्टिर्व्यसनासहेति कृत्याकृत्येव[1] युद्धहत्या द्रष्टुमपि न याति किमुत वक्तुम् ॥

## ( ७ ) भिक्षुकः

इह देशे लक्षशो जना भिक्षावृत्तिमाजीवन्ति। यथा शरीरयात्रार्थाः कृषिवार्तादयो[2] व्यवसाया भवन्ति तथा भिक्षापि व्यवसायोऽमीषाम्। अमी जीवन्ति भिक्षेमहीति। विरला एव केचिद् भिक्षन्ते जीवेमेति। पुरा किल कश्चिद्यतिवर्य एव भिक्षावृत्तिमवर्तयत्। कर्मसूदासितस्तत्त्वचिन्तायां रतः परे ब्रह्मणि चाभिरक्तः स यत्किञ्चिदल्पमेवापैक्षताऽऽत्मानं यापयितुम्। न च तत्रैवम्भूता बहवोऽभूवन्। कश्चिदेव विरलो महाभागस्तुर्याश्रमप्रवेशेऽभ्यन्वज्ञायत। न हि सर्वे वर्णास्तत्राभ्यक्रियन्त। न ऋते ब्राह्मणेभ्यः कस्यचित्तत्राधिकारोऽभूत्। तेषामपि सौजन्यशेवधयो[3] दयादाक्षिण्यादिगुणनिधयः सम्पादितदैवसम्पत्तय एव केचनाल्पा आर्हन् भिक्षावृत्तिमास्थातुम्। सा भिक्षाचर्या मधुकरवृत्तवती माधुकरी वृत्तिरिति समाख्यायत। तत्र गर्धः संचिचीषा च नाभूताम्। प्रकृते यान्भिक्षुकानधिकृत्य विवक्षामस्ते असद्विषो भवन्त्यर्थकामाश्च, निर्व्यापारा भवन्ति व्यसनिनश्च, यतिव्यञ्जनोपेता भवन्त्ययतयश्च। इत्थम्भूता अपीमे साधव इति समाख्यायन्ते। शीतोष्णादिद्वन्द्वानि सहन्त इत्यनुकम्प्यन्ते तपस्विन इव चाद्रियन्ते। इमे हि प्रातरथ्यं प्रतिविपणि च संवर्तन्ते[4], मार्गकुट्टिमेषु सम्बाधमाचरन्ति संचरतश्च जनौघान्रुन्धन्ति। एते हि यान्ति यानान्यनुधावन्ति, देवतायतनद्वाराण्याक्रम्य तिष्ठन्ति, देवतार्चनमारचय्य निष्क्रामतो लोकान् यत्किञ्चिन्मृगयन्तेऽप्रदाय कश्चिद्दतीयादिति च न सहन्ते। यदि कश्चिदेकस्मै भिक्षुकाय किञ्चिद् विश्राणयति तदाऽप-

---

१. कृत्या मारी देवता, तस्याः क्रियेव। २. वार्ता = वाणिज्यम्। ३. शेवधिःनिधिर्भवति। ४. समवयन्ति।

रेभ्योपि तत्र समवेतेभ्योऽवश्यं दानीयं भवति । यद्येवं न क्रियते तदा ते तमनुसरन्ति विप्रकुर्वन्ति[1] च ।

भिक्षुकः खलु लिङ्गं धर्मकारणमित्यभिमन्यते । शरीरे कान्यपि लिङ्गानि करोति येन तापसं तं प्रतीयाल्लोकः । आकल्पोप्यस्य निःसामान्यो भवति । पटच्चरनिर्मितं मलीमसमस्य वासो भवति । अयं हि बहुधा नानावर्णानि पटच्चराणि संसीव्य चित्रां कन्थां करोति । सैषा बहु विचिन्त्य विनिर्मितेति नावधीरणीया भवति । शिल्पिकर्मैतद्भवति चित्रकरस्य वेति नाधिकार्थवचनं[2] भवति । अन्यदाऽयं भिक्षुकः स्वेन नेपथ्येन प्रत्याययितुमिच्छति लोकानुदारान्—यदहमाच्छादयामि तदेकदेशा अन्तराऽन्तरा केभ्यश्चिद् दानशौण्डेभ्यः सानुक्रोशेभ्यः सम्प्राप्ता इति । कञ्चुको मे नागरेण दत्तः, शाटकः स्थायुकेन, उष्णीषश्च [4]गोपेनेति । उपयुक्तपूर्वे इमे उपानहावपि केनचिदानृशंस्याद्वितीर्णे इति चोपदर्श्य द्रष्टॄणां चित्तं द्रावयति । भिक्षावृत्तिरयं वैरूप्यमपि किञ्चिदवश्यमात्मनः सम्पादयति । स कुष्ठित्वलक्ष्याणि करोति, अपस्मारलक्षणानि वा मिथ्याभूतानि भावयति, जिह्मतां वदनस्य धत्ते, खञ्जतां चरणयोः कुब्जतां वा पृष्ठस्य कल्पयति । यदि चायमन्धस्तदाऽयं सुष्ठु वेदाऽमोघा मे याच्ञा भविष्यतीति । साधो चक्षुष्मन् , सुदुर्लभे चक्षुषी, दयस्व ममेति साम्रेडं सकरुणं च यात्रिकान्प्रेरयति । अत्रानन्धा अप्यन्धेष्वन्तःपतिता अन्धत्वं व्यपदिशन्तः स्वाभिप्रेतसिद्धयेऽन्धवदाक्रोशन्ति ।

अयं भिक्षाजीवस्तथा सान्त्वं करुणं च वक्ति युक्तिमच्च यथा कठिनान्यपि श्रोतॄणां चेतांसि मृदूकरोति । यादृशं जनं पश्यति तदर्हमेव वाचोयुक्तिं प्रयुङ्क्ते । यदि पश्यत्यध्यायक[5] एष माणवकस्तदा सुखं तारयतु त्वां परीक्षां परमेश्वर इत्याशास्ते । अथेक्षते कन्यकैषा परिणयोचितवयास्तदाऽनुरूपभर्तृगामिनी भूया इत्याशिषं वितरति । अथालोकतेऽनपत्या पति-

---

१. उद्वेजयन्ति । २. अधिकार्थवचनं स्तुतिनिन्दे । अत्र स्तुतिरभिप्रेता । ३. ग्रामेऽधिकृतेन । ४. भूरिषु ग्रामेष्वधिकृतेन । ५, अध्येता । धर्मसूत्रेष्वस्य प्रयोगो दृश्यत इत्यप्रयुक्तत्वदोषो न ।

वत्नी सीमन्तिनीति तदा पुत्रमुखपङ्कजं दृश्या इत्याशंसावचनमुदुगिरति। यदि पश्यति मुहम्मदानुगोयं तदाऽल्लामावाह्यति गुण्योऽयं बहुप्रदोनुगृह्यतां स्वर्लोके च स्थानमस्मै प्रदीयतामिति। अथ स हिन्दुर्भवति तदा हरिं वा हरं वा प्रेरयत्यनुग्रहोस्मिन्क्रियतां नाकसदां मध्येऽयं प्रतिष्ठाप्यतां प्रजया पशुभिर्धनेन धान्येन चायमभिवर्ध्यतामिति। निपुणमनेकधा च प्ररोचयति भिक्षुको दातारम्। नेह किञ्चिदनेन दुरापं भवेद्यदि प्रार्थितमर्थमस्मै प्रदिशेत्। भिक्षुकाय ददान एष मानं वा प्रतिष्ठां वाऽऽरोग्यं वा चिरायुष्यं वा पुरुषायुषं वा कृत्स्नमभीप्सितं वाऽवाप्नुयान्न जातु भिक्षोराशिषो वितथाः स्युः। भिक्षुको हि बाढं वेद यद्यहं कृपणः कृपार्हो दयनीयोऽस्मीत्येवं कारुण्यमात्रमेवोद्बोधयेयं न तर्हि तथा सकामः[1] स्यां यथा दातॄणां परत्र शन्तातिमिह चाभ्युदयमाशासान इति।

भिक्षुका नाम नैकविधा भवन्ति। केचिच्छ्रेणिकृताश्चङ्क्रम्यन्ते गुरुणाधिष्ठिताः, केचिद् व्यस्ताः। तत्रापि केचिद् वृक्षमूलानि संश्रित्य मौनमास्थाय किंचिद् ध्यायन्त इवाऽनपेक्षधीरास्तिष्ठन्ति। न च याचन्ते वाचा। अन्तिकादतियन्तो लोकास्तु तपस्विन इमे दुष्करं कुर्वन्ति यदनिकेताः शीतोष्णं सहन्तेऽनन्यसनसश्च भगवन्तं भजन्त इति देयमेभ्यः शरीरयात्रार्थमिति श्रद्दधाना ददत्येव। केचिदन्येऽनुसारङ्गि भगवद्भक्तिगीतानि गायन्तो दानश्रवणानि च श्रोतॄणां चेतांसि सम्पादयन्तः संसारासारतां वोपजीणयन्तः काङ्क्षितं याचन्ते। इतरे पुनरादेशिकतामालम्बन्ते, पृष्टाश्च प्रगल्भमायतिं निर्दिशन्ति, तेन चाजीवमर्जयन्ति। अपरे गुह्यवेदिनमात्मानं वदन्ति। एवंलक्षणेषु केचित्परमार्थसाधवो भवन्ति न साधुताकञ्चुकाः। तेऽलोलुपा अनपेक्षा माधुकर्यां वृत्तौ स्थिताः सर्वलोकनमस्कृताः। ये तु भिक्षामात्रवृत्तयः सौजन्यप्रतिकञ्चुका[3] भुवि भारभूतास्तेऽत्र विषयभूता विशेषेण।

एषा हि दिनचर्या भिक्षुकस्य—स प्रातस्तरामुत्तिष्ठति। स्नानेऽस्य नियमो नास्ति। अङ्गमार्जनेनैवास्य परितोषः प्रायेण शिरःस्नानेन वा।

---

१. कृतार्थः। २. कल्याणम्। ३. सुजनताविरोधिनः।

जटाजूटादिप्रसाधनं त्रिपुण्ड्रादिधारणं च भसितादि चर्चनं चास्य प्रगेतनं कृत्यं यदनुष्ठायैवायं निष्क्रामति शरणात्। तत्र विकलाङ्गतां कञ्चिन्निमित्तीकरोति भिक्षायाम्। स खलु स्वानि क्षतानि तदुक्तानि वैकृतानि तेषां लक्ष्माणि वा व्रणबन्धैरौषधादिलेपैर्वा यथेष्टमुत्कटीकरोति। येनायतां यतां च पुंसां दृक्पातस्तत्र स्यादेवाकामतोपि। एवं प्रसाध्यात्मानं स प्रत्यहमेकामेवाचरितपूर्वां काष्ठामटाटयते। यां वेदिकां यच्चत्वरं यच्चैत्यं वाऽयमभ्यास्य भिक्षां शीलयति तामेव वेदिकां तदेव चत्वरं तदेव वा चैत्यं यदि कश्चित्तदन्यो भिक्षुकोऽधिगम्य प्रयाचते तदाऽवश्यं मिथः कलिर्जायते। उक्तं हि—'याचको याचकं दृष्ट्वा श्वानवद् घुर्घुरायत' इति। प्रायेणेमे भिक्षुका यानवाहनादिविरामस्थानेषु चतुष्पथेषु देवतायतनपरिसरेषु जनाकीर्णेषु वा प्रदेशान्तरेषु परिभ्रमन्तो दृश्यन्ते। यदि भिक्षुको न पश्यति तर्हि तस्य माणवः[1] कश्चित्साहाय्यमाचरति, तमन्धं हस्ते गृहीत्वा यतस्ततो नयति। आन्ध्यं हि सर्वार्थसाधकम्। अन्धो हि न केवलमात्मानं बिभर्ति द्वौ चान्यावपि। यदि च भिक्षुकः खञ्जति अपादिति[2] वा गन्तुमनीश्वरस्तर्हि चतुष्पक्ष्वान्नृन्भर्तुमर्हति। प्रायश ईदृशं विकलं जनं शकटिकायां निधाय तत्सहायाः कर्षन्ति। एवमुह्यमानः स किमपि करुणमाक्रोशति। वाहकाश्च तमाक्रोशन्तमनु सहाक्रोशन्ति। इत्थं स सर्वस्य दर्शनपथं नीतो विपुलमाजीवमर्जयति।

उपस्थितायां क्षपायां भिक्षाजीवाः शून्यान्यगाराणि देवगृहाणि पान्थशालानि च प्रपद्यन्ते यथासंभवं यथाच्छन्दं च। न हि नियतनिकेतनास्ते भवन्ति। परं नक्तं तेपि संवासमिच्छन्तीति सत्यम्। यः कश्चिदेको रात्रौ वसति स उद्विजते न तु रमते। सर्वो भिक्षुकः संचिनुतेऽर्थम्। केचित्तु न्यासालयेषु न्यस्यन्ति सञ्चितं स्वम्। परमिदमभ्युपेयं न हि भिक्षुकाः पूर्ववत्पारयन्त्यर्थान्संचेतुम्। परिवृत्तः समयः। नूनो

१. कुत्सितो मूढो वा मानवः। २. अत्र 'अपादेति प्रथमा पद्धतीनाम्' (ऋ० १।१५२।३॥) इति प्रमाणम्। तच्छान्दसमित्यदष्पिश्चेदपद् इति प्रयोक्तव्यम्। प जात्वपाद् इति। तस्याम्नार्थेऽप्रयोगात्।

युगोऽवतीर्णः । अद्यत्वे कान्यप्यहानि क्षुधाऽवसीदन्ति केचिद्भिक्षुका इति युक्तं प्रतिपत्तुम् । संस्कृतमतयो लोकाश्च भिक्षुकाशीर्भिर्न मनागपि प्रेर्यन्ते । दूषिताचारा दुष्कृतिन इम इति च प्रतियन्ति । नूनं निरायति-र्भिक्षुकतेति नचिराद्भवूभविष्यति भूभारः ॥

इति श्रीचारुदेवशास्त्रिणः कृतौ प्रस्तावतरङ्गिण्यां
वर्णनात्मकप्रस्तावविषयश्चतुर्थस्तरङ्गः ॥



## अथ पञ्चमस्तरङ्गः

## शास्त्रीयाः प्रस्तावाः

शास्त्रीयमथ प्रस्तोष्यता सविशेषमवधातव्यं मानाधीना मेयसिद्धिरिति । एकाकिनी प्रतिज्ञा हि प्रतिज्ञातं न साधयेदिति च । लक्षणप्रमाणाभ्यां वस्तुसिद्धिरिति सर्वतन्त्रसिद्धान्तः । लक्षिते मीमांस्यविषये सति च प्रतिज्ञोपन्यासे प्रमाणानि प्रयोज्यानि । प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि । प्रत्यक्षेण सिद्धेष्वर्थेऽनुमानं प्रवर्तयन्ति परीक्षकाः । केचिदर्थाः शब्दप्रमाणैकगम्या इति तत्र प्रमाणान्तरानुपन्यासः । एकत्र सिषाधयिषितेऽर्थे प्रमाणोपप्लवो विशेषेण पोषकृद्भवतीति स एषणीयः ।
षाधयिषितेऽर्थे प्रमाणोपप्लवो विशेषेण पोषकृद्भवतीति स एषणीयः ।
शास्त्राविरोधी तर्कश्च प्रमाणसहकारितया प्रयोज्य उदाहरणं चोपस्तम्भकं देयम् ।

स्वमतव्याक्रियैव परमतनिराक्रियेति नात्र बहु मन्तव्यम् । स्वपक्षस्थापनेन समं परपक्षोऽवश्यं निराकरणीयः । स च तावदादावस्येनोपन्यसनीयः स्वेनाविकृतेन स्वरूपेण, परस्याभीष्टैः प्रमाणैर्हेतुभिश्च सुष्ठु समर्थनीयस्ततो बलवत्तरैर्हेतुभिर्निराकरणीयः । न तु मिथ्याऽवहेलितव्यो व्यर्थं वा विडम्बयितव्यः ।

## ( १ ) किं शब्दो नित्य उतानित्यः

शब्दो नित्य इति वैयाकरणाः, अनित्य इति नैयायिकादयः । तत्र नैयायिकास्तु घटमानयेत्यादिवाक्योच्चारणकाले ये घकारादयो वर्णाः कण्ठादिस्थानेषु वायुसंयोगेनोत्पद्यन्ते ये च श्रवणेन्द्रियविषयतामापद्यन्ते त एव शब्दः, तल्लक्षण एव च शब्दः कम्बुग्रीवापृथुबुध्नादिमतः पदार्थस्य प्रत्यायको न ततो वर्णात्मनो व्यतिरिक्तः कश्चिदस्ति । उच्चरितप्रध्वंसित्वाच्च वर्णानां सोऽनित्य इति श्रिताः । वैयाकरणास्तु य उच्चरितः संभ्रयते नासौ शब्दः । स तु वर्णजन्यो ध्वनिः ध्वनिश्चानर्थकोऽनित्यः । उत्पन्नप्रध्वंसित्वात् । यश्च वर्णाभिव्यङ्ग्यो वर्णव्यतिरिक्तः स्फोटाख्यो

नित्योऽर्थस्तस्य तस्य पदार्थस्य प्रत्यायकः स शब्द इति प्रतिपन्नः । एषोऽत्र वैयाकरणानां प्रक्रियाक्रमः—

गौरित्येकं पदमित्येकत्वावगाहिनी बुद्धिः सर्वजनीना निर्बाधा च । न ह्यस्याः प्रमाणान्तरेण बाधमध्यक्षयामः, सैषा न वर्णनिष्ठा, वर्णानां नानात्वात् । तस्माद्यन्निष्ठा स शब्द इत्यवसेयम् । पदार्थप्रतीत्यन्यथानुपपत्तेरपि स्फोटाख्यं नित्यं शब्दतत्त्वमनुमेयं भवति । शब्दादर्थं प्रतिपद्यामह इति रूढिं गतो वृद्धव्यवहारः । तत्र शब्दशब्दः किम्पर इति व्याचिकीर्षया तत्रभवान् मण्डनमिश्रः स्फोटसिद्धौ स्माह—

नेष्यिता जातिशब्दानां समुदायानुपातिता ।
जातिमाचक्षते ते हि व्यक्तीर्वा जातिसंगताः ॥ इति ।

व्याख्यातं चेदं रामचन्द्राचार्येण गोपालिकायाम् । तद्यथा—

न तावदिदं लौकिकं वाक्यं शब्दजात्यभिप्रायम्, न शब्दजातितोऽर्थप्रतीतिः, गवाश्वादिपदेषु तदविशेषादभिधेयाविशेषप्रसङ्गात् । न चानुपाश्रितव्यावृत्तयो व्यक्तयो जात्यात्मना निर्दिश्यन्त इति साम्प्रतम्, वर्णव्यक्तिसामानाधिकरण्यदर्शनाद् गोशब्दादर्थं प्रतिपद्यामह इति । नापि शब्दव्यक्त्यभिप्रायम्, तदभेदाद् गोशब्दादित्येकवचनानुपपत्तेः । ते हि (जातिशब्दा हि) जातिं तद्वतीर्व्यक्तीर्वा निमित्तरूपोपादानेनाचक्षते न समूहम् ।……तस्मान्नैकं शब्दात्मानमन्तरेण लौकिकवचनोपपत्तिः ।

स्यान्मतं सोपपादि । लौकिकवचनानामुपपन्नार्थानामनुपपन्नार्थानां च दर्शनात् । न हि वचनानुपपत्तिमात्रेण प्रमाणरहितोऽर्थः शक्योऽवगन्तुमिति । तदसत् । अनुपपन्नार्थत्वाप्रतीतेः । भवति हि जरद्गवादिवाक्येष्वनुपपन्नार्थप्रतीतिः । न त्विह तथा । न हि सार्वलौकिकमविगानेन प्रयोगपथमवतरत्यनुपपत्तिरुपपत्तिमतो । विप्रतिपद्यमाना अपि हि शाब्दे नैनं प्रयोगं नानुमन्यन्ते । न चाप्रामाणिकत्वम् । नूनमुपलभन्ते प्रमाणेन शब्दात्मानमेकम्, यत एवमपहस्तितविप्रतिपत्तयः प्रयुञ्जते । तस्मान्न पश्चात्तनज्ञाननिवेशिभ्यो वर्णेभ्योऽर्थप्रत्यय इति ।

किं च भो नैयायिकशिरोमणे वर्णा एवार्थप्रत्यायका इत्यत्र व्यर्थमेवाभिनिविशसे । इदं भवान्पृष्टो लाचष्टां किं वर्णाः समस्ता अर्थं प्रत्या-

ययन्त्युत व्यस्ताः। यद्यभिमन्यसे समस्ता इति तदा वन्ध्याम्यसे। वर्णानां क्रमेणोत्पत्त्या नष्टवर्तमानोत्पत्स्यमानानां समूहासंभवात्। अथ व्यस्ता इति मनुषे तदपि तुच्छम्। वर्णेभ्योर्थप्रतीतेरदर्शनात्। द्वितीयादिवर्णोच्चारणवैयर्थ्यप्रसङ्गाच्च। न च विकल्पान्तरमस्ति। तस्मादपरिहार्यतया नित्यः स्फोटाख्यः शब्दोऽवश्याभ्युपेयः। यद्बलादर्थप्रतीतिर्भवति। स्फुट्यते ध्वनिभिरभिव्यज्यते स्फुटति वाऽस्मादर्थ इत्युभयथा स्फोटशब्दं निराहुः। अयं च स्फोटो नामार्थो भगवता भाष्यकारेणाभ्युपेत इति नापूर्वः। तथा चोक्तं भगवता पस्पशाह्निके—येनोच्चारितेन सास्नालाङ्गूलककुदखुरविषाणिनां सम्प्रत्ययो भवति स शब्द इति।

ननु स्फोटस्यार्थप्रत्यायकत्वं न घटते। स्फोटो ह्यभिव्यक्तः सन्नर्थं प्रत्याययतीति तेभिमतम्। तत्रेदं भवाञ्शब्दवित्तमः प्रष्टव्यः किं वर्णाः प्रत्येकमभिव्यञ्जयन्ति संभूय वा। पक्षद्वयेपि वर्णानां वाचकत्वे भवता ये दोषा विभावितास्ते स्फोटाभिव्यञ्जकत्वेपि प्रतिविधातव्याः। तदुक्तं भट्टाचार्यैर्मीमांसाश्लोकवार्तिके—

> यस्यानवयवः स्फोटो व्यज्यते वर्णबुद्धिभिः।
> सोपि पर्यनुयोगेन नैकेनापि विमुच्यते॥ इति।

तस्मात्स्फोटाभिव्यक्तिपक्षो नतरामञ्चति घटाम्। यच्चास्मत्पक्ष आशङ्कितं वर्णेषु समूहासंभवात्पदत्वबुद्धिर्नोत्पत्तुमर्हतीति तत्रोच्यते—गौतमेन तावत् ते विभक्त्यन्ताः पदमिति वर्णेष्वेव पदसंज्ञा विहिता। सा च नानुपपन्ना। यद्यपि वर्णानामाशुतरविनाशित्वात्समूहासंभवात्पदबुद्धेरसंभवस्तथापि वृद्धव्यवहाराद् वर्णसमूहस्य संकेतग्रहपूर्वकमेकार्थप्रत्यायकत्वदर्शनाद्विनाशिभिरपि वर्णैरुत्तरोत्तरमनुग्रहः क्रियत इत्यनुभवबलादास्थेयमित्येतावता समूहकल्पनया पदबुद्धिरुपपत्तिमत्येव। एवं च

> यश्चोभयोः समो दोषः परिहारोपि वा समः।
> नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे॥

इति न्यायाद्वर्णानामेव वाचकत्वोपपत्तौ वर्णव्यतिरिक्तस्फोटकल्पना नार्थवती दोषयुता चेति स्थितम्। अत्रोच्यते—इदं कुशकाशावलम्बनम्। इदं तावत्परीक्ष्यं वर्णेषु पदबुद्धिर्वर्णमात्रालम्बना स्याद् वर्णसमूहालम्बना

वा। नाद्यः कल्पः। मिथो विलक्षणवर्णमालायामेकस्यानेकवर्णानुगतस्य कस्याप्यभावेन पदप्रतीतेरनुपपत्तेः। यावत्पुष्पसाधारणसूत्रनिमित्तक एव पुष्पेषु मालेति प्रत्ययः। नापि चरमः। उच्चरितप्रध्वस्तानां समूहभावासंभवादित्यसकृदवोचाम। समूहशब्दो ह्येकस्मिन् प्रदेशे सहावस्थिततयानुभूयमानेषु बहुष्वर्थेषु वर्तते। न च वर्णास्तथानुभूयन्ते। उच्चरितप्रनष्टा हि ते। न च वर्णेषु काल्पनिकः समूहः शक्यः कल्पयितुम्। इतरेतराश्रयताप्रसक्तेः। इतरेतराश्रयाणि च कार्याणि न प्रकल्पन्ते। तथा ह्येकार्थप्रत्यायकत्वसिद्धौ पदत्वप्रतीतिस्तत्सिद्धावेकार्थप्रत्यायकत्वसिद्धिरिति। तस्माद्वर्णानां वाचकत्वायोगात्स्फोटोऽभ्युपेयः।

यच्चोक्तमभिव्यक्तिपक्षेपि क्रमेणाभिव्यक्तिरिति समूहासंभवादिदोषानिर्मोक्षप्रसङ्ग इति तत्र ब्रूमो मा स्म संभव'त्समूहः, किं नश्छिद्यते। नन्वनवयवस्य स्फोटस्य कथं क्रमिकाभिव्यक्तिः, तथा च द्वितीयादिवर्णोच्चारणवैयर्थ्यरूपदोषस्तदवस्थ इति चेदहमपीदमचोद्यं चोद्यः। नूनमभिव्यक्तिमन्तरेण[1] न साधीयः परिगृहीतार्थोसि येनैवं ब्रूषे। अयमत्राभिव्यक्तौ क्रमः—अभिव्यञ्जकोपि प्रथमो ध्वनिः स्फोटमस्फुटमभिव्यनक्ति, उत्तरोत्तराभिव्यञ्जकक्रमेण स्फुटं स्फुटतरं स्फुटतमम्। अभिव्यक्तिक्रमं च दृष्टान्तदार्ष्टान्तिकपूर्वकं हरिरित्थमाह वाक्यपदीये—

> यथानुवाकः श्लोको वा सोढत्वमुपगच्छति।
> आवृत्त्या न तु स ग्रन्थः प्रत्यावृत्ति निरूप्यते॥
> प्रत्ययैरनुपाख्येयैर्ग्रहणानुगुणैस्तथा।
> ध्वनिप्रकाशिते शब्दे स्वरूपमवधार्यते।
> नादैराहितबीजायामन्त्येन ध्वनिना सह।
> आवृत्तिपरिपाकायां बुद्धौ शब्दोऽवधार्यते॥ इति।

अयमर्थः—अनेकावृत्तौ श्लोकाद्यवभासः स्पष्टः संवेद्यते। तथैवायमपि शब्दात्मा पुनः पुनरभिव्यक्तस्फोटरूपोऽवधार्यते। न च प्रत्यभिव्यक्ति तत्रेदृशी बुद्धिरुपजायते इदं गृहीतमिदं नेति। नादैरभिव्यज्यमाने हि स्फोटे ये ज्ञानविशेषाः स्फोटग्रहणानुकूला अन्तरालवर्तिन इदं तदित्यव्य-

---

१. न साकल्येन इत्यस्याभावे लक्षिरूपम्। २. मध्ये, तद्विषय इत्यर्थः।

पदेश्यास्ते स्फोटरूपावसाये हेतुतां यान्ति । नादैर्ध्वनिभिराहितं बीजं भावनाबीजं यस्यां सा तथोक्ता । परिपाकः कार्यजननशक्तिविशेषः । प्रथमेन ध्वनिना किञ्चिद् भावनाबीजमाहितं तेन कश्चित्परिपाकः, एवं द्वितीयेनेति । यदाऽन्त्यो ध्वनिरवधार्यते तदा गौरित्येवं शब्दोप्यवधार्यते ।

न च पूर्वपूर्ववर्णानुभवजन्यसंस्कारसहकृतचरमवर्णानुभवजन्यसमूहालम्बनात्मकैकस्मृतिविषयस्य पदस्य शक्त्याश्रयत्वं वाचकत्वं च सम्भवतीति वाच्यम् । संस्कारस्य तत्तत्पदार्थविषयकत्वेपि तत्तत्क्रमविषयकत्वाभावेन येनैव क्रमेण संस्कारस्तेनैव क्रमेण स्मृतिरिति नियमाभावाद् रसः, जनद्यादिशब्दानुभवजन्यसंस्कारैः सरः, जरा, दीन इत्यादिपदानामपि स्मृतिविषयतासंभवेनानिष्टप्रसङ्गात् ।

एवं पदावसायस्य पदार्थप्रतीतेश्चान्यथानुपपत्त्या वर्णानां च वाचकत्वायोगाद्भिन्नत्योऽखण्डः स्फोटाख्यः शब्दात्माऽवश्यप्रतिपत्तव्य इति दिक् ।

---

## ( २ ) विवर्तवादः

मूलकारणाज्जातेयं सृष्टिः किं मूलकारणेनारब्धोत मूलकारणसङ्घातरूपाऽऽहो मूलकारणपरिणामभूताऽऽहोस्विन्मूलकारणविवर्तभूतेति मीमांसायां प्रवृत्ताः पूर्वे मुनयश्चतुरो वादान्प्रातिष्ठिपन्—तथाह्युक्तं सर्वज्ञात्मना मुनिना संक्षेपशारीरके—

आरम्भवादः कणभक्षपक्षः संघातवादस्तु भदन्तपक्षः ।
साङ्ख्यादिपक्षः परिणामवादो वेदान्तपक्षस्तु विवर्तवादः ॥ इति ।

समवायिकारणमसमवायिकारणं निमित्तकारणं चेति कारणत्रितयं स्वस्माद्भिन्नं पूर्वमसदेव कार्यमुत्पादयति । अयमारम्भवादो नाम वैशेषिकाणां नैयायिकानां च । तत्रासमवायिकारणान्निमित्तकारणाच्च कार्यं भिद्यत इतीतरैरपि दार्शनिकैरिष्यते परं समवायिकारणात्कार्यस्य भेदं न ते सहन्ते । तन्तुभिरारब्धः पटः स्वसमवायिकारणात्तन्तुसमूहाद्भिन्न एवेति नैयायिकाः । उपादानकारणानां तन्त्वादीनां समुदाय एव पटादि-

कार्यं न तु कारणादतिरिक्तं किञ्चित् कार्यं नाम। सोऽयं संघातपक्षः सौत्रान्तिकानां वैभाषिकाणां च सौगतानाम्। उपादानकारणस्य तात्त्विकोऽन्यथाभावः कार्यमित्येष परिणामवादः साङ्ख्यानां पातञ्जलानां रामानुजीयानां च। अतात्त्विकः कारणस्यान्यथाभावः कार्यमित्येष विवर्तवादः श्रीशङ्करानुगानामद्वैतवादिनां वैयाकरणानां च श्रीभर्तृहरिप्रभृतीनाम्। अयमेवार्थः कैश्चिदित्थं निरूपितः—

सतत्त्वतोऽन्यथा प्रथा विकार इत्युदीरितः।
अतत्त्वतोऽन्यथा प्रथा विवर्त इत्युदाहृतः॥ इति।

अयमत्र सारसङ्ग्रहः—सतो द्रव्यस्यावस्थान्तरापत्तिः परिणामः। सर्वाणि प्रकृत्यादीनि तत्त्वानि तत्तत्कार्यरूपेण परिणमन्ते इति साङ्ख्यमतम्। अपरित्यक्तपूर्वरूपस्य वस्तुनोऽसता रूपान्तरेण प्रतीतिर्विवर्तः। यथा शुक्तेः रजतरूपेण प्रतीतिः। अधिष्ठानभूते ब्रह्मरूपे वस्तुन्यसदेव सर्वमिदं जगद् भ्रान्त्या भासत इति शाङ्कराः प्रतिपन्नाः। व्यावहारिकदशायां कार्यस्य सत्त्वं त्विष्टमेव वेदान्तिनोऽपि। साङ्ख्यस्य तु त्रिकालाबाध्यत्वेन तदिति विशेषः। अत एव कश्चिद् विपश्चिदपश्चिम आह—

विवर्तवादस्य हि पूर्वभूमिर्वेदान्तवादे परिणामवादः। इति।

निरुक्तः परिणामवादः साङ्ख्ययोगानामभिमतोऽप्यपोद्यते निगमान्तविशारदैः। एषा हि तेषां निराक्रियाप्रक्रिया संगृह्योच्यते—यदुच्यते चेतनानधिष्ठितमचेतनं प्रधानं प्रवर्तते। सुखदुःखमोहात्मकश्चायं प्रपञ्च इति तस्य तादृशेन कारणेन भवितव्यमिति। तदसत्। चेतनाधिष्ठानमन्तरा प्रवृत्तेर्दुरुपपादत्वात्। स्वर्णादौ रुचकाद्युपादाने स्वर्णकारादिचेतनाधिष्ठानोपलम्भात्। ननु यथा पङ्गुः पुरुषोऽन्धं प्रवर्तयति यथा वाऽश्मायस्कान्तो लोहम्, एवं पुरुषः प्रवृत्तिशक्तिहीनोऽपि दृक्शक्तिहीनं प्रधानमिति चेन्न। पुरुषस्य वागादिना पङ्गोः सान्निध्येन चायस्कान्तस्य प्रवर्तकत्वोपपत्तेः। पुरुषस्य वागाद्यभावान्नित्यसान्निध्येन नित्यं प्रवर्तकत्वापत्तेश्च। न च स्वत एव परिणामः सम्भवतीति वाच्यम्। प्रयोजनाभावात्। न च पुरुषभोगः प्रयोजनम्। त्वन्मते पुरुषस्य पुष्करपलाशवन्निर्लेपत्वस्वीकारात्। यच्चोक्तं सुखदुःखमोहात्मकोऽयं प्रपञ्च इति तदसत्। यथा घटरूपं घटनिष्ठं

न तथा चन्दनसुखं चन्दननिष्ठं भवति। न हि चन्दनादिपदार्थेषु सुखदुःख-मोहात्मकत्वमस्ति सर्वान्प्रत्यविशेषापत्तेः। यद्येते चन्दनादयः सुखदुःखादि-स्वभावाः स्युस्तदा हेमन्तेपि चन्दनः सुखः स्यात्। न हि चन्दनः कदाचिदचन्दनो भवति। तथा निदाघेप्युशीरलेप इव कुङ्कुमपङ्कोपि शीर्ष-वेदनादेः शमकः स्यात्। न हि कुङ्कुमपङ्कः कदाचिदकुङ्कुमपङ्को भवति। एवं कण्टकः क्रमेलकस्येवेतरेषामपि प्राणभृतां प्रीतये स्यात्। न ह्यसौ कांश्चित्प्रत्येव कण्टको भवत्यकण्टकश्चान्यान्प्रति। तस्माच्चन्दनादयो विशेषाः कालविशेषाद्यनुरोधात्सुखादिहेतवो भवन्ति न तु स्वभावात्। तस्मात्प्रधानसिद्धौ प्रपञ्चस्य सुखदुःखमोहात्मकत्वमिति यो हेतुरुपात्तः सोऽसिद्धः।

निरस्तः परिणामवादः। विवर्तवादः सम्प्रत्युपपाद्यः।

वेदान्तास्तावद् ब्रह्मणोऽभिन्ननिमित्तोपादानकारणतामामनन्ति। तथा चोक्तं तैत्तिरीयारण्यके—यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद् विजिज्ञासस्व तद् ब्रह्मेति। यत इति पञ्चम्यर्थे तसिल्प्रत्ययान्तम्। जनिकर्तुः प्रकृतिरित्यनेन पञ्चमी। ततो जगतः प्रकृतिर्ब्रह्मेति व्यक्तमुदितं भवति। येन जातानीत्यत्र येन जीव-न्तीत्यनेनान्वेति। तेन सर्वस्य भूतवर्गस्य तदेवैकं जीवनकारणमित्यप्युक्तं भवति। अतश्चात्र ब्रह्म जगतः प्रकृतिरुक्ता। यत् प्रयन्त्यभिसंविशन्तीति ब्रह्मण्यप्ययो ह्युक्तः। अप्ययश्चोपादानकारण एव सम्भवति न निमित्त-कारणे। न हि घटः कुलालमप्येति न चात्र शब्दार्थविद् विप्रतिपत्तुमर्हति सम्भिन्नबुद्धिर्वा प्रत्यभिनिविष्टो वा न चेत्स्यात्। अन्यत्राप्ययमर्थोऽपरथा दृष्टान्तसहकारेणोपदिष्टः—

यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः संभवन्ति।
यथा सतः पुरुषात्केशलोमानि तथाक्षरात्संभवतीह विश्वम्॥

(मुण्डके १।७।)।

इमां श्रुतिं श्रीशङ्करभगवत्पादा इत्थं विवृण्वते—यथैते दृष्टान्तास्तथा सलक्षणं विलक्षणं च (चेतनं च जडं च) निमित्तान्तरानपेक्षाद्यथोक्त-लक्षणादक्षरात्सम्भवति इह संसारमण्डले विश्वं समस्तं जगदिति। अत्राहुः

श्रीसदानन्दयतयः—तत्र शक्तिद्वयवदज्ञानोपहितं चैतन्यं स्वप्रधानतया निमित्तं स्वोपाधिप्रधानतयोपादानं च भवति । यथा लूता तन्तुकार्यं प्रति स्वप्रधानतया निमित्तं स्वशरीरप्रधानतयोपादानं च भवतीति ।

पुनरपि प्रकारान्तरेण वेदान्ता ब्रह्मण उपादानकारणतां वेदयन्ति । 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवती'ति शौनकप्रश्नोपि ब्रह्मण उपादानत्व एव घटते । घटादिकारणभूतायां मृत्तिकायां विज्ञातायां सर्वेषां घटादीनां मृत्तिकेत्येवंरूपेण विज्ञानात् । तथा सत्येव चोद्दालकस्य गुरुकुलात्समावृत्तं श्वेतकेतुं प्रति 'उत तमादेशमप्राक्ष्यः, येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञात'मिति प्रश्नः संगच्छते । 'कथं नु भगवः स आदेशो भवती'ति च पुत्रेणानुयुक्तस्य पितुः 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्य-मि'त्याद्युत्तरं च संगच्छतेतराम् ।

न चेश्वरस्य केवलनिमित्तकारणता नैयायिकानामभिमतोपपत्तुमर्हति । चेष्टाप्रयोजनयोरभावात् । न हि निरीहे ब्रह्मणि चेष्टाप्रयोजने संभवतः । अन्तरेण च ते प्रवृत्तिरसंभविनीति निमित्तकारणतानुपपत्तिर्विस्पष्टैव । केवलोपादानत्वे यथा पटे कार्ये समुत्पन्ने तत्कारणानां तन्तूनां पृथक्सत्ता नोपलभ्यते यथा वा घटे जाते तत्कारणभूताया मृदः पृथग्भावो नास्ति, एवं जगति जाते ब्रह्म पृथङ् नावशिष्येतेत्यभिन्ननिमित्तोपादानकारण-ताऽभ्युपेयते ।

निरवयवस्य सतो ब्रह्मण उपादानत्वे परिणामासम्भवात्पारिशेष्याद् विवर्त आस्थीयते । विवर्तसमाश्रयेणैव श्रुत्युक्तमुपादानत्वं शक्यमुपपाद-यितुम् । विवर्तश्चातात्त्विकयन्यथाप्रथेति पूर्वमवोचाम । यथा वा वेदान्त-परिभाषाकारैर्निरूपितम्—विवर्तो नाम उपादानविषमसत्ताककार्योत्पत्ति-रिति । इदं दृश्यमानं नानानामरूपात्मकं विश्वं ब्रह्मणो विवर्त इति सिद्धान्तः । अयं विवर्तः किन्निमित्तक इति चेदुच्यते—अविद्याकृतोऽयं भवति । केयमविद्या नाम । अविद्या हि सदसद्भ्यामनिर्वचनीयं त्रिगुणा-त्मकं ज्ञानविरोधि भावरूपं यत्किञ्चिदिति वदन्ति । सेयमविद्या विक्षेपा-वरणशक्तिद्वयान्विता ब्रह्मावृणोति, आवृत्य च विक्षिपति प्रतिभासयति

सकलमिमं प्रपञ्चम् । इयं चानादिरपि सान्ता, कालान्तरे बाध्यमानत्वात् । ब्रह्मविषयाप्यविद्या जीववृत्तिर्न ब्रह्मवृत्तिरिति श्रीवाचस्पतिमिश्राः । ननु-सत्यामविद्यायां जीवः समुद्भवति सति च जीवेऽविद्या समुल्लसतीतीतरेत-राश्रयताप्रसङ्गः । न ह्यविद्या पश्चात्तनस्वकार्यवृत्तिः स्यादिति युज्यत इति चेत् केयं बिभीषिका । अनादिरयमविद्याया जीवस्य चान्योन्यसमाश्रयः । कालानवच्छिन्नं ह्येतयोः साहचर्यमिति गृहाण ।

नन्वेवंविधोन्योन्याश्रयसम्बन्धो न बुद्धिमुपारोहतीति चेत् । सत्यम् । इदं ह्यविद्याया अविद्यात्वं यद् दुरवधारत्वम् । अनिर्वाच्या चाविद्या बुद्धि-विषयश्चेति विप्रतिषिद्धं स्यात् । तदुक्तम्—

दुर्घटत्वमविद्याया भूषणं न तु दूषणम् ।
कथंचिद् घटमानत्वेऽविद्यात्वं दुर्घटं भवेत् ॥ इति
जगतो व्याख्यात्रीयमविद्या स्वयमव्याख्येयेति स्थितम् ।

ननु यत्सदसत्त्वेनानिर्वाच्यं तत्कथमर्थक्रियाकारि स्यादिति चेदुच्यते । अर्थक्रियाकारिता नामानिर्वाच्य एव पदार्थे भवति । एतल्लक्षणं सामर्थ्य-मनन्ते शुद्धेऽविकार्ये ब्रह्मणि तु न संभवति । आत्यन्तिकसत्ताविधुर एवार्थो व्यवहारे सामर्थ्यवान्भवतीति वेदान्तराद्धान्तः ।

ननु सर्वैरविशेषेण प्रत्यक्षमुपलभ्यमानस्य विश्वस्य मिथ्यात्वं न जाघ-टीति, तेन नास्यापलापो युक्त इति चेदुच्यते—त्रिविधं हि सत्त्वमङ्गीक्रियते पारमार्थिकं व्यावहारिकं प्रातिभासिकं चेति । यदत्यन्तं सन्न तद् बाध्यते, स परमार्थः । यच्चात्यन्तमसन्न तदनुभूयते, तच्छून्यम् । ब्रह्मणः कालत्र-येपि बाधो नेति ब्रह्मात्यन्तं सत् । वन्ध्यापुत्रशशशृङ्गादयश्चात्यन्तमसन्तः, कालत्रयेप्यनुभूतिविषयानुपगमात् । दृश्यमानः प्रपञ्चस्तु नात्यन्ताय सन्, बाधो ह्यस्य सुषुप्तौ लक्ष्यते । न चाप्यसन् , अनुभूतिविषयत्वात् । न चापि सच्चासच्चेति वाच्यम् , विरोधात् । तेन शुक्तौ रजतवत् प्रातिभा-सिकमिदं विश्वमिति तत्त्वम् । न वयं व्यावहारिकीमस्य सत्तां प्रत्याच-क्ष्महे । अयं दृश्यमानः प्रपञ्चः सुतुच्छक इति परेपि प्रस्थानभेदाः स्वीकु-र्वत इति जितमद्वैतवादिभिः । तथा चोक्तं साङ्ख्यवृद्धैः पातञ्जलभाष्ये चतुर्थे चरणे—

गुणानां परमं रूपं न दृष्टिपथमृच्छति।
यत्तु दृष्टिपथं प्राप्तं तन्मायैव सुतुच्छकम्॥ इति।

एतदभिप्रेत्यैव भगवता गौतमेनापि सूत्रितम्—स्वप्नविषयाभिमानवदयं प्रमाणप्रमेयाभिमानः (४।२।३१) इति। मायागन्धर्वनगरमृगतृष्णिकावद्वेति च।

ननु विवर्तवादः खल्वविद्यैकप्रतिष्ठः। अविद्या चानिर्वचनीयत्वलक्षणाऽप्रमेयेत्यप्रतिष्ठिता। अप्रतिष्ठितायां चास्यां का प्रतिष्ठाऽस्य वादस्येति चेच्छृणु—काममपरिच्छेद्यस्वरूपाऽविद्या, अस्तीति को नामानुमन्मत्तोपह्नुवीत। इयं च योगैरप्यभ्युपगता। 'अविद्यास्मितारागद्वेषाभिनिवेशाः क्लेशा'पञ्च इति हि पातञ्जलं सूत्रम्। 'सेयं दुःखा च दुरुपपाद्या चे'ति योगभाष्यकाराः। शास्त्रेषु प्रक्रियाभेदैरविद्यैवोपवर्ण्यत इति च वाक्यपदीये हरिः। अविद्यावद्विषयाणि सर्वशास्त्राणीति च श्रीभगवत्पादाः। तथा हि ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्चेत्यत्रात्मन्यत्राह्मणे ब्राह्मणत्वारोपसमाश्रयेणैव शास्त्रं वेदाध्ययनं विधत्ते। अनात्मनि पुत्रे कलत्रे वा सुखिते दुःखिते वाऽहमेव सुखी दुःखी वेत्यभिमन्यते। शरीरे स्थूले कृशे वाऽहमेव स्थूलः कृशो वेति शरीरधर्मानात्मन्यध्यस्यति। एवं चक्षुषि काणे कर्णे वा बधिरेऽहमेव काणो बधिरो वेति मन्यते, करचरणादौ वा रुग्णेऽहमेव रुग्ण इति भ्रमति। सोऽयमात्मनीन्द्रियधर्माध्यासः। नैतदेव। पश्वादिभिः सान्निध्यकैः समानोऽस्मदादीनां व्यवहारः। यथा गोपालकेनागोपालकेन वा दण्डेऽवगूर्णे गोमहिषादि सत्त्वं भयेनापक्रामति मा मां वधीदिति तथा प्रबोधवन्तोपि वयमिति 'न हन्यते हन्यमाने शरीरे' इति श्रुतेरच्छेद्याभेद्यत्वस्य शाब्दबोधेप्यविद्यावरणेनाऽनुपलब्धात्मस्वरूपाः स्म इति प्रसिध्यति। तेन दृढभूमिको दृढोपपत्तिकश्च विवर्तवाद इति प्रसिध्यतितराम्।



## ( ३ ) अस्ति शरीरेन्द्रियमनोबुद्धिव्यतिरिक्त आत्मा

अस्मत्प्रत्ययगोचरः कः पदार्थः। अयं हि जिज्ञासाविषयः पुराणानां विमर्शकानां नूतनानां च। अहमस्मीति केनानुन्मत्तेन शक्यतेऽपलपितुम्। अहं नास्मीति वदतो व्याघातः प्रव्यक्तः। स्वभावेन च सिद्धा भावा इतरेतराभावमात्रेणाभावतां न भजन्ते। न हि यो गौर्नासावश्वः, यश्चाश्वो नासौ गौरिति गवाश्वमेव न भवतीति पार्यते वक्तुम्। अहंपदवाच्येऽर्थे मतविसंवादाः प्रथन्ते परीक्षकाणाम्। स चार्थो नैयायिकैरात्मेत्यभिलप्यते स एव नः प्रपित्सागोचरः। एषोऽत्र मतसंग्रह —१ देहमात्रं चैतन्यविशिष्टमात्मेति प्राकृता जना लोकायतिकाश्च प्रतिपन्नाः। २ इन्द्रियाण्येव चेतनान्यात्मेत्यपरे। ३ मन इत्यन्ये। ४ विज्ञानमात्रं क्षणिकमित्येके। ५ शून्यमित्यपरे। ६ अस्ति देहादिव्यतिरिक्तः संसारी कर्ता भोक्तेत्यपरे। अयमेव चान्त्यः पक्षः प्रकृते साध्यः।

नायमहंपदार्थ आत्मा शरीराभिन्नो भवितुमर्हति। तत्कस्मात्। नित्यं ह्यस्मच्छरीरात्कोप्यंशो व्यपैति। यदा स्नामस्तदोद्वर्तते मालिन्यम्। किमिदं मालिन्यं नाम पूयमानोपरित्वगेव नान्यदिति ब्रूमः। कर्णकिट्टं, दूषिका, सिङ्घाणं च मे कर्णनेत्रनासिकाभ्नित्यमवस्रवन्ति। अपयात्येव कश्चिदशः शारीरः। न चानुभवाम्यपकृष्टोऽस्मीत्यंशो वा मे कश्चिद् व्यपवृक्त इति। इदं तु सततमनुभवामि स एवाहमस्मि तदवस्थस्तावत्परिमाण इति। न हि संमूढोपि प्रत्येति स्नातो मे शरीराद्यद् व्यपेतं स मत्स्वरूपांश एव भवतीति। तस्मादुपपद्यते शरीराद् व्यतिरिक्त आत्मेति।

एवमेव यदि मेऽङ्गुलिश्छिद्येत तदा किं मे जायतेऽनुभूतिरहमेव च्छिन्नोस्मीति। विरोपिते च व्रणे च्छिन्नाङ्गुलिव्यापारनिरपेक्षे कर्मणि व्यापृतोऽहं किमनुभवामि साम्प्रतं विकलोस्मि पुरा च सकल आसमिति। यदि नैषानुभूतिरुदयते तदा शरीरमेवात्मेति कथं प्रामाण्यमञ्चते।

यद्यात्थ चिन्तयामि भुञ्ज इति चिन्तयामि शय इति चोभयत्र चिन्तिभुजिक्रिययोश्चिन्तिशयत्योश्च कर्तृसामान्याच्छरीरात्मनोरभेदः प्रसिध्यतीति, एवमपि भ्रान्तोसि। विमृश्यतां तावदहमश्नामीत्यस्यार्थः। कोऽश्नाति?

शरीरमिति चेन्न। उपरमेप्यशनीयादेव। तदवस्थितेः। अथ ब्रूषे तान्ब्रूमः। कश्चिदात्माख्यः पदार्थ इति, तदप्यपेशलम्। अशनं हि शारीरमिति व्यवसितेः। कस्तर्ह्यशनायति। का नामाशनाया। शरीरेऽन्नाद्यापर्याप्तिर्वैकल्यं वेति चेन्नेदं क्षोदक्षमम्। भोव्यापर्याप्तिरेवाशनाया न, अपि तस्या अपर्याप्तेरनुभवः। तस्माद्योऽशनायति स शरीरव्यतिरिक्त आत्मेति सिद्धम्।

एवं चोदर्या मे वेदना समस्तीति वचोऽपि परीक्ष्यं प्रेक्षावताम्। यद्यार्तो भिषजमुपश्लिष्य पृच्छति किंकृता मे वेदनेति। स आह पुरीतति किञ्चित्कचिदवरुद्धमिति। रसो वा कश्चिदपकर्षं गत इति। परं नैतदनवद्यमुत्तरम्। न हि कस्यचिदर्थस्य क्वचिदन्त्रे स्खलनं रसापकर्षो वा वेदना भवति, किन्तर्हि विशिष्टानुभूतिः सा चात्मकर्तृकाऽऽत्माश्रया भवति।

अयमत्र निर्गलितोऽर्थः—अस्ति शरीरम्, अस्त्यात्मा, अस्ति च तयोर्मिथः सम्बन्ध इति। बुभुक्षादेरन्यथानुपपत्तेः।

अत्राहुरिदमवस्थितं शरीरनान्तरीयका नः स्थितिरिति। नास्माभिर्नं चान्येन केनाप्यशरीरस्थितिरन्वभावि। सशरीरस्यैव सर्वस्य सर्वाः क्रिया ज्ञानं भोगश्च। तेनात्यन्तायापृथग्भावोऽहम्पदार्थस्य शरीरस्य चेति संगच्छते शरीरमेवात्मेति चार्वाकमतम्। अत्राहुरेतन्मतविवरणकाराः—पृथिव्यादीनि चत्वारि तत्त्वानि। तेभ्य एव देहाकारपरिणतेभ्यः किण्वादिभ्यो मदशक्तिवच्चैतन्यमुपजायते। तेषु विनष्टेषु सत्सु स्वयं विनश्यति। तदाहुः—विज्ञानघन एवैतेभ्यः समुत्थाय तान्येवानु विनश्यति न प्रेत्य संज्ञास्तीति ( बृ० २।४।१२ )। इमां च स्वमते युक्तिमुदाहरन्ति। यद्धि यस्मिन्सति भवत्यसति च न भवति तत्तद्धर्मत्वेनाध्यवसीयते यथाग्निधर्मावौष्ण्यप्रकाशौ। प्राणचेष्टाचैतन्यस्मृत्यादयश्चात्मधर्मत्वेनाभिमता आत्मवादिनां तेऽप्यन्तरेव देह उपलभ्यमाना बहिश्चानुपलभ्यमाना असिद्धे देहव्यतिरिक्ते धर्मिणि देहधर्मा एव भवितुमर्हन्ति। तस्माद्व्यतिरेको देहादात्मन इति।

अत्र ब्रूमः। भो देवानां प्रिय, यदुक्तं भूतकर्तृकं चैतन्यं न च स्वतन्त्रं तदस्तीति तत्र ब्रूमो यथा भूतपरिणामविशेषो रूपादिर्भूतचतुष्टयादर्थान्तरं न, तथा भूतपरिणामभेद एवं चैतन्यं न तु भूतेभ्योऽर्थान्तरं धर्मधर्मिणो-

रभेदात्। भूतधर्माश्च रूपादयो जडत्वाद् विषया एव दृष्टा न तु विषयिणः। तच्चैतन्येपि समानम्। देहात्मकभूतानि च चैतन्यं प्रति विषय इति तवाप्यभिमतम्। तेन चैतन्यस्य विषयित्वपातः। स विरुध्यते। न ह्येकत्रार्थ एकस्यां क्रियायां कर्तृकर्मत्वे संभवतः। न हि नटः सुनिपुणोपि सन् स्वस्कन्धमधिरोढ्यति। तस्मान्न चैतन्यं देहधर्म इत्यवश्यमभ्युपेतव्यम्।

यच्चात्थ देहभावे भावाद् देहधर्मो एवात्मधर्मो इति ततो देहभावेऽपि कदाचिदभावादेतद्धर्मत्वमेवैषां कुतो न स्यात्। प्राणचेष्टादयस्तु सत्यपि देहे मृतावस्थायां न भवन्ति। देहधर्माश्च रूपादयः परैरप्युपलभ्यन्ते न त्वात्मधर्माश्चैतन्यस्मृत्यादयः। तस्मान्न देहधर्मकं चेतन्यमागन्तुकं हि तत्। किं च चेतनो देह इति कश्चीकारे प्रपञ्चमरणसुषुप्त्यादयश्च नोपपद्येरन्।

किं च यदि भूतभौतिकधर्मश्चैतन्यं तर्हि शरीरकारणीभूतेषु पृथिव्यादिष्वप्युपलभ्येत, अवयवेषु सन्त एव गुणा अवयविन्युपलभ्यन्ते नासन्तः। घटपटादिवच्छरीरमपि कार्यमवयवत्वात्। कार्ये च कारणातिरिक्तगुणानामदर्शनात्। स्वदुदाहृतेषु गुडादिषु तु मदशक्तिरनुद्भूता पूर्वमेव तिष्ठति, सम्मिश्रणात्सोद्भवति न त्वसत्येव जायते, न ह्यसतः सज्जायते।

यदि च शरीरधर्मकं चैतन्यमिति कथंचिदभ्युपगम्यते तर्हि वक्तव्यं घटे चैतन्यं कुतो न। घटोऽपि भौतिकः। तस्माद् घटश्च शरीरं चोभयमचेतनमभ्युपेतव्यं भविष्यति चेतनं वा। गत्यन्तराभावात्।

यदि च शरीरावयवेषु चैतन्यमभविष्यत्तदा केशनखादिषूपालप्स्यत। न चोपलभ्यते। अथ दुर्जनतोषन्यायेनाभ्युपगम्येत तदावयवेष्वनेकेषु चैतन्यान्यप्यनेकानि स्युः। ततश्चैतन्यविशिष्टा अवयवाश्च प्रयत्नादिषु परस्परं भिद्येरन्। तेनैकत्रावयविनि शरीरे एकस्मिन्क्षणे नैकं ज्ञानं स्यान्नैको वा प्रयत्नः। न चैतद्भवति। न हि क्वचिच्छरीरे विरुद्धं ज्ञानद्वयं प्रयत्नद्वयं वैककालिकं दृश्यते।

किं च नित्यं परिवर्तते शरीरम्। बाल्ये यच्छरीरं न तद्यौवने, यच्च यौवने न तद्वार्धके। एवं चेतन्यस्य शरीरधर्मत्वे तदपि परिवर्तेत। बाल्येऽर्जितं ज्ञानमवस्थान्तरे नावतिष्ठेत। अयं च महाननर्थः शरीरात्मनारभेदे चेतने वा शरीरे स्वीकृते—कृतहानमकृताभ्यागमश्च

प्रसज्येते। विनष्टे देहे को भोक्ष्यते कृतानि कर्माणीति कृतहानमुक्तानम्। देहान्तरेण तद्भोग इति चेदकृताभ्यागमः स्फुटः। तस्मान्न देह आत्मेति स्थितम्।

अपर आह—इन्द्रियाण्येव चेतनान्यात्मा। तान्येव ज्ञानाधिकरणम्। नातोतिरिक्तं ज्ञातृ समस्तीति। तदपि दुरुपपादम्। दर्शनस्पर्शनाभ्यामेकार्थग्रहणात्तत्तदिन्द्रियव्यतिरिक्तः कश्चिद् ग्रहीताऽस्तीति प्रतिपत्तव्यम्। अन्यथा सत्यपि चक्षुषा दर्शने त्वचा च स्पर्शने यो मयार्थो दृष्टः स एव स्पृष्ट इति विषयैक्यज्ञानं नोदियात्। अथ ब्रूषे शरीरे शरीरेन्द्रियवर्जं नान्यत्तत्त्वमस्तीति तदा मणैकत्वज्ञानं किमाश्रयमिति। इदं च नापलाप्यमेकत्वज्ञानं भवतीति। पीतमिदं जम्बीरमम्लं चेत्यनुभवे पीतत्वं चक्षुषा गृहीतमम्लत्वं च जिह्वया। पीतत्वाम्लत्वोभयधर्मवानेक एवार्थो जम्बीरं नामेति केनाग्राहि। इदं पीतमम्लं जम्बीरमित्यनुभूतौ दर्शनरसने इति व्यापारद्वयमेव यदि पश्यसि नाञ्जसा पश्यसि। पीतत्वाम्लत्वयोः पृथक् पृथक् तत्तदिन्द्रियेण ग्रहेऽपीदं गुणद्वयमेकाधिकरणमिति यो ग्रहः स नैकतरेणापीन्द्रियेण शक्यक्रिय इति किं नावधारयसि। किं च यदि कल्पयसि जम्बीरं नाम न किञ्चिदस्ति पीताम्लत्वमर्थद्वयं पश्यन्भ्रमति तत्तद्धर्मकमेकमेवार्थं पश्यामीति तदापीदं चोद्योसि स भ्रमः किमधिष्ठानः स्यादिति। नासौ चाक्षुषो नापि रासन इति तु त्वयाप्यङ्गीकार्यम्। तस्माद् इन्द्रियार्थप्रसिद्धिरिन्द्रियार्थेभ्योर्थान्तरस्य हेतुरिति यदभणीद् वैशेषिकसूत्रकारस्तस्य नास्त्यनङ्गीकारो नाम।

अथ मन्यसे नार्थोऽर्थान्तरेणात्माख्येन। इन्द्रियविषययोर्व्यवस्थैव व्यतिरिक्तां चेतनसत्तां व्यावर्तयति। तथा हि व्यवस्थितविषयाणीन्द्रियाणि। चक्षुरेव रूपं गृह्णाति, जिह्वैव रसं, त्वगेव च स्पर्शम्। चक्षुष्यसति रूपं न गृह्यते सति च गृह्यते। यच्च यस्मिन्नसति न भवति सति च भवति तस्य तदिति विज्ञायते। इति नार्थो गड्डुभूतेनात्मना। तानीमानीन्द्रियाणि स्वस्वविषयग्रहणाच्चेतनानीति किमन्येन चेतनेन। तत्रोच्यते—इयमेव व्यवस्थाऽऽत्मसद्भावं प्रसाधयति। यदि खल्वेकमिन्द्रियं सर्वग्राहि चेतनं स्यात्तु तदा शब्दस्पर्शादय एकेनैव गृहेरन्भोक्ता च विषयव्यवस्थितिः स्यात्।

तस्माच्चक्षुरादिद्वारा सर्वविषयग्राहकश्चेतन आत्मेन्द्रियव्यतिरिक्तोऽस्तीत्यनुमीयते । इतश्चानुमीयते—प्रसिद्धं हि प्रत्यभिज्ञानं चेतनेऽप्रत्याख्येयम् । अयं चेतन आम्रादेः रूपं दृष्ट्वाऽनुभूतपूर्वं रसं वा गन्धं वाऽनुमिनोति, एतद्रूपं मधुरमासीत्सुरभि चेत्यनेनापि तद्गुणेन भवितव्यमित्यादि । अनुमानं न ज्ञानमेव । न चैकस्य कस्यचिदपीन्द्रियस्य रूपरसादीनामनेकेषां ज्ञानं सम्भवति । नापि रसनेन्द्रियादिगृहीतस्य रसादेश्चक्षुरादीनां प्रत्यभिज्ञानं सम्भवति । किं च विषयसन्निकर्षे सत्येवैन्द्रियकं ज्ञानमुत्पद्यते । न चेदानीं रसनादीनां रसादिसंनिकर्षोऽस्ति, येन रसादीनां प्रत्यक्षं स्यात् । सङ्घातश्च प्रतिक्षणं भिन्न इति न तस्य पूर्वसङ्घातगृहीतस्य प्रतिसन्धानं संभवति । तस्माद्देहादिसङ्घातव्यतिरिक्त आत्मेति सिद्धम् ।

स्मृतिसद्भावोऽपि देहादिव्यतिरिक्तमात्मानमनुमापयति । केयं स्मृतिर्नाम । गृहीतपूर्वस्यार्थस्य सादृश्यज्ञानेनोद्बोध इति । इन्द्रियैर्यज्ज्ञानमुत्पद्यते न तदधीन्द्रियं तिष्ठति । क्षणिकत्वात्तस्य । क्षणं च तत्रावस्थायान्यत्र सङ्क्रामति । यदि चक्षुषा यद् गृहीतं तच्चिराय नित्यं वा चाक्षुषि तिष्ठेन्नार्थान्तरं किमपि गृह्णीत । नवनवार्थग्रहणे व्यापृतं चक्षुर्गृहीतपूर्वमर्थं क न्यस्यति । यत्र न्यस्यति स ज्ञानाधिकरणमात्मा । स्मृतिश्चात्मधर्म एव । अहं स्मरामि, रसादिस्मृतिमानहमित्यादिज्ञानेन तत्सिद्धेः । एवं स्मृतेरात्मधर्मत्वे सिद्धे फलस्य रूपदर्शनेन जायमाना रसस्मृतिरुपपत्तिमती भवति । तथाहि कस्यचिदम्लफलस्य जम्बीरादेश्चक्षुषा रूपदर्शने रसनस्येन्द्रियान्तरस्य विकारो रसानुस्मृतौ रसगर्धप्रवर्तितो दन्तोदकसम्प्लवभूतो गृह्यते । स इन्द्रियं चेच्चेतनं, नोपपद्येत । येन चक्षुषा फलं दृष्टं तेन तु तद्रसो नानुभूत इति न चक्षुषो रसस्मृतिः सम्भवति । नान्यदृष्टमन्यः स्मरति । अयं भावः—यदीन्द्रियेभ्यः पृथगात्मा नाङ्गीक्रियते तदेन्द्रियजन्यज्ञानानां समन्वयो न सम्भवति । प्रत्यभिज्ञास्मृत्यादीनां च कारणाभावादनुपपत्तिप्रसङ्गश्च । अस्मत्पक्षे त्वात्मैको द्रष्टा रसयिता स्मर्ता चेत्युपपद्यतेऽस्य रूपदर्शन एव रसानुस्मृतिः ।

नन्वात्मप्रतिपादकानां स्मृतिप्रत्यभिज्ञादीनां हेतूनां मनसि सम्भवान्मन एवात्मा न मनोव्यतिरिक्तः कश्चिदात्मास्ति । सर्वविषयं मन एकं चेति

सर्वतन्त्रसिद्धान्तः । तेन चक्षुरादीन्द्रिये संनिहितं मनो रूपादिविषयाननुभवतीति कालान्तरे मनसः स्मृत्यभिज्ञे नानुपपन्ने । एवं च फलरूपदर्शनेनसंस्कारोद्बोधाद्रसानुस्मृत्या दन्तोदकसंप्लवलक्षणो रसनेन्द्रियविकारः सूपपन्न एवेति चेन्न । यथा ज्ञातुरात्मनो बाह्यानि ज्ञानेन्द्रियाणि ज्ञानसाधनान्युपेयन्ते तथा तस्यैव मननसाधनमान्तरमपि ज्ञानसाधनमवश्याभ्युपेयम् , तदेव च मनः । न हि सुखादिज्ञानं साधनमन्तरेण ज्ञातुर्भवितुमर्हति । किं च मनस एव ज्ञातृत्वे स्वीक्रियमाणे तस्य केनेन्द्रियेणान्तरस्य सुखादेर्ग्रहणं भवतीति वक्तव्यम् ।

न च बुद्धिरेवात्मास्त्विति वाच्यम् । बुद्धिः प्रतिपत्तिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम् । ज्ञानं च गुणत्वादधिकरणमपेक्षते द्रव्यम् । तस्माज्ज्ञानाधिकरणमात्माऽवश्याभ्युपेयः । किं च । संवेदनेन संस्कारेण वा जायमानं सर्वं ज्ञानं क्षणिकमिति सर्वतन्त्रसिद्धान्तः । अन्तःकरणे च वीचितरङ्गवद् धारावाहितया अनुक्षणं भावाः समुद्भासन्ते । एतस्या विज्ञानधारायाः क्षणिका बुद्धिर्ज्ञात्री स्यादिति नोपपद्यते । नित्य आत्मन्येव यज्ज्ञातृत्वं घटते । तस्मान्न बुद्धिरात्मेति स्थितम् । तस्मादस्ति शरीरेन्द्रियमनोबुद्धिव्यतिरिक्त आत्मेति यत्प्रतिज्ञातं तत्प्रसाधितं वेदितव्यम् ।



## ( ४ ) रसनिरूपणम्

अथ रस इति कः पदार्थः । उच्यते—रस्यत आस्वाद्यत इति रसः, निर्वृतिघनश्चित्तवृत्तिविशेषः । यथा नानाव्यञ्जनसंस्कृतमन्नं भुञ्जाना रसानास्वादयन्ति सुमनसः पुरुषा हर्षादींश्चाप्यधिगच्छन्ति, तथा नानाभावाभिनयव्यञ्जितान्वागङ्गसत्त्वोपेतान्स्थायिभावानास्वादयन्ति सहृदयाः प्रेक्षका इति नाट्यशास्त्रकारा भरतमुनयः सहृदया इति सवासना उच्यन्ते । तेषामेव रसास्वादो भवति नेतरेषाम् । उक्तं च धर्मदत्तेन—

सवासनानां सभ्यानां रसस्यास्वादनं भवेत् ।
निर्वासनास्तु रङ्गान्तः काष्ठकुड्याश्मसंनिभाः ॥ इति ।

अयं रस आनन्दात्मकास्वादरूप आस्वाद्यरूपश्च । कथं रसोपलम्भो भवतीति जिज्ञासाशमनायाचकथन्नाट्यशास्त्रकाराः—'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिरि'ति । स्वस्वशास्त्रार्थवासितान्तःकरणानामेतत्सूत्रमालम्ब्य प्रवृत्तानां चत्वारो वादाः प्रतिष्ठन्ते वादिनाम् । तत्र भट्टलोल्लटस्य मीमांसानुगृहीत उत्पत्तिवादः । श्रीशङ्कुकस्य न्यायानुष्ठव्योऽनुमितिवादः । भट्टनायकस्य साङ्ख्यानुगो भुक्तिवादः । अभिनवगुप्तस्य चालङ्कारिकसमाश्रितश्चतुर्थोऽभिव्यक्तिवादः । अयमेव च मम्मटस्याप्यभिमतः । तथा चोक्तं काव्यप्रकाशे—

कारणान्यथ कार्याणि सहकारीणि यानि च ।
रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः ॥
विभावा अनुभावास्तत्कथ्यन्ते व्यभिचारिणः ।
व्यक्तः स तैर्विभावाद्यैः स्थायी भावो रसः स्मृतः ॥ इति ।

तानिमान्प्रथितांश्चतुरो वादानिहानुक्रमिष्यामः । रसस्य विभावादिभिः संयोगात्सम्बन्धनाद्रसनिष्पत्तिः प्रतीतिर्भवतीति सामान्यतः सूत्रार्थः । भट्टलोल्लटस्तु विभावैर्ललनाद्यालम्बनकारणैर्जनितो रत्यादिभावश्चन्द्राद्युद्दीपनकारणैरुद्दीपितोऽनुभावैः कटाक्षभुजाक्षेपप्रभृतिभिः कार्यैः प्रतीतियोग्यः कृतो व्यभिचारिभिर्निर्वेदादिभिः सहकारिभिः परिपोषं गमितो मुख्यया वृत्त्या रामादावनुकार्ये स्थितोऽपि रामस्येव वेषविशेषवाग्विधायिनि नर्तकेऽपि तत्कालं रामत्वाभिमानाद्रामत्वारोपाद्वा प्रतीयमान आरोप्यमाणो रसपदव्यवहार्यो भवतीति । अत्र व्याख्याने सूत्रे संयोगादित्यस्योत्पाद्योत्पादकभावसम्बन्धादित्यर्थः । निष्पत्तिरुत्पत्तिर्भवति । व्यञ्जनाव्यापारश्च नोरीक्रियते ।

अयमत्र निर्गलितोऽर्थः—यथाऽसत्यपि सर्पे सर्पभावेनोत्प्रेक्षितस्य दाम्नोऽपि भीतिरुदेति, तथा सीताविषयण्यनुरागरूपा रामगता रतिरविद्यमानापि नर्तकेऽभिनयनैपुण्येन तस्मिन्स्थितेव प्रतीयमाना सहृदयहृदये चमत्कारमर्पयन्त्येव रसपदवीमधिरोहतीति ।

प्रथमेत्र व्याख्यानेऽनुकार्ये रामादावेव रसनिष्पत्त्या सामाजिके तद-

भावात् सामाजिकानां चमत्कारानापत्तिरिति दोषः। तत्परिजिहीर्षया श्रीशङ्कुकोऽदः सूत्रमन्यथा व्याचष्टे—

विभावानुभावव्यभिचारिभिः संयोगादनुमाप्यानुमापकभावरूपात्सम्बन्धाद्रसनिष्पत्तिरनुमितिरिति। तत्र राम एवायम्, अयमेव राम इत्युभयरूपायाः सम्यक्प्रतीतेः, न रामोऽयमित्यौत्तरकालिकेन बाधेन मिथ्याप्रतीतेः, अयं रामो न वेति संशयप्रतीतेः, रामसदृशोऽयमिति च सादृश्यप्रतीतेर्विलक्षणा, चित्रे तुरगोऽयमितिवद् याऽरामे (नटे) रामोऽयमिति धीस्तया प्रथमं पक्षभूतो नटो विषयीक्रियते। ततः सेयं ममाङ्गेष्वित्यादिकाव्यार्थसाक्षात्कारेण गुरुशिक्षाऽभ्याससरूपादिताभिनयकार्यप्रकाशनेन। नटेनैव प्रकाशितैर्विभावादिभिः[1] कारणकार्यसहकारिभिः कृत्रिमैरप्यतथागृहीतैः संयोगादनुमाप्यानुमापकभावसम्बन्धादनुमीयमानोपि रत्यादेश्चमत्कारिताबलाद्रसनीयत्वेनान्येनानुमीयमानेन लौकिकेनार्थेन विसदृशः स्थायित्वेन ज्ञायमानो रत्यादिर्भावो नटेऽसन्नपि सामाजिकानां वासनया पुनः पुनरास्वाद्यमानो रसतामेतीति।

अयं एतन्मतसारः—यथा मिहिकाकुलिते प्रदेशेऽसतोपि धूमस्याभिमानाद् धूमनियतस्य वह्नेरनुमानं तथा नटेनैव सुनिपुणं प्रसैषैते विभावादय इति प्रकाशितैस्तत्रासद्भिरपि तैस्तन्नियता रतिरनुमीयमानापि निजसौन्दर्यबलात्सामाजिकानामास्वाद्यमानतया चमत्कारमादधती रसतामेतीति रतेरनुमितिरेव रसनिष्पत्तिरिति।

अत्र द्वितीयस्मिन् व्याख्याने प्रत्यक्षमेव ज्ञानं चमत्कारजनकं नानुमित्यादिरिति लोकप्रसिद्धिविरोधः, उत्तरकालं नटे नायं राम इत्येवमनुभूतबाधस्य सामाजिकस्य नटे निरुक्तानुमितिविरहेप्यास्वादोदयाद्रसं साक्षात्करोमीत्यनुव्यवसायायोगश्च दोषः। तत्परिहारबुद्ध्या भट्टनायको भरतसूत्रमित्थं व्याकरोति—

---

१. अयमर्थः—नटे गुरुशिक्षाप्रभावाद् दीर्घाभ्यासवशात्सेयं ममाङ्गेष्वित्यादिकाव्यार्थानुसन्धानबलाच्च प्रथममालम्बनस्योद्दीपनस्य च विभावस्याविर्भावस्ततस्तदनुगुणस्य रोमाञ्चादेरनुभावस्य व्यक्तिस्ततो व्यञ्जनीयस्योत्कण्ठादेर्व्यभिचारिभावस्य प्रकाशः।

विभावादिभिः संयोगाद्भोज्यभोजकभावसम्बन्धाद्रसनिष्पत्तिरिति सूत्रार्थः। इह त्रयः संनिहिताः-नटो नायकरामादिः सामाजिकश्च। किंगतो रसः प्रतीतिमुपारोहति ? नायकगतो वा नटगतो वा सामाजिकगतो वा। न तावन्नायकगतः प्रतीतिमारोहति। तदानीं रामादीनामभावेन तद्गतरत्यादेरप्यभावात्। असंश्च रत्यादिर्भावो न शक्यो नटे सत्त्वरूपेणानुमातुम्, खपुष्पादीनामपि तथा प्रसङ्गात्। वस्तुतो रामादिगता रतिर्नटगतेति कथंचिदनुमितापि सामाजिकेऽत्यन्तमसती न तच्चेतसि चमत्कारमादधीतेति न रसप्रतीतिः स्यात्। न चायं रसस्तथोत्पत्तुमर्हति, विभावादीनामवास्तविकत्वात्। न चाभिव्यज्यते, सत एवाभिव्यक्तिरित्यभ्युपगमात्। अपि तु काव्ये नाट्ये चाभिधावृत्तेर्विलक्षणेन विभावादिसाधारणीकरणस्वरूपेण शब्दस्य भावकत्वव्यापारेण साधारणीक्रियमाणो रत्यादिः स्थायी सत्त्वगुणाभिवृद्धेः प्रकाशानन्दमयज्ञानावस्थानस्वरूपेण भोजकत्वव्यापारेण भुज्यते।

अयमत्र सारः—शब्दस्याभिधारूपव्यापारवत्काव्यनाट्ययोस्तद्विलक्षणं भावकत्वभोजकत्वनामकं व्यापारद्वयमप्यतिरिक्तमस्ति। अभिधावृत्त्या काव्यार्थबोधोत्तरमेव तत्राद्येन भावकत्वव्यापारेण विभावादिरूपसीतादयो रामसम्बन्धिनी रतिश्च सीतात्वरामत्वसम्बन्धमपहाय सामान्यतः कामिनीत्वरतित्वादिनैवोपस्थाप्यन्ते। अन्त्येन भोजकत्वव्यापारेण तूक्तरीत्या साधारणीकृतविभावादिसाहित्येन सा रतिः सहृदयैरास्वाद्यते। अत एवासत्या अपि रतेरास्वादोऽलौकिकत्वादुपपन्नः। रतेरास्वाद एव च रसनिष्पत्तिरिति।

उक्ते तृतीये व्याख्यानेऽप्येतादृशव्यापारद्वयकल्पने प्रमाणाभावः, अभिधालक्षणाव्यतिरिक्तेन व्यञ्जनाव्यापारेणैव सर्वेष्टसिद्धेश्च तदनपेक्षा च। साक्षात्कारस्य सत्त्वोद्रेकाद्युक्तलक्षणस्य च कल्पने प्रमाणाभाव इत्यरुचिं मनसि निधाय स्थायिना विभावादिभिः समं संयोगाद् व्यङ्ग्यव्यञ्जकभावरूपात्सम्बन्धाद् विभावादीनामेव वा परस्परं संयोगाद्रसस्य निष्पत्तिरभिव्यक्तिरिति सूत्रार्थं विवृण्वते श्रीमदाचार्याभिनवगुप्तपादाः। अयमेव च समय आलङ्कारिकाणां श्रीमम्मटप्रभृतीनाम्।

अयमाशय आचार्यपादानाम्—

लोके प्रमदोद्यानकटाक्षनिर्वेदादिभिः कारणकार्यसहकारिभिः स्थायिनो रित्यादेरनुमाने प्रगल्भन्ते तत्राभ्यासपाटववन्तः सहृदयाः। काव्यनाट्ययोरपि रसिकाः सामाजिकास्तैरेव प्रमदादिभिः कारणत्वादिव्यपदेशविधुरैर्विभावनादिव्यापारविशिष्टैः सुखैकजनकत्वात्कार्यवैलक्षण्याल्लोकोत्तरैर्ममैवैते सन्त्यन्यस्यैव कस्यचिद्वेति, न ममैवैते न वाऽन्यस्यैव कस्यचिदित्येवमनध्यवसितैः साधारण्येन सीतात्वादिविशेषांशपरित्यागेन कामिनीत्वादिना ज्ञायमानैरभिव्यक्तप्राग्विनिविष्टवासनात्मतया स्थितं स्थायिनं रत्यादिकं रसास्वादयितृव्यक्तिविशेषे स्थितमपि साधारणीकृतविभावादिसाहित्येन व्यक्तिविशेषसम्बन्धराहित्येन सकलसहृदयसाधारण्येन स्वस्वरूपानन्दाकारमिवाभिन्नं विषयीकृतं पानकरसवच्चर्वयन्ति, स शृङ्गारादी रसः। स च न विभावादिकार्यः। विभावादिविनाशेपि तस्य संभवप्रसङ्गात्। नापि ज्ञाप्यः। जातस्य हि घटादेर्दीपादिना ज्ञापनं भवति। न तु जायमानस्य। तेन विभावादिभिर्हेतुभिः सममेव व्यञ्जितश्चर्वणीयश्च भवतीति।

निरुक्ते रसस्वरूपे नाट्यदर्पणकारो रामचन्द्र इत्थं प्रत्यवतिष्ठते—शृङ्गारादीनां करुणबीभत्सभयानकरौद्राश्चत्वारो दुःखात्मानः। सर्वे रसा रस्यमानत्वादेव सुखात्मका इति यत्परिगृहीतप्रायं तदनुभवं विरुन्धे। करुणे तावल्लौकिकानि शोकादीनि कारणानि दुःखरूपाणीति सर्वजनीनम्। काव्यनाटकयोरर्पितान्यपि तानि किमपि दुःखं जनयन्ति चेतसि सचेतसाम्। अत एव करुणादिरसात्सामाजिकानां जायत एव कियानप्युद्वेगः। रसमात्रस्यानन्दमयत्वे करुणादौ नेदृगनुभूतिरुपपत्तिमती स्यात्। यश्च करुणादिनिरूपणेऽप्यभिरुचिविशेषः समुन्मिषति सामाजिकानां सोऽभिनेतृनिबन्धनो ग्रन्थकृच्चातुरीमन्त्रायत्तश्च। तद्यथा लोके वीरा उत्साहैकवसतयो नराः शिरःशातनविशारदं विद्विषं साश्चर्यं प्रशंसन्ति। इत्थं प्रेक्षावन्तोपि प्रेक्षका नटनैपुण्येन विभ्रान्ताः सन्तः प्रतियन्ति दुःखात्मनोऽपि करुणादिरसात्सुखसंवित्तिरेवेति। सेयं रोमहर्षोत्कण्ठा, यया प्रयुक्ता लोकाः सामाजिकतां यान्ति। लोके सर्वत्र सुखदुःखयोः संभेद इति रामादिचरितनिबन्धने प्रवृत्ताः कवयस्तथा निबध्नन्ति यथा सुखदुःखयोरुभयो-

रवबोधः स्यात् । यदेवोपनतं दुःखात्सुखं तद्रसवत्तरमिति हि तेषां दर्शनम् । को नु नाम हृदयविदारणं पौलस्त्यचरितं जानकीहरणं दुःशासनकृतं द्रौपद्याः केशेषु कर्षणं हरिश्चन्द्रस्य चाण्डालायात्मविक्रयणं तत्सुतस्य सर्पदष्टस्य निधनमित्यादीन्व्यतिकरान् रूप्यमाणान्निशाम्य[1] निर्वृणुयात् । शोकादयो हि स्थायिभावा अश्रुविमोचनादिनाऽभिनेया भवन्तीत्यवश्यं दुःखाकुर्वन्ति सचेतसः सभ्यान् । तत्राप्यभिनयो यदि सुखाय स्यात्तदा नूनं दोषवानिति गर्हणमर्हेत् । किं चाधन्य एव स मनुजो यः परव्यसनं श्रुत्वा सुखितचेता भवति, दुःखितश्च पराभ्युदयकथया । तस्मात्करुणादयो रसा दुःखात्मका इति सिद्धमिति ।

तदेतत्साहित्यदर्पणकारा इत्थं निरास्थन्—

ननु तर्हि करुणादीनां रसानां दुःखमयत्वाद्रसत्वं न स्यादित्युच्यते—

"करुणादावपि रसे जायते यत्परं सुखम् ।
सचेतसामनुभवः प्रमाणं तत्र केवलम् ॥
किं च तेषु यदा दुःखं न कोपि स्यात्तदुन्मुखः ॥"

न हि कश्चित्सचेतन आत्मनो दुःखाय प्रवर्तते । करुणादिषु तु सकलस्यापि साभिनिवेशप्रवृत्तिदर्शनात्सुखमयत्वमेव । ननु कथं दुःखकारणेभ्यः सुखोत्पत्तिरित्याह—ये खलु वनवासादयो लोके दुःखकारणानीत्युच्यन्ते त एव काव्यनाट्यसमर्पिता अलौकिकविभावनव्यापारवत्तया कारणशब्दवाच्यतां विहायालौकिकविभावशब्दवाच्यत्वं भजन्ते । तेभ्यश्च सुरते दन्तघातादिभ्य इव सुखमेव जायते । अतश्च लौकिकशोकहर्षादिकारणेभ्यो लौकिकशोकहर्षादयो जायन्त इति लोक एव प्रतिनियमः । हरिश्चन्द्रादेश्चरितस्य काव्यनाट्ययोः श्रवणदर्शनाभ्यां जायमाना अश्रुपातादयोपि चेतसो हर्षेण गलितप्रायत्वाज्जायन्ते न दुःखात् । अत एव भगवद्भक्तानां भगवद्वर्णनाकर्णनादश्रुपातादय उपपद्यन्ते । न हि तत्र जात्वपि दुःखानुभवोऽस्ति । अयं हि लोकोत्तरस्य काव्यव्यापारस्य महिमा यत्प्रयोज्या अरमणीया अपि शोकादयः पदार्था आह्लादमलौकिकं जनयन्तीति ।



१. शमु आलोचने चुरादिः । तस्य नान्ये मितोऽहेताविति मित्त्वं न ।

## (५) विवक्षातः कारकाणि भवन्ति

किं नाम कारकम्। साधकं निर्वर्तकं कारकसंज्ञम्भवतीति भाष्यम्। अन्वर्थसंज्ञैषा। करोतीति कारकम्। यद्येवमपादानादीनां कारकसंज्ञाया अप्रसङ्गः। कर्तुरेव स व्यपदेशो युक्तः। नैष दोषः। अपादानादीनामपि स्वव्यापारे स्वातन्त्र्यात्कारकत्वम् (कर्तृत्वम्) अस्त्येव। तद्यथा स्थाली पचति, एधाः पचन्तीत्यादि। क्व तर्ह्यपादानत्वादेरवकाशः, यत्र पारतन्त्र्यम्। क्व पारतन्त्र्यम्। यत्र प्रधानेन कर्त्रा सह समवायः। यथा राज्ञा-सह समवायेऽमात्यादीनां पारतन्त्र्यं व्यवाये स्वातन्त्र्यम्। राजाऽमात्यैः प्रजास्तन्त्रयते। अमात्या राजाधिकृता राजानुशिष्टाः प्रजास्तन्त्रयन्ते।

किं कारकं नाम द्रव्यमाहोस्विच्छक्तिरितीदीनां प्रस्तूयते विचारः। नाद्यः कल्पः। स्थाली पचति, स्थाल्यां पचति, स्थाल्या पचतीत्यत्रैकैव स्थाली कर्त्रादिभेदेन भिद्यते। द्रव्यत्वावच्छिन्न एकस्मिन्द्रव्येऽनेकत्वप्रसङ्गो दुर्वारः स्यात्। द्रव्यस्य चैकस्वभावत्वात्कर्मकरणादित्वं नोपपद्यते। तस्मात्कारकं शक्तिः। सा च स्वाश्रयसमवेता। क्रियाप्रवर्तनाय योग्या भवति। यत्तु साधनं वै द्रव्यं न च द्रव्यस्य प्रकर्षापकर्षौ स्त इत्यद्रव्यप्रकर्षव्याख्याने भाष्ये द्रव्यस्य साधनत्वाभिधानं तच्छक्तिशक्तिमतोर्भेदा-विवक्षयेत्यवगन्तव्यम्। यत्तान्यत्र गुणसमुदायः साधनमित्युक्तं तत्प्रधान-क्रियाया एकैकशक्तिनिष्पाद्यत्वाभावात्। गुणक्रियापेक्षया तु प्रत्येकं शक्तेः साधनता व्यवस्थितैव।

सामान्यतः कारकस्वरूपे निरूपितेपि न स्पष्टमवगम्यते किं कारकं वस्तुतन्त्रमुताहो लोकतन्त्रमिति। लोकतन्त्रमिति गृहाण। विवक्षानिघ्नं हि तत्। तथा चोक्तं वाक्यपदीये हरिणा—

> शक्तिमात्रासमूहस्य विश्वस्यानेकधर्मणः।
> सर्वदा सर्वथा भावात्क्वचित्किञ्चिद्विवक्ष्यते॥ इति।

घटं पश्य, घटेनोदकमानय; घट उदकं निधेहीत्यादिः कर्मकरणादि-भावो नियमेनोपपद्यत इति न कारकसाङ्कर्यप्रसङ्गः शङ्क्यः। सर्वत्र सर्व-कारकशक्तिसम्भवे काचिदेव शक्तिः क्वचिदुद्भूता विवक्ष्यते न सर्वा।

यथा च वस्तुनिरूपयामस्तथा व्यपदिशामः। सदपि वस्तु यावद् बुद्ध्या न निरूप्यते न तावच्छब्दानां विषयः। तदुक्तं हरिणा—

साधनव्यवहारश्च बुद्ध्यवस्थानिबन्धनः।
सन्नसन्वार्थरूपेषु भेदो बुद्ध्या प्रकल्प्यते ॥ इति।

स्थाली पचतीति तनुतरकपालत्वात्स्थाली पाकेऽनपेक्षितकर्तृविनियोगा स्वातन्त्र्येण विवक्ष्यते। इन्धनोपकारानपेक्षायां तु तस्याः साधकतमत्वविवक्षायां करणत्वम्। असिश्छिनत्तीत्यसेः करणशक्तिसमन्वितस्यापि च्छिदिक्रियायां सौकर्यविवक्षया कर्त्रन्तरव्यापारानपेक्षायां कर्तृता विवक्ष्यते। न च सन्नेवार्थो बुद्ध्या निरूप्यतेऽपि त्वसन्नपि परिकल्प्यते। तथा ह्येकस्यैवात्मनो भेदपरिकल्पनया कर्तृत्वकर्मत्वे दृश्येते। हन्त्यात्मानमात्मेति। न ह्यात्मव्यतिरिक्तो हन्ता कश्चित्प्रत्यवभासते। काल्पनिकोऽत्र भेदः। तथा च मेषयोरभिघाते कपित्थयोर्भेदे मल्लयोर्युद्धे नाञ्जसा कारकभेदः, बुद्धिपरिकल्पितस्तु स प्रतिपद्यते शब्दव्यवहार्यतां चोपनीयते। मेषो मेषमभिहन्ति। वस्तुत उभावप्यभिहननक्रियायां कर्तारौ सममेव तां निर्वर्तयतः। विवक्षाकृतस्तु कर्तृकर्मकारकभेदः। मेषो मेषादपसर्पतीत्येकस्य कर्तृत्वविवक्षाऽपरस्यापादानत्वविवक्षा। यदा तु मेषावपसर्पतस्तदाऽवध्यन्तरमपेक्षणीयम्। यदा पुनः परस्परस्मान्मेषावपसर्पतस्तदा स्वव्यापारे स्वतन्त्रयोर्मेषयोर्मेषपदोपात्तयोः कर्तृत्वं परस्परपरपदोपात्तयोश्चापादानत्वम्। बीजादङ्कुरो जायत इत्यत्र बुद्ध्या परिकल्पितस्यार्थस्याङ्कुरस्य जनिक्रियायां कर्तृकारकोपगमः। आत्मलाभो वस्तुनः स्वरूपाधिगमो जन्म कथ्यते। तत्र त्रितयमन्वयि—लब्धा कर्ता लभ्यं कर्म लाभश्च क्रिया। एतच्च त्रितयं सद्विषयम्। तत्र सतो जन्मविरोधः। सत आत्मलाभायोगात्। लब्धात्मा हि सन्नुच्यते। यश्चासंस्तस्य कर्तृत्वं दुर्लभम्। इदमत्र समाधानं हेलाराजीयम्। इह सर्वात्मना परिनिष्ठितं जायत इति न व्यपदिश्यते। नापि सर्वात्मनाऽसद्रूपम्। आश्रितपूर्वापरावस्थं सत्तासादनोन्मुखं वस्तु जायते शब्दविषयः। तथा च तत्रोत्तरसद्रूपमवस्थाविशेषं पूर्वावस्थायां कारणानां कार्योन्मुखलक्षणायामुपचर्याङ्कुर इत्यभिधानस्य प्रवृत्तौ जायत इति कर्तृत्वोपपत्तिरिति। बीजादङ्कुरो जायत इत्यत्र बीजं

जायमानस्य प्रकृतिरित्यर्थपरिग्रहेण तस्यापादानतां विवक्षामः । बीजादङ्कुरो जायत इत्यत्र परिणामधर्मपुरस्कारेण भेदापोहेन प्रकृतित्वतिरस्कारेण च तस्यैव कर्तृतामिति सर्वत्र व्यवहारे बुद्धिरेव प्रभवति । यदाऽविवक्षित-भेदं जननव्यापारमभिप्रेमस्तदा मातरपितरौ पुत्रं जनयत इति मातुः पितुश्चोभयोरपि कर्तृत्वम् । यदा कः कथं जनयतीति भेदो विवक्ष्यते तदाऽयं पिताऽस्यां मातरि बीजमाधत्ते पतति वा बीजमस्मादस्यामिति पितुः कर्तृत्वमपादानत्वं च । पतद्बीजधारणक्रियां कुर्वती माता त्वधिकर-णमेव । तथा च शिष्टप्रयोगाः प्रथन्ते । 'ब्राह्मणाद्वैश्यकन्यायामम्बष्ठो नाम जायते ।' (मनु० १०।८), 'द्विजातयः सवर्णास्तु जनयन्त्यव्रतांस्तु यान्' इति च ( मनु० १०।२० ) 'सा भूधराणामधिपेन तस्यां समाधिमत्यामुदपादि भव्ये'ति कुमारे । 'सुदक्षिणायां तनयं ययाचे' इति रघौ । अत्र जनिक्रिया भविष्यन्ती गम्या । 'तज्जायाया जायात्वं यदस्यां जायते पुनरि'ति ब्राह्मण-कृताऽधिकरणे व्युत्पत्तिरपि रूढिगतायां विवक्षायां लिङ्गम् । कर्त्रादीनि लोके प्रतिनियतविषयाणि न क्वचिदवलोक्यन्ते । अचेतनेष्वपि रथो याति नदी वहतीत्यादिषु कर्त्रभिलापो यतः । सर्वत्र प्राधान्यमगुणाभावो वास्त्येव । विवक्ष्यते हि सः ।

यथानिरूपणं शब्दप्रयोग इति शाब्दिकाः । विवक्षा हि प्रयोक्तॄणां यथा यथा प्रवर्तते तथा परिवर्तन्ते कारकाणीत्युक्तप्रायमपि पुरस्तादिह पल्लव-यामो भूयो वैशद्याय । 'तद्गच्छसि पथिदूतयोः' । अत्र तत्स्थेषु गच्छत्सु पन्था गच्छतीत्युच्यते । पन्था हि तत्र मुक्तसंशयमधिकरणम् । तथापि तत्र लौकिकी विवक्षा प्रभवति येन सदप्यधिकरणत्वं न विवक्ष्यतेऽसच्च कर्तृत्वं विवक्ष्यते । एवमन्यत्रापि सतोऽविवक्षा दृश्यते । यथाऽलोमिकैडका, अनु-दरा कन्येति । अत्र लोमानि न सन्तीति न, उदरमेव वा नास्तीति न । असम्भवात् । तथापि तत्सत्ता न विवक्ष्यत इति नञा प्रतिषिध्यते । अभिनिष्क्रामति द्वारम् । द्वारमभिनिष्क्रमणक्रियायां करणं प्रसिद्धं तदिह स्वातन्त्र्येण विवक्ष्यते । 'दाणश्च सा चेच्चतुर्थ्यर्थे' । संप्रपूर्वाद्दाण आत्मने-पदं भवति यदा तस्य चतुर्थ्यर्थे तृतीयया श्रूयते योगः । कदा च चतु-र्थ्यर्थे तृतीयायाः प्रयोगः । यदा सम्प्रदानं साधकतमत्वेन विवक्ष्यते

विवक्षातः कारकाणि भवन्तीति कृत्वा, न तु स्वभावतः। विवक्षा च लौकिकी समाश्रीयते न प्रायोगिकी। 'दिवः कर्म च'। करणे कर्मविवक्षा करणविवक्षा च। इदमत्राकूतं स्यात्प्रयोक्तुः शिष्टस्य। यो ह्यक्षैर्विजिगीषतेऽक्षानप्यसौ विजिगीषते। अविजिता अक्षाः कथं देवने जयाय कल्पेरन्निति स तर्कयते। कर्मणः करणसंज्ञा वक्तव्या सम्प्रदानस्य च कर्मसंज्ञा। इदं दानार्थं यजिमधिकृत्योक्तम्। पशुना रुद्रं यजते। अयं भावः। अत्र पूजातात्पर्यकं दानमिति दीयमानेन पशुनाऽभिपूजयामि रुद्रमित्यभिप्रैति यजमानः, तेन [1]सत्यपि दानक्रिया निगीर्यते पूजनेनाध्यारोपितेन। ततश्च कारकविपर्ययः सिद्धो भवत्यवाचनिकः। इयद्धि प्राभवत्यं विवक्षाया बुद्धिनिबन्धनायाः। 'अधिशीङ्स्थासां कर्म', 'अभिनिविशश्चे'त्यादिषु विवक्षां हेतूकृत्याधिकरणस्य कर्मसंज्ञाविधानं दृश्यते। विशतेस्तु निरुपसर्गस्योपसर्गान्तरसहचरितस्य च प्रयोग उभयी विवक्षा दृश्यते। मधुनि विशन्ति मधुकराः ग्रामं प्रविशतीति। क्वचिद् 'गृहीत इव केशेषु मृत्युना धर्ममाचरेत्', 'आलाने गृह्यते हस्ती वाजी वल्गासु गृह्यत' इत्यादिषु करणेऽधिकरणत्वं विवक्षन्ति लौकिकाः। 'तत्र तेनेदमिति सरूपे' इति तत्र शास्त्रीयं लिङ्गम्। कर्मणोपि कर्तृभावो दृष्टः। 'कर्मवत्कर्मणा तुल्यक्रियः' इत्यत्र तत्प्रतिपत्तेः। कर्मणोऽधिकरणविवक्षा, यथा—'तस्मिन्प्रजह्रुर्युधि सर्व एव', तं प्रजह्रुरित्यर्थः। बलाहके विद्योतते विद्युत्। बलाहकस्यापाययुक्तत्वादपादानसंज्ञा प्राप्नोति। आधारविवक्षायामधिकरणसंज्ञा च भवति। अपादानमुत्तराणीति वार्तिकमत्र लिङ्गम्। क्वचित्सम्प्रदानधियमपोह्याधिकरणमुत्प्रेक्षन्ते कुशलाः प्रयोक्तारः। तद्यथा—

> न्यायेनार्जितमर्थस्य वर्धनं पालनं तथा।
> सत्पात्रे प्रतिपत्तिश्च राजवृत्तं चतुर्विधम्॥

इति कामन्दकः, सममब्राह्मणे दानमिति च मनुः, 'दरिद्रान्भर कौन्तेय मा प्रयच्छेश्वरे धनमि'ति भारते। 'वितरति गुरुः प्राज्ञे विद्यां यथैव तथा जडे' इत्युत्तरे रामचरिते। सर्वत्र चामीषु प्रयोगेषु 'तदस्मिन्वृद्ध्यायलाभशुल्कोपदा दीयते' (पा० ५।१।४७) इति वचः प्रमाणम्।

---

१. सती अपीतिच्छेदः।

लभेर्णिच्यणौ कर्तुः कर्मत्वाकर्मत्वे दृश्यते ते अपि विवक्षयैव व्यवतिष्ठेते । प्रयोज्यकर्तुः कर्मत्वं यथा—इदमौपहारिकमार्यमाणवकं लम्भय । तदभावो यथा—'सितं सितिम्ना सुतरां मुनेर्वपुर्विसारिभिः सौधमिवाथ लम्भयन्' इति । प्राप्तिरेव लभेरर्थः । तथापि सर्वा प्राप्तिर्गतिपूर्विकेवेति प्राप्तिगत्योः कार्यकारणयोरभेदोपचारः । तत्र विवक्षावशाल्लभिः क्वचित्प्राप्त्युपसर्जनां गतिमाह क्वचिद्गत्युपसर्जनां प्राप्तिम् । आर्यमाणवकोऽसंनिहित इहागमनेनौपहारिकं लभते । एवं लभमानं तं प्रयुङ्क्त इति तं लम्भयति । अत्र स्पष्टमेव गतिः प्रधानम् । लब्धुरसंनिधेर्मुख्यां गतिमन्तरेण लब्धेरयोगात् । द्वितीये तूदाहरणे गतिर्नास्त्येव । न हि सितिमा मुनेर्वपुरुपैतीति शक्यते मुख्यया वृत्त्या वक्तुम् । व्यपदेशिवद्भावेन तूपपद्यते प्रयोगः । व्यक्तमत्र प्राप्तिरेव प्रधानमिति विवेकः ।

धातूनामर्थान्तरसङ्क्रमादपि व्यतियन्ति कारकाणि । यथा—सिञ्चतेः क्षरणेऽर्थे द्रवद्रव्यस्य कर्मत्वमार्द्रीकरणे च करणत्वम् । यथा मेघोऽमृतं सिञ्चति, सिञ्चतीवामृतैर्वपुरिति । एवं ददातिकर्मणा सम्बद्धस्य न सर्वत्र सम्प्रदानता । न हि ददातिः सर्वत्र परस्वत्वापादपूर्वके द्रव्यत्यागे वर्तते । 'बाष्पश्च न ददात्येनां द्रष्टुं चित्रगतामपी'त्यत्रानुज्ञाने दृश्यते दीयन्तां पक्षद्वाराणि (विद्धशालभञ्जिकायाम्), कवाटं देहीत्यत्र च पिधानेपि दृश्यते । ते गृहेऽग्निमददुः, घ्नतः पृष्ठं ददाति । पूर्वत्र वाक्ये गृहस्य सम्प्रदानत्वं न । ददातिरिह निक्षेपे वर्तते, तस्य चाधिकरणापेक्षा । अपरत्र हननं कुर्वतोपि तन्न । ददातिरत्र सन्निधापने वर्तते । तत्सम्बन्धापेक्षया घ्नत इति षष्ठी साध्वी । शकि शङ्कायामिति भ्वादिषु पठ्यते धातुः । शङ्का च भयम् । तेनाधर्माच्छङ्कते साधुरित्यपादानताऽधर्मस्य सिद्धा । स एवाङ्पूर्व उत्प्रेक्षायां वर्तते । तत्र कर्मत्वमेवेष्यते यथा धर्मेत्यधर्ममाशङ्कते मूढः । सन्नन्तो गुपिर्निन्दायां पठ्यते । स यदा निन्दापूर्विकायां निवृत्तौ विवक्ष्यते तदा पापाज्जुगुप्सत इत्यपादानता निर्बाधा । यदा तु केवलायां निन्दायां प्रयुक्तिस्तदा कर्मत्वमेवानवद्यं शिष्टजुष्टं प्रसिध्यति । यथा—किं त्वं मामजुगुप्सिष्ठा इति भट्टौ । जुगुप्सेरत्र चाप्येनमिति (१।२६६) याज्ञवल्क्यस्मृतौ । स्वर्गस्त्रोपूर्वनिर्माणं निजमेवाजुगुप्सतेति

कथासरित्सागरे द्वितीये वेताले । जनापवादमात्रेण न जुगुप्सेत चात्मनीति काव्यमीमांसायां कविरहस्ये दशमेऽध्याये । यद्वा तद्वा भवतु । भार्गव-स्तादृशानि तु वीररत्नानि न जात्या जुगुप्सत इति बालरामयणे द्वितीये-ऽङ्के । प्रपूर्वो हरतिराहनने वर्तते । यदा चायं प्रासनेऽभिप्रेयते तदेन्द्राय वज्रं प्राहरदिति तैत्तिरीयब्राह्मणप्रयोगे 'क्रियया यमभिप्रैति सोपि सम्प्रदान-मि'ति वचनेनेन्द्रस्य सम्प्रदानता सूपपादा । 'क्रियार्थोपपदस्य च कर्मणि स्थानिन'इति वा विभक्तिः समर्थनीया । 'यजतिर्देवपूजासंगतिकरणदानेषु' पठितः, देवान्यजत इत्यादि । यज्ञाहरणेपि वर्तते, अश्वमेधेन यजते तत्र विशेषाकाङ्क्षायामाश्वमेधे द्रव्यबुद्धिं विधाय करणत्वेन तत्परिग्रहो व्याख्येयः । अश्वमेधबुद्ध्या द्वारीभूतयेति वा नेयम् । जयतिः परो-पसृष्टोऽभिभवे वर्तते । तथा चारीन्पराजयत इत्यादौ कर्मकारकमुपपद्यते । यदा चासहने प्रयुज्यते तदाऽसोढोऽर्थोऽपादानम् । अध्ययनात्पराजयते प्रमत्तश्छात्रः ।

क्वचित्कारकमात्रस्याविवक्षा, सम्बन्धस्य चैव विवक्षा । यथा मातुः स्मरतीति । अत्र मातृसम्बन्धि स्नेहादिकं स्मरतीत्यर्थः । यदा कश्चिन्मातृ-विश्लेषदुःखमश्नुवानः शिशुमपरं वाऽम्बया सस्नेहातिरेकं लाल्यमानं सदयं वाऽवेद्यमाणमालोकते तदा मय्यप्यम्बैवमाचरदिति भवति तस्य मातुः स्मरणम् । अन्यदा चाकृत्या संवादिनीं योषां रथ्यया यन्तीं [1]निशाम्य सादृश्यप्रत्ययेन प्रतिबुद्धसंस्कारो मातरमेव स्मरति साक्षात्, मातृमूर्त्तिरे-वास्योपतिष्ठते चेतसि, तदा भवत्येव कर्मकारकस्यावकाशः । एवमन्यत्रा-पि । शुकनासस्यापि मनोरमायां तनयो जातः । अन्यत्र जनकस्य कर्तृत्वे-ऽपादानत्वे वा सत्यप्यत्र तदविवक्षायां कस्येत्याकाङ्क्षायां शेषे षष्ठी ।

व्यायामक्षुण्णगात्रस्य पद्भ्यामुद्वर्तितस्य च ।
व्याधयो नोपसर्पन्ति वैनतेयमिवोरगाः ॥

इति काशिकायामुद्धारे व्याधयो व्यायामक्षुण्णगात्रस्य पुरुषस्य सान्नि-ध्यमपि नाधिगच्छन्ति संस्पर्शनं तु दूरापेतम् इति विवक्षया शेषे षष्ठी । तुरीये तु चरणे कर्मत्वविवक्षातो द्वितीया । प्रभ्वादीनां योगे षष्ठी चतुर्थी

१ दृष्ट्वा । शमेश्चौरादिकात्स्वार्थे रूपम् । नान्ये मितोऽहेताविति मित्वाभावः ।

च दृश्येते इत्यल्पमुक्तं दीक्षितेनेतीहैवोपरिष्टाद् व्यक्तिं यास्यति । तत्रालमर्थे चतुर्थी, स्वाम्येऽधिकारे वा षष्ठीति विवेकः । प्रभवति मल्लो मल्लायेति चतुर्थ्योः, प्रभवति स्वस्य कन्यकाजनस्य महाराज इत्यत्र स्वाम्ये षष्ठ्या दर्शनात् । विधिरपि न येभ्यः प्रभवतीति भर्तृहरिप्रयोगे त्वलमर्थता कथंचित्समर्थनीया । स्वाम्ये सप्तम्यपि दृश्यते । प्रभवन्त्योपि हि भर्तृषु कारणकोपा मनस्विन्य इति मालविकायाम् । सूत्रेषु च स्वाम्ये सप्तम्या लिङ्गमस्ति । तथा हि सूत्रकारः पपाठ—'स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्चे'ति । स्वाम्यादिशब्दयोगे सप्तमीमनुशासत्सूत्रकारो न प्रतिषेधति तां समानार्थकेन शब्दान्तरेण युक्ते । आतोऽनुत्सूत्र एष सप्तमीप्रयोगः कवेः । फलानां सुहित इति करणस्य शेषविवक्षया षष्ठी । शेषविवक्षैव च नियता सुहितार्थयोगे करणस्येत्याहुरिति कामसूत्रटीकायां जगद्धरः । "पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेने"ति करणस्य शेषविवक्षायां लिङ्गमप्यस्ति । तेन "अग्निस्तृप्यति नो काष्ठैर्नापगाभिः पयोदधिरि"ति क्वाचित्कः पाठ आगन्तुकोऽसम्प्रदायः । वेदेपि करणाविवक्षायां षष्ठी दृश्यते—अनुकामं तर्पयेथामिन्द्रावरुण राय आ ( ऋग्० १।१७।३ ) । इति ।

> अहरहर्नयमानो गामश्वं पुरुषं पशुम् ।
> वैवस्वतो न तृप्यति सुराया इव दुर्मदः ॥

इति वसिष्ठधर्मसूत्रे ।

> "चिरस्य दृष्ट्वा दाशार्हं राजानः सर्व एव ते ।
> अमृतस्येव नातृप्यन्प्रेक्षमाणा जनार्दनम् ॥"

इत्युद्योगपर्वणि ( ६४।५१॥ ) । "अपां हि तृप्ताय न वारिधारा स्वादुः सुगन्धिः स्वदते तुषारे"ति सन्दृभवञ्छ्रीहर्षोऽप्यत्रानुकूलः । माघस्तु "अथवा श्रेयसि केन तृप्यत" इति करणमवज्ञायाधिकरणत्वमाद्रियते । तदस्य स्वातन्त्र्यमिति किमु तत्र वक्तव्यम् ।

विवक्षया कर्तृकर्मादिव्यवहारः सर्व इति प्रसाधितं पुरस्तान्निदर्शिताश्च ते ते प्रदेशा यथाविवक्षमुपप्लवमानानां[1] कारकाणाम् । तथापीद-

---

१. भिद्यमानानाम् ।

मत्रावधेयम् । न हि प्रयोक्त्रा निरवग्रहं यथा तथा शक्यं विवक्षितुम् । नेह तस्य स्वच्छन्दः प्रवर्तते । विवक्षा हि कुलवधूरिव न लौकिकीं प्रयोगमर्यादामतिक्रामति । विवक्षायाश्च नियतत्वात्सत्यप्यपाये धनुषा विध्यतीति भवति, न धनुषो विध्यतीति । व्यधनक्रियायां धनुष्करणं न, अपि तु निःसरतां शराणामेव करणत्वमिति [1]प्रथमवैयाकरणानामपि न न विदितम् । तथापि परमार्थं निरूपयंस्तथा च प्रयुञ्जानो लोके द्वेष्यतां याति । कंसपात्र्यां भुङ्क्ते इत्येव प्रयोगो न तु कंसपात्र्या इति । कंसपात्र्या उद्धृत्यैव त्वोदनं भुङ्क्ते । तेन तस्या अपादानता सिद्धा । तामविवक्षित्वाऽधिकरणतैवाभ्युपेयते । अपादानविवक्षया पञ्चमीं प्रयुञ्जानो बाढं भवत्यपिशब्दभाक् । अन्यत्रापि विवक्षानैयत्यं दृश्यते । गतिवचनानां धातूनां प्रयोगे यानस्य करणत्वमेव विवक्ष्यते न जातुचिदधिकरणत्वम् । रथेन यातीत्युच्यते न तु रथे यातीति । यद्यपि रथोऽधिकरणशक्तिरिति नापह्नूयते । यानशब्दो हि करणसाधनः । अपरे यानपर्यायवाचिनोपि करणतां न जहति । तथा चात्मनः पदं विमानेन विगाह्मान इति रघुकारस्य प्रयोगः । अष्टाध्याय्यां तत्र तत्र तल्लिङ्गोपलम्भ इमां प्रयोगपद्धतिं समर्थयते । 'वह्यं करणम्' । वहत्यनेनेति वह्यं वाहनम् । करणे यत्प्रत्ययान्तं निपात्यते । 'दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे' इत्यनेन च पत्लृधातोः करणे ष्ट्रणा[2] पत्त्रमिति व्युत्पाद्यते । पतति गच्छत्यनेनेति पत्त्रं वाहनम् । यानमात्रस्य करणत्वमैकान्तिकमिति 'चरति' (४।४।८) इति शासनमपि द्रढीयो मानम् । हस्तिना चरति हास्तिकः, शकटेन चरति शाकटिकः । यो गत्यर्थधातूनधिकृत्योक्तो [3]नियामस्तस्य[4] वह्यादयो धात्वादयश्च गमनीया[5] भवन्ति । किञ्च न केवलं मुख्यं यानमपि तूपचरितयानभावा अपि भावाः करणत्वेन व्यवह्रियन्ते न च व्यभिचारं सहन्ते ।

---

१. अचिरोपसम्पन्नोऽचिरादेव गुरुमुपश्लिष्टो वैयाकरणो व्याकरणस्याध्येता प्रथमवैयाकरण इत्युच्यते । तत्र प्रथमोऽचिरोपसम्पत्ताविति स्वरसूत्रं प्रमाणम् । २. ष्ट्रन् प्रत्ययः । णत्वं सांहितिकम् । ३. नियमः । समुपनिविषु चेति पाक्षिको घञ् । ४. कृत्यानां कर्तरि वेति कर्तृयंयुक्ते षष्ठी । ५. प्राप्या प्राह्या इत्यर्थः । गोचरीकृता इति यावत् ।

स श्वानं स्कन्धेनोवाह (हितोपदेशे), स्कन्धेन भारं वहतीत्यत्र स्कन्धे स्थानत्वाध्यारोपेण करणत्वमेवाभिप्रयन्ति न कदाचिदधिकरणत्वम्। तेन स्कन्धे भारं वहतीत्यपप्रयोगः। अत्रार्थे कवीनां प्रयोगा उपोद्बलाः केचिन्निदर्श्यन्ते । "यश्चाप्सरोविभ्रममण्डनानां सम्पादयित्रीं शिखरैर्बिभर्ति" (धातुमत्ताम्), "मध्येन सा वेदिविलग्नमध्या वलित्रयं चारु बभार बाला", "तथेति शेषामिव भर्तुराज्ञामादाय मूर्ध्ना मदनः प्रतस्थे", "गामधास्यत्कथं नागो मृणालमृदुभिः फणै"रिति च कुमारे। "गुणानुरागेण शिरोभिरुह्यते नराधिपैर्माल्यमिवास्य शासनमि"ति किराते। अत्रोदाहरणेषु गतिर्वा प्रापणं वा नार्थो, येन करणस्यावकाशः स्यात्। धारणमेव तु सर्वत्राभिप्रेयते। तेनाधिकरणत्वं प्राप्नोति। करणं चेह नितान्तमसत्। अधिकरणं च परमार्थसत्। तथापि करणत्वमेव विवक्षन्ति शिष्टा इति न बह्वन्वाख्येयम्।

अन्यत्रापि विवक्षानियमो दृश्यते। "रश्मिष्विवादाय नगेन्द्रसक्तां निवर्तयामास नृपस्य दृष्टिमि"ति रघुकारः। "गृहीत इव केशेषु मृत्युना धर्ममाचरेत्", केशेषु जग्राह याज्ञसेनीं दुःशासनः, शिरस्युपजिघ्रत्यम्बा डिम्भम्, कण्ठे गृह्णाति प्रियां कान्त इत्यत्र केशशिरःकण्ठस्याधिकरणता लोके नियता। अन्यथा सम्भाव्यविभक्त्यन्तरं प्रयुञ्जानो जनो भ्रंशते व्यवहारवर्तन्या[1] अक्षिगतश्च[2] लोकस्य भवति। तेन यथान्यत्र समुदाचारो रक्षणीयः, श्रौती स्मार्ती वा व्यवस्थितिरास्थेया तथा वाङ्मयेऽपि लोकप्रतिष्ठितः शिष्टजुष्टो व्यवहारः सततं शीलनीयः साभिनिवेशं चानुसर्तव्यः। येन दैव्येषा वागशक्तैरभिधातृभिर्व्यवकीर्णा मा स्म भूदिति शम्॥

कारकाणि विवक्षात इति राद्धान्त ईरितः।
वंशे व्याकृतिवैद्यानां[3] सोऽद्य वैशद्यमापितः॥
निदर्शनोपपत्तिभ्यां स्थूणाखनननीतितः।
अक्षुण्णां सृतिमाश्रित्य भूयो भूयः समर्थितः॥

---

१. वर्तनी पद्धतिः। २. द्वेष्यः। ३. विदुषाम्। विद्यामधीते वेद वेति वैद्य इति व्युत्पत्तेः। भिषग्व्यतिरिक्तविद्वत्परतयाऽपि सुलभा अस्य रामायणादिषु प्रयोगाः।

इयं नो व्याक्रिया भूयाद्विनोदाय विजानताम्।
बोधाय च विनेयानां शास्त्रार्थं निश्चिचीषताम्॥

## ( ६ ) करोतिना सर्वधात्वर्थानुवादः क्रियते

अनेकार्था धातव इति वैयाकरणाः प्रतिपन्नाः। धातुपारायणेऽर्थनिर्देशः प्रकारपरतया कृतो नार्थपरिगणनाय। तत्रैको मुख्योऽर्थो गौणान्यर्थान्तराणीति नावश्यं व्यवतिष्ठते। अथतेरेकोनत्रिंशतावर्थेषु गुणप्रधानभावकल्पना शास्त्रपारीणेनापि विदुषा न शक्या समर्थयितुम्। अनिर्दिष्टेष्वर्थेषु प्रवृत्ता धातवः क्रियासामान्यादेव क्रियान्तरे वर्तन्त इत्यपि प्रायिकम्। क्वचित्प्रयोजनवशादुपचारः समाश्रीयते नाम। उपचर्यमाणा हि धातवः किमपि [illegible]नीयकं भजन्ते। उन्मीलति चक्षुरिति मुख्यार्थे प्रयोगो न तथा स्वदते यथा 'उन्मीलन्ति वेदना'इति भाक्तः। सर्वथानेकार्थता' धातूनां नापलापमर्हति। वपतिर्बीजसन्ताने पठितः, लवनेपि वर्तते केशान्वपतीति। दिशतिरतिसर्जने पठित उच्चारणेपि वर्तते सन्दिशति वाचम् इति। शंसु स्तुताविति पठितः शंसतिर्हिंसायामपि दृश्यते नृन्शंसति हिनस्तीति नृशंस इति व्युत्पत्तेः। इयं चानेकार्थता नापरिच्छिन्ना। न हि सर्वो धातुरनेकार्थो न चैकः सर्वार्थः। कश्चिदेव निर्दिष्टार्थमतिरिच्य प्रवृत्तो दृष्टः। अल्पीयांसस्तर्ह्यनेकार्थतायाः प्रदेशाः। तदेतत्करोतिव्यतिरिक्तधातुविषयं न करोति क्रोडीकरोति। करोतेस्तु वाचामगोचरो महिमा। सर्वे सर्वार्थवाचकाः ( शब्दाः ) इति यदाचार्याः संगिरन्ते तत्करोतिविषये सुतरामवितथं प्रत्यक्षमुपलब्धेः। करोतिर्हि सर्वं धात्वन्तरवाच्यमर्थमभिधातुमीष्टे। तत्रेयमुपपत्तिः—

करोतिर्हि क्रियासामान्यवाची शब्दः क्रियाविशेषं धात्वन्तरवाच्यमभिधातुम्। यथा लिङ्गसर्वनाम नपुंसकम् एवं क्रियासर्वनाम करोतिः। भिन्नानि लिङ्गानि नपुंसकेनैकेन समाख्यायन्ते। यथा—न तच्छास्त्रं न

---

१. तत्र 'तनूकरणे तक्ष' इति सूत्रं लिङ्गम्। 'वेः पादविहरणे' इति च।

तच्छिल्पं न सा विद्या न सा कला । न तत्कर्म न योगे वा नाटके यन्न दृश्यते ।। इत्यत्र यच्छब्देन नपुंसकेनानपुंसकानामभिधानम् । देवदत्तः पठति यज्ञदत्तः शृणोति विष्णुमित्रो व्याख्याति तत्रागन्तुकः कश्चिदनुयुङ्क्ते किमिमे कुर्वन्तीति । अत्र करोतिना पठतिशृणोतिव्याख्यातीनामनुवादः क्रियते । इदं हि वस्तुस्वाभाव्यं यत् सामान्येन विशेषाभिधानं विशेषेण वा सामान्याभिधानम् । चरतिर्गमनसामान्ये पठितोऽर्जनपूर्वके गमनेपि वर्तते भिक्षां चरतीति, अर्जयंश्चरतीत्यर्थः । वदतिर्व्यक्तायां वाचि पठितो भासनोपाधिकायामपि तस्यां दृश्यते वदते शास्त्रे वादीति । विपरीतोपि क्रमो लक्ष्यते—मत्रि गुप्तपरिभाषणे इति पठितः परिभाषणमात्रेपि वर्तते, किं मन्त्रयसे मित्र । शंसु स्तुताविति विशिष्टे कीर्तने पठितः शंसतिः कीर्तनमात्रेपि वर्तते, सुतजन्म शंसति नृपायेति यथा । वद व्यक्तायां वाचीति पठितो वदतिरव्यक्तायामपि दृश्यते वदति वीणेति । शप आक्रोशे इति पठितः शपतिः करोत्यर्थेपि वर्तते यथा 'वसिष्ठश्चापि शपथं शेपे पैजवने नृपे' ( मनु० ८।११० ) इत्यत्र ।

करोतिना सामान्यार्थकेन यथा विशेषाभिधानं भवति तथा दिङ्मात्रमिह दर्शयामः । 'वितरति गुरुः प्राज्ञे विद्यां यथैव तथा जडे, न च खलु तयोर्ज्ञाने शक्तिं करोत्यपहन्ति वे'ति भवभूतिपद्ये करोतिरभूतप्रादुर्भावे । अत्र करोतिरुत्पादयतिना समानार्थः । एवमेव भयं करोतीत्यत्र । आदिकर्मण्यपि वर्तते—चक्रे शोभयितुं पुरीमित्यत्र रामायणे ( २।७।१० ) यथा । काष्ठं भस्म करोति, स्वर्णं कुण्डलं करोति । अत्र कृञ् विकरणे वर्तते । 'कुरु पदानि घनोरु शनैः, शनैः, करिष्यसि पदं पुनराश्रमेस्मिन्' शनैः शनैः श्यामिकया कृतं पदम् । आकृतिविशेषेष्वादरः पदं करोतीत्यादिषु करोतिर्निक्षेपणार्थमाह । अश्मानमितः कुरु । करोतिरत्र स्थापने वर्तते । दशम्यामुत्थाय पिता नाम करोतीत्यत्र गृह्ये करोति' प्रयोगे निर्देशे वा वर्तते । एवं ह्येष व्यवहार उपागतो रूढिं यदत्र लोको धात्वन्तरप्रयोगं न मृष्यति । 'ब्राह्मणः प्रणवं कुर्यादादावन्ते च सर्वदे'ति मनुवाक्ये करोतिरुच्चारणे वर्तते । मन्त्रादौ मन्त्रान्ते चोङ्कारमुच्चारयेदिति तदर्थः । पदं मिथ्या कारयते । अत्र 'मिथ्योपपदात्कृञोऽभ्यास' इत्यात्मनेपदम् । अस-

कृदुच्चारयतीति चार्थः । 'शब्ददर्दुरं करोती'त्यत्र पाणिनीयेऽनुशासने करोतिः प्रकृतिप्रत्ययादिविभागेन ज्ञाने वर्तते । शब्दं करोति प्रकृतिप्रत्ययादिविभागेन जानातीति शाब्दिकः । 'कलापिवैशम्पायनान्तेवासिभ्यश्चे'ति सूत्रव्याख्याने प्रत्यक्षकारिणो गृह्यन्ते न तु शिष्यशिष्या इति वृत्तिकारः । अत्र करोतिरध्ययने वर्तत इति पदमञ्जरी । ऋषयश्चक्रिरे धर्मं योनूचानः स नो महानिति ( मनुः ) । अत्र करोतिर्व्यवस्थापने वर्तत इति मेधातिथिः । विचर्चिकातः कुरु, पादौ कुरु । अत्र करोती रोगापनयने उन्मर्दने च यथासंख्यं वर्तत इति भाष्ये स्पष्टम् । उदकं करोति पितृभ्य इत्यस्य पितृभ्यः सलिलं निवपतीत्यर्थः । तथा च गीतासु प्रयोगः—पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रिया इति । पतितस्योदकं कार्यं सपिण्डैर्बान्धवैर्बहिरिति च मनौ ( ११।१८२ ) । कृतोदक उपयुक्तजल आचान्तः स्नातश्चोच्यते । अत्र करोतिरुपयोगे वर्तते ।

कृञो द्वितीयतृतीयशम्बबीजात्कृषाविति सूत्रे करोतिः कर्षणे वर्तते । बीजाकरोति क्षेत्रम् । बीजावापेन सह कृषति क्षेत्रमित्यर्थः । तथा च मनुसंहितायां याज्ञवल्क्यस्मृतौ च प्रयोगाः—अकृतं च कृतात्क्षेत्रात् (१०।११४ ॥ ), फालाहतमपि क्षेत्रं न कुर्याद्यो न कारयेत् ( २।१५८ ॥ ) इति । पदकार इत्यत्र करोतिरवग्रहे वर्तते । पदान्यवगृह्णाति छिनत्तीति तद्व्युत्पत्तेः । स्तम्बशकृतोरिन् इत्यत्रानुवृत्तः कृञ् विसर्गे वर्तते । शकृत्करिर्वत्सः, शकृद्विसृजतीत्यर्थः । एवमेव मूत्रपुरीषे करोतीति मनुप्रयोगे । आज्ञां करोति, वचनं करोतीत्यादिषु कृञनुवृत्तौ वर्तते । दारान्कुर्वीत सिद्धये, कृतदारः, दारकर्म, दारक्रियेत्यादिषु करोतिः परिग्रहणे स्वकरणे वर्तते । शूलात्पाक इत्यनेन निष्पन्ने शूलाकरोति मांसमिति प्रयोगे करोतिः पचने वर्तते । तथा च कृताकृतास्तण्डुलाः, कृतान्नम् , अकृतान्नमितिप्रभृतयः प्रयोगाः प्रथन्ते । समयाच्च यापनायामिति डाचं शास्ति करोतिना योगे, करोतिं च यापनया समानार्थमाचष्टे । समया करोति, कालं यापयतीति यावत् । प्राप्तमवसरमतिक्रमयन्नेवमुच्यते । समापनेपि वर्तते । तथा च श्रीरामायणे प्रयोगः—एवं त्वं पुत्रशोकेन राजन्कालं करिष्यसीति । मरिष्यसीत्यर्थः । भारतसंहितायामपि यापने प्रयोगः—चक्रुस्तेनाभ्यनुज्ञाता दशवर्षाणि पञ्च

चेति । प्रतीक्षणेऽपि वर्तते—करोतु क्षणं मदर्थे, क्षणं कुर्वित्यत्र । सत्यादशपथ इत्यत्र सत्यं करोति ब्राह्मण इति प्रत्युदाह्रियते । व्यक्तमत्र करोतिः शपत इत्यनर्थान्तरम् । क्वचित्करोतिरभिमर्शने वर्तते न च प्रशब्दं द्योतकमपेक्षते । तद्यथा—अभिषह्य तु यः कन्यां कुर्याद् दर्पेण मानव इति स्मृतिः ( मनु. ८।३६७।। ) । मानितः कुरुतेऽन्यानि शक्रसद्मानि भारत इत्यत्र भारते (वन० १६२।२७), चकाराङ्गिरसां श्रेष्ठाद् धनुर्वेदं गुरोस्तदेत्यत्र ( शा० २।५ ), यां विद्यां कुरुते गुरावित्यत्रापस्तम्बे (१।७।१२) च करोतिः शिक्षणे विद्योपादाने वर्तते । तन्मूलामतिमहतीं कथामकरोत् (दशकु० पृ० १७३) इत्यत्र करोतिराख्याने वर्तते । तिङन्तान्कृञः प्रयोगान्रसवत्तमेनोदाहरणेन पर्यवसाययामः । नखान्करोति, कृन्तति, कल्पयतीति तदर्थः । परःसहस्रसंवत्सरात्ययेऽप्यप्येवं भूयो लोकवाचेतीयमेवास्य रसवत्ता ।

भूयांसो हृदयङ्गमाः कृत्प्रयोगाः कृञोऽनेकार्थतां ब्रुवते । अनवसरोऽध[1] तद्व्याख्यानस्य कालान्तरे तद्भवितेति व्याक्षेपो विषह्यः । तथाप्येकद्वान्प्रयोगानप्रदर्श्य न विरन्तुमीश्महे, अपरितोषात् । कर्मशब्दो व्यायामेऽपि वर्तते इत्यत्र कर्मवेषाद्यत् इति सूत्रं लिङ्गम् । तत्र कर्मणा सम्पादि शोभि शरीरं कर्मण्यमिति वृत्तिः । कर्मव्यायाम इति च पदमञ्जरी । चिकित्सापि कर्मोच्यते । दंशच्छेदः पूर्वकर्मेति श्रूयत इति मालविकाग्निमित्रे । कर्माध्ययने वृत्तमिति सूत्रे कर्मशब्दोऽपचारपर इति पदमञ्जरी । स्तेयमपि कर्म भण्यते । तथा च कृत्वा शरीरपरिणाहसुखप्रवेशं शिक्षाबलेन च बलेन च कर्ममार्गमिति चारुदत्ते प्रयोगः । कारा बन्धनालयो भवति । क्रियते बध्यते लोकोऽत्रेति व्युत्पत्तेः । षिद्भिदादिभ्योऽङ् इति सूत्रे कारा बन्धन इति गणसूत्रम् । स्पष्टं करोतिरत्र बन्धने वर्तते । यथा चाञ्जलिं करोतीत्यत्र । मणिकारो वैकटिक इत्यत्र करोतिः परीक्षायां वर्तते । कर्मण्याक्रोशे कृञः खमुञ्—अत्र करोतिरुच्चारणे वर्तते । चोरङ्कारमाक्रोशति । चोरशब्दमुच्चार्येत्यर्थः । करणमृणं प्रमाणयँल्लेखो भवति । स दत्त्वा निर्जितां वृद्धिं करणं परिवर्तयेद् इत्यत्र मानवे धर्मशास्त्रे (८।१५४) यथा । कृत्याशब्दः क्यबन्तो धातुशब्दगतमर्थमाह । तथा हि—तानि कृत्याहतानीव विनश्यन्ति

---

1. अयं निबन्धो लवपुरस्थे सरस्वतीसमाजे ज्येष्ठमासभवे तदुपवेशने वाचितः ।

समन्तत इति मनुवचनम्। कारिका यातनाकृत्योरिति प्रायेणामरे पाठः। क्वचित्कारिका यातनावृत्त्योरिति पठ्यते। तथा च कारिके वृत्तियातने इति स्वामिधृतं दुर्गवचनमप्यनुकूलम्। कारिका विवरणश्लोकः। एवमिह करोतिर्व्याख्याने वर्तत इति नात्र शङ्काशूकोऽपि। णिजधिकः करोतिः शिक्षणे वर्तते। तथा चामरः—कारितशिक्षिते[1] इति। स्याद्‌ चण्डो तु सुकरेत्यमरे सुकरा सुखेन विनेयेत्यनर्थान्तरम्। तेन व्यक्तंकरोतिरत्र विनयने वर्तते। क्रियाशब्दोऽमरेण नवस्वर्थेषु पठितः—

आरम्भो निष्कृतिः शिक्षा पूजनं सम्प्रधारणम्।
उपायः कर्म चेष्टा च चिकित्सा च नव क्रियाः॥ इति।

अत्र क्रमेणोदाहरणानि—आरम्भे तावत्—सर्वाः क्रिया मन्त्रमूला नृपाणाम्। निष्कृतौ—महापातकिनां पुंसां भवेत्प्राणान्तिका क्रिया। शिक्षायाम्—क्रिया हि द्रव्यं विनयति नाद्रव्यमिति कौटिल्यः, क्रिया हि वस्तूपहिता प्रसीदतीति कालिदासश्च। विद्यायामपि दृश्यते—शिष्टा क्रिया कस्यचिदात्मसंस्थेति मालविकायाम्। पूजने—अग्निक्रिया। सम्प्रधारणे (विचारे)—क्रियां विना को हि जानाति कृत्यम्। उपाये—सामादिकाः क्रियाः। चेष्टायाम्—स्तम्भे निष्क्रियो जन्तुः प्रलये गतचेतनः। चिकित्सायाम्—पुनर्ज्वरे समुत्पन्ने क्रिया पूर्वज्वरानुगा। अर्थान्तरेपि दृश्यते। आह च गर्भाधानादिसंस्कारेपि वर्तत इति। स गुरुर्यः क्रियां कृत्वा वेदमस्मै प्रयच्छति। और्ध्वदेहिकेपि प्रयुज्यते—अतो न रोदितव्यं हि क्रियाः कार्याः प्रयत्नत इति॥

करोतेर्व्याक्रियां नूत्नां निर्मितां स्वमनीषया।
अर्पयित्वेश्वरे प्रह्वः प्रमना विरमाम्यहम्॥
सतोऽत्र प्रार्थये गुण्यान्गुणगृह्यान्विमत्सरान्।
सानुग्रहं प्रवृत्तास्ते विमृशन्तु क्रियामिमाम्॥



१. कारितशिक्यिते-इत्यमरे पाठान्तरम्।

## ( ७ ) एकत्ववादेन व्यवहारोपपत्तिः

सर्वस्य लोकव्यवहारस्यानवयवेन[1] विपर्यासकः समुत्सादकश्च ब्रह्मात्मैक्यवाद इति लौकिकानां प्रायोवादः। वयं तु प्रतिपद्यामहेऽयुक्तोऽयमुपालम्भः। अवीथ्यां चित्रमिवैतत्कल्पनामात्रमिति। न हि कचिदप्यनतीतव्यवहारावस्थितिकानां साविद्यकानां कृते कर्मसु मा स्म प्रवृततेति[2] प्रतिषेधवचनं समस्ति। [3]आश्चर्याश्चेहाविर्भूतपरप्रकाशा गुणातीता ब्रह्मात्मैक्यानुभूतिमश्नुवानाः। तानेव भगवत उद्दिश्य, किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोक इति प्रथते श्रुतिः। मा स्म कुरुत कर्माणि शान्तिर्वः श्रेयसीति मस्करिणां[4] चानुशिष्टिः। श्रीशङ्करभगवत्पादा अपि न यस्मै कस्मै चित्कर्मविराममुपदिशन्ति। एवं हि ते निराहुः—अलङ्कारो ह्ययमस्माकं यद् ब्रह्मात्मावगतौ सत्यां सर्वकर्तव्यताहानिः कृतकृत्यता चेति। अत्र ब्रह्मात्मावगतिपूर्विका सर्वकर्तव्यताहानिरुक्ता न त्वविशेषेण यस्यां कस्याञ्चिदवस्थायाम्। ब्रह्मात्मावगत्यां च सत्यां समाप्तकामत्वान्नास्य कर्मभिः कार्यमिति हीयन्तेमूनि। कृतं मया कृत्यं प्राप्तं प्रापणीयमिति परः परितोषश्च प्रसूयते। अथ लोकसंग्रहार्थं तत्रापि प्रवर्तेत, नैक्यवादो विरुन्धे। इममेवार्थं भूयो वेदान्ता वेदयन्ति विश्वासदार्ढ्याय—

> आत्मानं चेद्विजानीयादयमस्मीति पूरुषः।
> किमिच्छन्कस्य कामाय शरीरमनुसंज्वरेत्॥
>
> ( इति बृहदारण्यके )

> एतद् बुद्ध्वा बुद्धिमान् स्यात्कृतकृत्यश्च भारत।
>
> ( इति गीतासु )

तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिन इति शुकानुप्रश्ने भारते। अत्र सर्वत्र नाप्रबुद्धाधिकारीति कस्मान्न्वध्यवसितं केनाप्यैकात्म्यवादो वैदिकस्य लौकिकस्य च कर्मकलापस्य समुत्सादेन सर्वान्सेतून्[5] निर्भिनत्सतीति।

---

१. कार्त्स्न्येन। २. धृताधिकाराश्छुन्दयध्। ३. विरलाः। ४. परिव्राजकानाम्। ५. मर्यादाः।

एवं गलितदेहाभिमानानां सूपपन्नापि कर्मणो विरतिर्नतरामुपपद्यते तद्भिमानवतामिति न चोद्यते[1] तैर्थिकैः[2]।

एकत्ववादः खलु यथा व्यवस्थापयत्युपपादयति च लोकव्यवहारं न तथेतरत्किञ्चित्। नयकोविदास्तावदात्मौपम्यदृष्टिमुपदिश्य भुवनभावुकं[3] भावयितुमीहन्ते[4]। यथा चोदाहरन्ति—

श्रूयतां धर्मसर्वस्वं श्रुत्वा चैवावधार्यताम्।
आत्मनः प्रतिकूलानि परेषां न समाचरेत्॥ इति।

अन्यत्र च भारते युधिष्ठिरं प्रति बृहस्पतेः—

प्रत्याख्याने च दाने च सुखदुःखे प्रियाप्रिये।
आत्मौपम्येन पुरुषः प्रमाणमधिगच्छति॥

इत्युक्तिः। विदुरोप्याह—

न तत्परस्य सन्दध्यात्प्रतिकूलं यदात्मनः। इति।

अयं चौपम्यवादोऽनात्मवादिनः सुगतस्यापि संमतः, तथा ह्याह—

यथा अहं तथा एते यथा एते तथा अहम्।
अत्तानं उपमं कत्वा न हनेय्यं न घातये॥

(इति सुत्तनिपाते)

न केवलमेतद्देशजा अभ्युपयन्ति प्ररोचयन्ति चात्मौपम्यं बाह्याः प्रतीच्या अपीत्यहो हृदयङ्गमत्वमस्य। तथा हि ख्रिस्तस्यापीदमभिमतम्। एवं हि स भवाननुशशास—आत्मवत्प्रतिवेशिनि वर्तस्वेति। सत्यमियमात्मौपम्यदृष्टिर्बहूपकरोति लोकस्येति सञ्चितं तद्वादिनां यशः। आत्मौपम्येन वर्तमानो जनो नापरात्स्यति परस्मा इत्यवितथम्। आत्मनो हतिमकामयमानो नैषिष्यति परं हन्तुम्। स्वस्य द्युम्नस्यापहारमपद्विषन्न परकीयमात्मनाऽपहरिष्यति। वृद्धौ परसाचिव्य[5]मपेक्षमाणः स्वयमपि तस्याचरिष्यतीत्येवं साधीयो निर्वहयति लोकयात्रा। सर्वत्र मैत्रीसमुन्मेषात्करुणाजागरणाच्च शमिष्यति वैरम्, विश्रमिष्यति विरोधः दलिष्यति[6]

1. विधीयते, अनुशिष्यते। 2. शास्त्रकारैः। 3. जगतः कल्याणम्। 4. साधयितुम्। 5. साहाय्यम्। 6. दल विशरण इत्यकर्मकोपि। तथा च भवभूतिप्रयोगः—अपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयमिति।

[1]दरः, [2]वत्स्यंत्यादरः, दरिद्रिष्यति दारिद्र्यम्, विग्लास्यत्यामयः । किं बहुना । ह्रसिष्यत्यशर्म, बृंहिष्यति प्रेम, अभ्युदेष्यति स्थेमेत्यतिभूमिमानन्दस्याधिरोक्ष्यति लोकः ।

अत्र कश्चिच्छङ्कते—ननु यन्नाम ममानुकूलं तदेव परस्य, यच्च प्रतिकूलं तत्तस्यापि तथैवेति कथमियमनुमा प्रमा स्यात् । दृश्यते हि लोके-यदेकस्य प्रियं तदपरस्य विप्रियमिति । आभणन्ति चाङ्गला यदेकस्यामिषं तदन्यस्य विषमिति । तथा हि हितमुपदिश्यमानमभिरोचयति सुधीः, तदेवात्यर्थं विद्वेष्टि मूढधीः । उपदेशो हि मूर्खाणां प्रकोपाय न शान्तय इति च नीतिविदां डिण्डिमः । इदं चेह विमृश्य शान्तस्य समाहितस्य विरक्तस्य मानभङ्गो न मर्मस्पृग्भवतीति किमेतावताऽसमाहितस्यापि स दुःखाय नेत्यनुमेयं भवति । विवेकिनो जनकादीन् मिथिलादिदाहोऽपि न दुःखाकरोतीति किमन्येऽपि स्वस्य[3] दाहेन न दुःखायिष्यत[4] इति शक्यं कल्पयितुम् । सुरापाणं[5] हृद्यं[6] सुरापस्येति किमपरानप्यसौ सुरां पाययित्वा प्रियाकुर्यात् । किञ्च । आत्मोपमस्तु वर्तमानः शठः सर्वत्र शाठ्यमुत्प्रेक्षमाणो मायाचारे सुलभां युक्तिमुपलभमानोऽत्याहितमाचरिष्यति सतोपीति चेत्—अस्थाने शङ्कितं ते । रुचिवैचित्र्यमेवात्थ । नैतावतौपम्यदृष्टिरुपदिष्टा दुष्टा भवति । परत्र[7] व्यवहारप्रमातृत्वात्तस्याः । व्यामुग्धस्य विभ्रान्तस्य विक्षिप्तस्य वा व्यसनिनोऽपि शठस्यापि वा यथात्मा प्रियस्तथैव यदि परेषु वर्तेत सः, न हानये कल्पेत । व्यामुग्धोऽपि नेच्छति हिंसितुमात्मानमिति कुतः पराञ्जिहिंसिषेत् । शठोऽप्यात्मनि विप्रियं न सहते इति कया युक्त्याऽपरत्रातिसन्धानमाचरेत् । कामं शीधुनि[8] प्रसक्तः सुतरां तत्र रमतेऽन्यांश्च रमयितुमिच्छेत् तथाप्यनिच्छतस्तत् पाययितुं नार्हेत् । यथा ह्यस्येच्छाविघातः प्रतिकूलाऽनिष्टप्रवर्तना चानिष्टा तथैवेतरेषामित्यात्मौपम्यं वारयति । आत्मानमुपमानं कृत्वाऽन्योऽपि चेदन्यस्यापकर्तुं न क्षमते कैव कथा सम्यग्दर्शनोपपन्नेषु भगवत्सु जनकप्रभृतिषु । ते हि निष्कारण-

---

१. त्रासः । २. वर्धिष्यते । ३. द्रविणस्य । ४. कर्तृवेदनायां क्यङ् । ५. वा भावकरणयोरिति णत्वम् । ६. हृदयस्य प्रियम् । ७. व्यवस्यन्तरे । ८. शीधुशब्दः पुंसि नपुंसके च ।

सुहृदोऽस्य लोकस्य शोकाकुलस्य । वयं तु विश्वसिमो मौहम्मदं मतं 'सर्वे-महदिति । मह[2]यन्नपि लोकाभ्युदयिकमिति[3] चाभिमन्यमानोपि सञ्जाडवर-ञ्जीव आत्मौपम्येन चेद् व्यवाहरिष्यन्न बलादाय्यैर्ग्राहयिष्यदेतदिति । एवं चात्मनः प्रतिकूलानि परेषां न समाचरेदित्यव्यभिचारि वचः ।

अस्मिन्नात्मौपम्यदर्शने तदाश्रिते च व्यवहारे ब्रह्मात्मनोरैक्यमात्मनां चार्थादापन्नमनानात्वमेव बीजम् । न ह्यस्योपपत्त्यन्तरमन्यत्र ब्रह्मात्मैक्य-वादात् सर्वं खल्विदं ब्रह्म, तत्त्वमसि श्वेतकेतो इति हि परमार्थः । तत उपपद्यत एव यथाहमात्मनि वर्त्ते तथा परेषु परत्वेनाभासमानेष्वपि वर्ते-येति । वास्तवे नानात्वे तु सादृश्यबुद्धिरुपदिष्टा मृषा स्यात्तन्निबन्धनश्च व्यवहारो न हितः स्यात् । अयमेवार्थो भङ्ग्यन्तरेण मनुनाऽपि प्रतिपा-दितः । तथा ह्येकत्वमुर्रासक्त्यैवाधर्माचरणाद्विरन्तुमर्हति देहीति स्मरति भगवान्—

सर्वमात्मनि संपश्येत्सच्चासच्च समाहितः ।
सर्वं ह्यात्मनि संपश्यन्नाधर्मे कुरुते मनः ।। इति ।

इष्टापूर्ते धर्म इति शास्त्राणि संवदन्ति न च विवदन्ते । यथा चैका-त्म्यवाद एव तत्रोपपत्तिः केवला तथा भूयसे निर्वचनाय किञ्चिद् ब्रूमः । कूपारामतटाकादीनि मया लोकसुखाय निर्मेयानि । दरिद्राति मे प्रति-वेशी स मयोद्धरणीय इति शास्त्रं विधत्ते । कया रीत्येदं मत्कर्तव्यतामि-यर्तीति न बुद्धिमुपारोहति । कथमहमविषह्यवेदनया क्रोशन्तमनक्रोशेयम्[4] । कथं वा क्षुत्क्षामं भोजयेयम् । अनावृतकलेवरं शीतार्तं वा प्रावृत्य सुखये-यम् । प्रमीतपितृकस्यासाधनस्य च्छात्रस्योपकुर्यामिति न बुद्ध्युपग्राह्यं भवति । परम्परी[5]णमपि विधानं युक्तिविरहादपेशलमिति नानुष्ठेयं भवति प्रेक्षापूर्वकारिणाम् । तस्य तस्य विधुरस्यानुग्रहाय मयेदं विधेयमिति तु स्वप्रकर्षपरं परापकर्षपिशुनमिति नितान्तमरुच्यम् । नक्तन्दिवमभियुञ्जा-नेन विगलत्स्वेदकायेन विविधं व्यथमानेन यन्मयार्जितं तदहमन्यस्य

---

१. सर्वेभ्यो महत्तरम् । २. पूजयन् । मह पूजायां चुरादिरदन्तः । ३. लोक-कस्य आभ्युदयिकम् । अभ्युदयः प्रयोजनमस्येति । ४. दयेय । ५. परम्परामनु-भवतीति परम्परीणं पारम्पर्यागतम् ।

यस्य कस्यचित्कृते कथं विनियुञ्जीय। मदीयं मदर्थं च तद्धनं न जनकीयं[1] भवति। अन्योहमन्ये च ते। सम्प्रत्युपकृताः कालान्तरे प्रत्युपकरिष्यन्ति तवेत्येवमपि व्याख्यायमान उपकारो न मत्कर्तव्यतामापद्यते। एवं प्ररोचितोऽप्यहमुपकुर्यां न वोपकुर्याम्। न तत्र मे कामचारबाधः। प्रत्याशया चानुष्ठीयमान उपकारः पण्यविनिमयान्नातिभिन्नोऽपणाय्यो[2] भवति। एवं स्थिते शास्त्रेणानुशिष्यमाणो लोकेन चाद्रियमाण उपकार उपपत्तिमपेक्षते न च लभते। ऐकात्म्यस्वीकार एव तस्योपपत्तिः। यद्यहं परं दुर्गतमुद्धरामि, आत्मानमेवोद्धरे। परं चेदनुगृह्णामि, आत्मानमेवानुगृह्णे। परस्य साचिव्यं चेत्करोमि, आत्मन एव साचिव्यं कुर्वे। इत्थं च शास्त्रविधिरुपपन्नो भवति। परेण केनापि कर्तव्यभारोऽयं मयि न्यस्तोपीति नेदानीं क्लिश्यते चेतः। सर्वोपक्रियात्मोपक्रियेति सिद्धेऽजस्रं जागरिष्यत्युपचिकीर्षा मयि। नात्र शास्त्रचोदनामपेक्षिष्ये नोत प्रयुक्तिं लौकिकीम्।

अर्वाग्दृशः किल भवेत्कृत एष गम्यो
                मादृग्जनस्य सुतरां विषयो गभीरः।
बुद्धिप्रसक्तिविषयेऽनुसृताऽनुरक्तिः
                शास्त्रे तथाप्यजनि मे विवृतौ सहाया॥
आशास्यं विवृतिरियं विपश्चितां मे
                संवृद्ध्यै प्रचितधियां सदा मुदां स्यात्।
संभित्त्यै जगति मुधा भिदामलं स्यात्
                सन्तत्यै जननिवहस्य कर्मणां स्यात्॥



१. जनस्येदं जनकीयम्। जनपरयोः कुक् चेति वक्तः कुगागमश्च। २. पणायतेः स्वार्थकाण्ण्यति नञि च रूपम्।

## (८) का नाम हिन्दुता, कथं चेयमुपकरोति लोकस्य ?

हिन्दुता नामेह भरतभुवि कालपर्ययेण लब्धोदयानां विचारविकल्पानां समन्वय इत्यभ्युपगमो विपश्चिताम्। रुचिवैचित्र्यात्प्रातिस्विक[1]प्रतिपत्तिसामर्थ्यानुरोधाच्च येन केनचिदिष्टेन मार्गेण प्रस्थातुमभ्यनुज्ञायन्ते स्म लोकाः। उक्तं च वैयासिक्यां संहितायाम्—

वेदा विभिन्नाः स्मृतयो विभिन्ना नैको ऋषिर्यस्य मतं न भिन्नम्।
धर्मस्य तत्त्वं निहितं गुहायां महाजनो येन गतः स पन्थाः॥ इति।

हिन्दवो हि सर्वं मतद्वैधं सहन्ते। अत्रैकत्र मते स्थितो यथा वाक्कर्मणोः स्वातन्त्र्यं भजते तथैव मतान्तरे स्थितः। नैतावतैकस्यापरोऽक्षिगतो भवति। एकत्र मते मतसमुदये वाऽकुर्वाणः प्रत्ययं न जातु हन्ति 'परस्तान्न चावस्तात्[2][3]। यथा जैमिनीयस्याभ्युपगतो मोक्षोऽप्रतिहतस्तथैव काणादस्य तथैव च कापिलस्यानीश्वरस्य। यथा प्रणतैर्भक्तिसुलभः परमेश्वरस्तथा पातञ्जलैश्चित्तवृत्तिनिरोधेनापि। यथाऽव्यक्तप्रध्यानेन सिद्धिः कामिता भवति तथा व्यक्तार्चनयापि। न खलु मतविशेषाङ्गीकारानङ्गीकारान्वायत्तौ स्वःप्राप्तिनिरयपातौ। न हि केवलं मतविशेषमार्षं श्रद्दधानः कृती भवति। यावन्न विहितं धर्ममासेवते[4] न तावद् धार्मिक इति समाख्यां लभते। न च क्वापि कर्मणाऽसहचरितं मतमेव समाद्रियमाणो जनोभिष्टुतश्शास्त्रेण। हिन्दुषु धर्मस्यैव प्राथम्यं सर्वकालमासीन्न मतस्य। अतस्ते मतविसंवादविषयिणीमसहिष्णुतां बलवज्जगर्हिरे। एवन्तर्हि यदा मतधर्मयोर्गुणप्रधानभावः प्रतिपद्येत, निराक्रिया च मतविशेषस्यानुज्ञायेत, कामचारो वा तदुपेक्षायामनुमन्येत, तदाऽसहिष्णुताऽनवकाशा सती विलयं यायात्। न हि मतभेदस्य हेतोः कलहायेत लोकः, अन्योन्यं वा सम्प्रहरेत, प्रतिपक्षशोणितेन वा पाणी शोणयेत। योऽयं रुधिरपातो धर्ममुद्दिश्य चिरायाभूद्भवति चेदानीं येन चेतिहासपत्राणि दिग्धलोहितानि स मत-

---

१. प्रतिस्वं यथास्वं भवं प्रातिस्विकम्। २. परलोके। तथा च हर्षचरिते प्रयोगः—निहन्त्येव परस्तात्। ३. इहलोके। ४. पुनः पुनः सेवते। धर्मं चरतीति धार्मिकः। तत्र चरतिरासेवायां वर्तत इति वृत्तिः।

प्राधान्यमनुबध्नाति न कारणान्तरम् । तस्माद्यदीच्छन्ति भवन्तो विविध-मतानुगाः सुखमविरोधेन च सुभ्रातर इव संवसेयुः, एवञ्जातीयका जन-निकायाश्च[1] न मिथो वैरायेरन्, धार्मिकाभिमताः श्रद्धालवोऽधार्मिकोत्प्रेक्षि-तानश्रद्धांश्च चोरघातं हन्युस्तर्ह्यविलम्बितमपनेयं मिथ्यारोपितं गौरवं मतस्य, प्रबोधनीया च ग्रामे ग्रामे निगमे [2]निगमे च जनता, 'धर्मः प्रधानं मतमप्रधानमि'ति ।

विधान्तरेणापि हिन्दवः सत्यपि मतद्वैधेऽसहिष्णुत्वं स्म वारयन्ते । ऐकात्म्यमिदं सर्वम् , नेह नानास्ति किञ्चनेति ते प्रतिपेदिरे । एक एव न आत्मा, नानात्वं तु देहनिबन्धनम् । देहा भिद्यन्ते न देही । तथा हि वाज-सनेयिन आमनन्ति—

यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति ।
सर्वभूतेषु चात्मानं ततो न विजुगुप्सते ॥ इति ।

यः परः स द्वेष्यो भवति । अहमन्यमाहन्या[3]मित्युद्यन्नेव विलीयते भावः । कथङ्कारमात्मानमाघ्नीय[4] । कथमहमन्यस्मिन्व्यलीकं[5] कुर्याम् अलीकं तदन्यत्वं वास्तवम् चैकत्वम् । न जातुचित्कुतश्चिद् बिभीयाम् । पर-स्माद्धि भयं भवति । मम च परो नास्ति । सर्वो देही ममात्मनोऽव्यतिरिक्त इति । एवं दृढभूमिं गते सर्वात्मताविश्वासे सर्वसत्त्वानामहिंसनीयताऽ-र्थादापद्यते । न खलु कश्चनार्य्यः क्षोदिष्ठमपि जन्तुं हन्तुमीष्टे । एकात्मत्वं हि वारयति । एवं चाहिंसा परमो धर्म इति फलितम् । आचर्यमाण एष धर्मः सर्वत्र भुवि भावुकं भावयेत्कलिं विकलयेच्छमं च प्रतिष्ठापयेत् ।

सन्तोषमूलं सुखं दुःखमूलं विपर्यय इति च हिन्दुतां व्यश्नुते[6] भावः । तृष्णां छिन्धि, जहि कामं विरक्तिमापादयेत्युपदिशन्ति तन्त्रकाराः, न चात्र विपदन्ते । इदं चानुशासति गृहिणापि स्वार्थं तमीहमानेनात्यन्तमपेक्षि-तमेवोपार्जनीयं यदन्तरा लोकयात्रा नार्हति निर्वोढुम् । न खलु तेन तृष्णावल्ली वर्धनीया । अपेक्षितातिरिक्तमुपार्जयन्तो वयं शतशो जनान-पेक्षिततमैरर्थैर्विना कुर्मः । तावदेव हि जगति संविधीयते विधात्रा याव-

---

१. जननिवहाः । २. पत्तने । ३. पराङ्गकर्मकत्वात्परस्मैपदम् । ४. स्वाङ्गकर्म-कत्वाद् आङो यमहन इत्यात्मनेपदम् । ५. अपराधम् । ६. व्याप्नोति ।

च्छरीरस्थित्यर्थं नितान्तमपेक्षामह इत्यार्य्याग्रेसरः श्रीगान्धी। न च तृष्णावृद्धिरौपकारिकी[1]। न हि सर्वे कामाः समृध्यन्ति। बहव उत्पद्य च्यवन्ते। यत्ननैरन्तर्य्येणाप्याराध्यमाना न समे समृध्यन्ति। असमृद्धाश्च दुन्वन्ति मनो ग्लपयन्ति च। ग्लानं च मनो न समश्नुते सुखम्। तं तं काममनुधावतः स्वशक्तिमतिक्रम्य च नक्तन्दिवं प्रयस्यतोऽस्य हीयते कायः क्षीयते चेन्द्रियग्रामः परिप्लवते[2] चेतो दुःखायते चेत्यहो अनर्थः। न चोपभोगेनैव परिणंस्यन्ति कामाः शमिष्यन्ति वेति वाच्यम्। विपरीतफलदर्शनात्। स्मरति च मनुः—

> न जातु कामः कामानामुपभोगेन शाम्यति।
> हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते॥ इति।

एवं च तृष्णाच्छेद एवैकान्तिकमात्यन्तिकं च सुखमिति स्थितम्।

अनियन्त्रितं वर्धमानासु तृष्णासु लोकः परकीयमर्थमभिध्यायेदिति नातिचित्रम्। एकदेशमधिवसन्ती जनताऽन्यत्र वर्तमानामास्कन्देत्कदर्थयेद्वेति न विस्मयनीयम्। तृष्णासंवृद्धिश्च न केवलं दुःखा परिणतिविरसा च। इयं हि पातित्यजननी। आचारवन्तमपि दूषयति। दृश्यते हि तृष्णातुरो जनः समर्थतरानधिकृतान्वोपतिष्ठासुरनिशमाहिण्डमानः[3]। एकस्य स्तुत्याऽपरस्य निन्दया चाटूक्तिभिश्चाधिकाधिकं लिप्समानः सर्वथा मानाद्धीयते। अभिजातमनभिजातं वा समुद्धतमनुद्धतं वा सर्वं समर्थं इत्येवोपतिष्ठते[4]। निकृतो[5] निराकृतो[6]ऽपि वा न तत्प्रतीहारं[7] जहाति।

छिन्नप्रायतृष्णेन परिच्छिन्नर्द्धिना गृहिणा विरक्तिरप्येषणीया। एतदर्थं तेन पुत्रेषु निक्षिप्य कार्यभारं स्वयं वनं प्रस्थानीयं विविक्तं च स्थानीयम्। सम्प्रति तेन हन्तव्यौ रागद्वेषौ। प्रस्मरणीयाः[8] पूर्वे प्रतिगोचरा द्वेषगोचराश्च। विच्छेत्तव्याः स्नेहबन्धा अर्थबन्धाश्च। यथा स्वीयेषु तथा स्वेषु[9] सर्वथोदासितव्यम्। ऐकात्म्यमिदं सर्वमिति सम्यग्ज्ञातुमनुभूतिविषयतां वोपनेतुं निरन्तरं यतनीयम्। अलङ्कारो ह्ययं हिन्दुताया यदुतात्र भरत-

---

१. उपकारः प्रयोजनमस्या इति। २. चञ्चलतां याति क्षुभ्यतीत्यर्थः। ३. हिडि गत्यनादरयोरिति भ्वादिरात्मनेपदी। ४. वा लिप्सायामिति वाऽऽत्मनेपदम्। ५. तिरस्कृतः। ६. निरस्तः। ७. द्वारम्। ८. विस्मरणीयाः। ९. द्रव्येषु।

खण्डे भुवः परिवृढा अपि पश्चिमे वयसि वर्तमाना विरक्तिं चक्रमिरे। जनकोटिष्वस्खलितशासना निग्रहानुग्रहयोः प्रभवः प्रजानां योगक्षेमस्य प्रतिभुवोऽगण्यवैभवा अपरिमेयपरिच्छदाः सम्राजश्चिरं प्रजाः प्रजाः स्वा इव तन्त्रयित्वा सुखशतानि च भुक्त्वा विरक्तिकामा वनिनो बभूवुः। सर्वं ¹स्वापतेयमहिरिव निर्मोकं विहाय तूलमिवेषीकायाश्चात्मानं सर्वस्मादिष्टजनात्पृथक् चक्रुः। इत्थं पितापुत्रयोर्विग्रहैरिह खपुष्पायितम्। न ह्यत्र पुत्रेणावनिपस्य पितुर्बन्ध एषणीयः, न वाऽस्य बलादवरोपणं राजासनात्, न च निर्वासनं देशान्न चापि च्छद्मवधः। महन्नामोपकृतं लोकव्यवस्थितेर्वैराग्येण।

व्यक्त्युपकारकं वैराग्यं प्रकारान्तरेणापि बलवदुपकरोति समष्टेः। वनौकसो हि तपोभिरात्मानं सेधयित्वा² नैःस्पृह्यस्य परां कोटिमधिरूढाः समलोष्टाश्मकाञ्चना निर्ममा निरहङ्काराः समा मानापमानयोर्लोकसंग्रहमानं चिकीर्षवो राज्यतन्त्रस्यानल्पमुपचक्रुः। राजपारिषदतां गता अक्षदर्शकतां³ वा प्राप्तास्तेऽकुतोभयाः साध्वपश्यन् हितं च समाचरन्। समं सर्वेषु निर्बाधमवर्तन्त। न तेषां राजसम्भावना राजावमानना वा प्रयोजिकाऽभूत्। अवधूतरागद्वेषास्ते नाक्षमन्तान्याय्यमाचरितुम्। येषामयमात्माऽयं लोकस्तेऽनर्हा एकत्र पक्षपातिनो भवितुम्। अपरिग्रहा अनपेक्षास्ते राजप्रभावे प्रचण्डजनकोपे वा सुतरामनादराः। इदं तर्हि व्यक्तं वीतरागेणाविर्भूतज्योतिषाऽऽरण्यकेन यथोपक्रियते लोकस्य न तथा प्रयोजनवता मतिमता संसारिणा नरेण। इदं च व्यक्ततरं यावदेषा सन्तोषवैराग्ययोरनुशिष्टिरार्याणां नोरीक्रियते लोकेन तावत्कुतः सुखं कुतस्तरां च शमिति।

हिन्दुतायाः कीदृक् सामान्यं रूपं कियच्चास्य गौरवं का चैतत्कृता लोकोपकृतिरिति पूर्वमेवावोचाम निरदिक्षाम चादसीये विषूची⁴ सहिष्णुतौदार्ये। प्रातिस्विकं किमपि लक्षणं शक्यमास्थातुमुत नेतीदानीं

---

१. धनम्। २. सिद्धं ज्ञानविशेषसम्पन्नं कल्पयित्वा। सिध्यतिरत्र पारलौकिके वर्तते तेनात्वं न।। ३. अक्षदर्शको व्यवहाराणां द्रष्टा। तस्य भावस्तत्ता, ताम्। ४. सर्वत्र व्यापके।

प्रस्तूयते विचारः । अत्र केचित्प्रत्यवतिष्ठन्ते—यन्नामौदार्यं गुण इति जोघुष्यते तदेव लक्षणं वारयति, या च महता कण्ठेन स्तूयते सहिष्णुता सापि प्रतिषेधति लक्ष्यतां हिन्दुतायाः । यद्यत्र सर्वं मतद्वैधं सह्यं तर्हि नैकः कश्चिदत्र व्यवसितः[1] कृतान्तः । कामं सर्वत्राकुञ्जोभावः साङ्कर्यं वा स्यात् । तेन सर्वं वा हिन्दुत्वं स्यात् किमपि वा नेति प्रसङ्गः । स्थाने खल्वाशङ्क्यते दुर्लक्ष्याऽलक्ष्या वा हिन्दुतेति । सत्यं चिरन्तनोऽयमाक्षेपः । यैर्विपश्चिद्भिर्हिन्दुता लिलक्षयिषिता न च पारिता लक्षयितुं ते हिन्दुताहृदयस्या[2]संविदानास्तत्र प्रावर्तन्त, भेदभूम्ना च व्यमोह्यन्त, इत्थं चातर्कयन्त—तैस्तैर्विशेषैर्बेभिद्यमाना आ कुमार्या आ हिमवत इमं भरतखण्डमायसन्तो[3] जनौघाः कथं हिन्दव इति व्यपदेशमेकमर्हन्ति । शफरभोजना विशिखा वङ्गा अपि हिन्दुतां नातियान्ति । मातुलसुतामुद्वहन्तो दाक्षिणात्या अपि तां नातिक्रामन्ति । मद्यमांसाशिनोऽनार्यसम्पर्कादूषितंमन्याः काश्मीरका अपि नेतां व्यभिचरन्ति । अगम्यां गच्छन्तः सर्वथाऽवैदिकीं वर्तनीमनुप्रवृत्ता वामा अपीमां नातिवर्तन्ते । म्लेच्छैः संव्यवहरन्त स्तदाकल्पास्तदाचाराः कायशौचविकलाः परे पञ्चाला अप्येनां नातिलङ्घन्ते । तत् किन्तु नाम यत्सूत्रमिव मणीन्सर्वानिमान्प्रवयेत्[4], समानाभिलापांश्च[5] कल्पयेत्, हिन्दुधर्मिणश्च[6] प्रसाधयेदिति । तान् प्रतीदमुच्यते—अनवसरोऽत्र व्यामोहस्यानवकाशश्च साङ्कर्यस्य । अस्ति हिन्दुताया लक्षणम् । आचारप्रधाना विचारोपसर्जना वर्णाश्रमवती पद्धतिः हिन्दुता नाम, सर्वमितरदहिन्दु । यो हि वर्णान्नाभ्युपैति, तद्विहितं कृत्यकलापं च नानुतिष्ठति, आश्रमान्वा न प्रत्येति न चानुसरति सोऽहिन्दुः । यश्च वर्णेष्वन्तःपतति, आश्रमे चैकतमस्मिंस्तिष्ठति स हिन्दुरिति व्यपदेशं भजति । अनाश्रमी न तिष्ठेदित्यामनन्ति शास्त्रकाराः । न चात्र लक्षणेऽसम्भवदोषः । नाप्यव्याप्त्यतिव्याप्ती । इदं हि हिन्दुव्यपदेशभाजः सर्वान्क्रोडीकरोति । न चाप्यदस्तद्व्यपदेशविरहितान् मुहम्मदीयान्

१. निश्चितः । २. शेषे षष्ठी । संविदेरकर्मकात्वलटः शानच् । ३. आङ्पूर्वस्य वसतेराधारः कर्म । ४. प्रोतान्कुर्यात् । ५. समाननामधेयान् । ६. धर्मशीलत्वर्गान्ताश्चेतीनिः ।

ख्रिस्तीयान्पारसीकान्वाऽतिव्याप्नोति । तेन सत्यप्याचारभेदे, भिद्यमाने वा जातिसमये, विद्यमाने च वेषविशेषे, सति वा शौचतारतम्ये यत्र यत्र वर्णव्यवस्थितिराश्रमव्यवस्थितिश्च तत्र तत्र हिन्दुताया अनुगम इति सर्वमनवद्यम् ।

हिन्दवोऽधुना चातुर्वर्ण्यमनुविदधते आर्यास्तु पूर्वे त्रैवर्ण्यमेव मेनिर इति केचित् । तथा हि शूद्रस्य वर्णचतुर्थस्यानार्यताऽऽर्यव्यतिरिक्तता वाऽऽम्नायिकेषु मन्त्रेषु कल्पसूत्रेषु च तत्र तत्र दन्ध्वन्यते । 'प्रियं मा कृणु देवेषु प्रियं राजसु मा कृणु । प्रियं सर्वस्य पश्यत उत शूद्र उतार्ये ॥' (अथर्व० १९-६२-१) इति आथर्वणिकाः । आर्याधिष्ठिताः शूद्राः संस्कारकर्तारः स्युरिति चापस्तम्बः । अपरे वर्णद्वयीमेव ते प्रतिपन्ना इत्यातिष्ठन्ते । तथा चार्या गौराः ( सिताः ) दासा दस्यवो वाऽसिता इति सितासितवर्णभेदनिबन्धन एवादावभूदेष जातिविभागः । दाशतये 'यो दासं वर्णमधरं गुहा कः ( ऋ० २।१२।४ ), हत्वी दस्यून्प्रार्यं वर्णमावत्' ( ऋ० ३।३४।९ ) इत्यादिषु दासेन दस्युना वाऽऽर्येण च वर्णशब्दस्यान्वयदर्शनात् । तथा हि गौरः शुच्याचारः पिङ्गलः कपिलकेश इत्येतानभ्यन्तरान्ब्राह्मण्ये गुणान्कुर्वन्तीति भाष्यकृदुक्तिरप्यत्रानुकूला । कृष्णवर्णो विप्रो गौरश्च शूद्रश्च उभावप्यनवदातयोनी इति विसृमरो लोकवादोप्येतमर्थमुपस्तभ्नाति[1] । इतरे पुनर्गुणकर्मभेदेन व्यवसायविशेषानुरोधेन वा तदानीन्तनो लोकविभाग इति प्रतिजानते, योनिप्राधान्यं तु कालान्तरोद्भावीति दृढं मन्वते काठकं चोदाहरन्ति—

> किं ब्राह्मणस्य पितरं किमु पृच्छसि मातरम् ।
> श्रुतं चेदस्मिन्वेद्यं स पिता स पितामहः ॥ इति ।

इह निर्दिष्टस्य कारणकलापस्य सर्वस्य विभागहेतुता वा स्यात्, यस्य कस्यैकस्य वेति विवेच्यमप्यप्रसक्तेर्न विविच्यते । विश्वामित्रप्रभृतीनां तपोमहिम्ना वर्णान्तरसङ्क्रमोपि पुरानुजज्ञे, गच्छता कालेन च तत्र सङ्कोच इति केचन । तदप्रकृतानुपयोगीति नेह वितन्यते ।

---

१. अत्र केचित् षत्वं कुर्वन्ति, उपष्टम्नातीति च पठन्ति । तत्प्रमादजम् । अविधानात् ।

वर्णानामुत्तमो ब्राह्मणः, गुरुर्विप्रो द्विजातीनाम्, शुश्रूवांसो ब्राह्मणा भूमिदेवा इत्यादीनि वचांसि ब्राह्मणस्य श्रैष्ठ्यमुद्घोषयन्ति। यत्सत्यं चित्रेयं सृष्टिर्ब्राह्मणो नाम। किं नाम ब्राह्मण्यं कथं चैतदुपकरोति लोकस्येति स्तोकमालोचयामः। द्विविधो हि ब्राह्मणो यायावरः शालीनश्च। यः शिलोञ्छेन जीवति, गृहं च नो निर्मोति, याहि[1]याहीति याति स भवान्यायावरः। भारते वर्षे न केवलं क्वचित्क्वचित् केचन यायावरा अभूवन्, यायावरकुलान्यप्यप्रथन्त। राजशेखरो महाकविर्न केवलं यायावरोऽपि च यायावरीयोऽभूत्। काव्यमीमांसायां तत्र तत्र स्वं मतं निर्दिशन्निति यायावरीय इति सबहुमानमपदेश[2]मात्मन उदाहरति। येपि तत्रभवन्तोऽभ्यागारिकाः[3] शालीनास्तेपि सन्तोषधना धान्यादिनिचयं नारोचयन्त। कुसूलधान्यको वा स्यात् कुम्भीधान्यक एव वा। त्र्यहैहिको वापि भवेदश्वस्तनिक एव वा॥ इति मानवीमनुशिष्टिंश्चान्द्रियन्त। यात्रामात्रप्रसिद्ध्यर्थं प्रयतनीयं विप्रेण, तत्रापि कायक्लेशोऽतिवेलः[4] परिहरणीय इति च शासनं बहुमन्यन्त। किं न स्मर्यतेऽर्थशास्त्रस्य प्रणेता, नन्दकुलस्य पातयिता, मौर्यस्य चन्द्रगुप्तस्योद्भावयिता,[5] राक्षसस्यामात्यस्य न्यग्भावयिता, प्रतिभासितसकलपदार्थः सहस्रघृणातिशायिधामा[6] सोऽहार्यनिश्चयः शंसितव्रतश्चाणक्यः। एष उपाध्यायः संनिहितेऽमिते वैभवे कर्तुमकर्तुमन्यथा कर्तुं च प्रभवन्नपि, सर्वं राजकीयममितैश्वर्यमधीशानोपि, प्रकृतीनां रागविरागयोः[7]पर्याप्नुवन्नपि, सर्वमैहिकमर्थजातं तृणाय मन्यमानोऽत्यन्तमलोलुपोऽगृह्यमाणकारणः स्वाध्यायप्रवचनयोरभिरतोऽकिञ्चनः कालं निनाय। नायममात्योचिते महासद्मनि वसतिं चकार। एवं हि तं वर्णयति विस्मयमाणो[8] विशाखदत्तः कविः—'अहो राजाधिराजमन्त्रिणो विभूतिः। तथा हि—

---

१. क्रियासमभिव्याहारे लोट्। २. अपदेशो व्यपदेशः कुलम्। यथा मन्दापदेशा (=हीनाभिजना) इति वात्स्यायनीये कामसूत्रे प्रयोगः। ३. कुटुम्बव्यापृताः। ४. भृशः। ५. उन्नमयिता। ६. अतितपनतेजाः। ७. समर्थोपि। ८. विस्मयमानः।

"उपलशकलमेतद् भेदकं गोमयानां
बटुभिरुपहृतानां बर्हिषां स्तोम एषः ।
शरणमपि समिद्भिः शुष्यमाणाभिराभि-
र्विनमितपटलान्तं दृश्यते जीर्णकुड्यम् ॥" इति ।

इह मान्यो मेगास्थनीज इत्याख्यो यवनदूतोपि विप्रांस्तादात्विकानुद्दिश्य स्माह—'एते हिरण्यं न कामयन्ते मृत्योश्च न शङ्कन्त' इति ।

पुराऽविच्छिन्नसम्प्रदायानि सततमुपचीयमानागमानि शरण्यानि बभूवुर्ब्राह्मणकुलानि, येषां षडङ्गवेदाध्ययनं निष्कारणो धर्मः, येषां भवो लोकाभ्युदयाय, येषां करणं[1] परोपकरणं, यानि शब्दाह्वयं ज्योतिः प्रकाशयन्ति,[2] ज्ञानाञ्जनशलाकया जनानां नेत्रे समुन्मीलयन्ति, सारासारविवेचनया चोपकुर्वन्ति, निरीहाण्यप्रतिग्रहरुचीनि, ललाटन्तपतपनद्युतीनि भृत्यासनङ्गीकृत्य स्वेच्छया लोकाभिविनयप्रवृत्तानि चिरं विरराजिरे । इमे भगवन्तो द्विजन्मानो नित्यमग्निहोत्रं जुषमाणा दिशो विदिशश्च पात्रभूतच्छात्रप्राप्तिं धातारं प्रार्थयन्त । एष हि तेषां होममन्त्रः—

"यथाऽऽपः प्रवता यन्ति यथा मासा अहर्जरम् ।
एवं मां ब्रह्मचारिणो धातरायन्तु सर्वतः स्वाहा ॥" इति ।

येषां कल्याणमतीनां भृतकाध्यापको भृतकाध्यापितश्चोभावपि हव्यकव्ययोर्वर्जनीयावभूतां, येषां राजान्नं तेज आदत्त इत्यग्राह्यमभूत्, येषां च योनूचानः स नो महानित्यासीदास्था, येष्वायत्तो लोकस्याचारग्रहोऽभिविनयश्च विद्यासु, तेषां कया गिरोऽभिष्टुतिः स्यात्, कथं वा गुरूपकृतेर्निष्कृतिः[3] स्यात् । एते शिष्टा लोकस्याचार्यकं[4] कुर्वाणाः स्वयं प्रयताचाराः[5] सत्यवद्या[6] बभूवुरिति जाबालस्य सत्यकामस्योपनिषन्निबद्ध उदन्त उदीरयति । न सत्यादगा इति हारिद्रुमतो गौतमस्य वचनमत्र प्रख्यापना तेषां

---

१. शरीरम् । २. प्रकाशयन्ति, समुन्मीलयन्ति, उपकुर्वन्तीत्यत्र शत्रा निर्देशो बोध्यः । ३. निर्यातनम्, प्रत्युपकरणमिति यावत् । ४. आचार्यकर्म । शिक्षणम् । ५ पूताचाराः । ६. वदः सुपि क्यप् चेति चकाराद्यति सत्यवद्यम् (=सत्यवचनम्) इति रूपम् । ततोऽर्श आदित्वादच् ।

वाप्यभीष्टस्य । शपथविषये यन्मनुराह तदप्यनुसन्धेयम् । एवं हि स्मरति भगवान्—

'सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः ।' इति ।

शपथभेदे किमत्राकूतं स्यात्स्मर्तुः[1] । यत्र यत्संभाव्यते यस्य यत्प्रियं यस्य यत्रासङ्गस्तेन तेन स शपते शाप्यते वेति लोकव्यवहारः । 'जीवितेन शपेत' इत्यद्याप्येवं शपथं शपन्ते लोकाः । विप्रश्चेत्साक्षी स सत्येन शाप्यः । सत्यं ते नङ्क्ष्यति सत्यदेवो वा ते कोपिष्यति यद्यन्यथा साक्ष्यं वक्ष्यसीति स वाच्यः । राजन्यश्चेत्साक्षी स वाहनायुधैः शाप्यः । रथ्या[2] ते भङ्क्ष्यते हेतितति़र्वा ध्वंसिष्यते यदि साक्ष्यायोपहूतो विवक्ष्यसि[3] न वक्ष्यसि वेति स वचनीयः । न ह्येष शपथभेदोऽहेतुको भवितुमर्हति । यदि विप्रस्यापि क्षत्रियवद् वैश्यवद्वाऽर्थस्वाम्यं स्यात्सोपि तद्वच्छाप्येत । न च तथा शाप्यते । तेन निपुणं कटाक्ष्यते स्मृतिकारेण सत्यप्रियः सत्यनिष्ठः सत्यधनो विप्र इति ।

नाक्षत्रं ब्रह्म वर्धत इति साधु विद्वांसस्ते महर्षयः क्षत्रं कल्पयाम्बभूवुः । लोकस्य निग्रहानुग्रहयोः प्रभवो भगवन्तो ब्राह्मणा विघ्नव्यूहव्यपोहे वाग्वज्रप्रयोगे तपसो व्ययं मेनिरे, क्षत्रियसाहाय्यं च चकमिरे । यथा गाधेयो विश्वामित्रस्ताडकावधं पारयन्नपि कर्तुं दशरथं सुतौ रामलक्ष्मणौ ययाचे । साधीयश्च ते पूर्वे बुबुधिरेऽसति राजनि राजन्यके[4] वाऽकर्णधारेव नौः प्रजा विप्लवेत, मात्स्यो न्यायश्च प्रवर्तेत ।

गुरुरात्मवतां शास्ता शास्ता राजा दुरात्मनाम् ।
अथ प्रच्छन्नपापानां शास्ता वैवस्वतो यमः ॥

इति च दृढं निश्चिक्यिरे । पूर्वे राजानः कया विधया प्रजापालनमकार्षुरिति केकयाधिपतेरश्वपतेरुक्तिरेवात्र प्रमाणम्—

'न मे स्तेनो जनपदे न कदर्यो न मद्यपः' इत्यादि ।

---

१. स्मृतिकर्तुः । २. रथानां समूहः । ३. विरुद्धं वचयसि । ४. राजन्यानां क्षत्रियाणां गणे ।

[1]अपीदानीं निखिलेपि भूवलयेऽस्ति स राजाऽधिराजो वा य एवं सन्तुष्टान्तरङ्गः स्वं जनपदमनास्पदममीषां दोषाणां कीर्तयेत्, तेन चात्मनो याथ्यत्वं प्रसाधयेत्। अपि च ऋष्यशृङ्गाश्रमगतेन वसिष्ठेन रामाय यथा प्रजानुरञ्जनं सन्दिष्टं यथा च रामेणोत्तरितं तदुभयमप्यद्वयं [2]कार्तस्वररसेन लेख्यं कस्य मुद नावहति। विरला एव क्षत्रिया एवं वक्तुमीशीरन्—

"स्नेहं दयां च सौख्यं च यदि वा जानकीमपि।
आराधनाय लोकानां मुञ्चतो नास्ति मे व्यथा ॥" इति।

अवितथवचसा प्रकृतिरञ्जनपरेण तेनाग्निशुद्धिमप्रतियतः कृपणांल्लोकाननुरुध्य बहिश्चराः प्राणाः सविग्रहा श्रीर्मूतिमती सत्क्रिया वसुमतीसुता सीतापि तृणवद् वने त्यक्ता, आत्मा च क्लेशस्य महतः पदमुपनीत इति कस्य लोमानि न हर्षयति। सुतनिर्विशेषं प्रजाः पालयन्तो वर्णाश्रमांश्च न्यायतोऽभिरक्षन्तश्चलतश्चैतान् स्वधर्मेऽवस्थापयन्तस्ते क्षत्रियाः प्रजाभिर्बन्धुभावमापन्ना योगक्षेमस्य प्रतिभुवो बभूवुः। पुरातनी दौष्यन्ती सा घोषणाऽद्यापि नः श्रवणयोर्मूर्च्छतीव[3]—

"येन येन वियुज्यन्ते प्रजाः स्निग्धेन बन्धुना।
स स पापादृते तासां दुष्यन्त इति घुष्यताम् ॥" इति।

राजा हि षष्ठांशभुगुच्यते। स न केवलं कृषकेणोत्पाद्यमानस्य सस्यस्य वाणिजेन वाऽर्ज्यमानस्यार्थसन्दोहस्य षष्ठांशमर्हतिप्र जाभिश्चर्यमाणस्य धर्मस्यापीति मनुशासनम्। आह च—

"सर्वतो धर्मषड्भागो राज्ञो भवति रक्षणात्।
अधर्मस्यापि षड्भागो भवत्यस्य ह्यरक्षतः ॥" इति।

अत्र विषये दुष्यन्तस्य राज्ञ इयमुक्तिर्नूनमर्थमाम्रेडयति—"तपःषड्भागमक्षय्यं ददत्यारण्यका हि नः" इति। इतश्चाभिरूपतरोऽर्थो मानवेऽपरे श्लोकार्धे स्मर्यतेऽरक्षिताभिः प्रजाभिराचरितस्य पाप्मनोपि षष्ठांशमर्हतीति। यदि प्रजा उन्मार्गप्रस्थिता धर्मे न तिष्ठन्ति, तदा राजैव दुष्यति पाप्मना च स्पृश्यत इत्येष उदारोर्थो नान्यत्र क्वचिदादर्शितः। पिशुनयति चैष परप्रकर्षमिह्रत्यानां क्षत्रियाणाम्।

---

1. अपिः प्रश्ने। 2. स्वर्णरसेन। 3. समुच्छ्रिता शूयत इव।

वैश्या हि सामान्या बहुसंख्याकाः प्रजा भवन्ति कामार्थप्रधाना धर्मोपसर्जनाः। विशः प्रजा इति चानर्थान्तरम्। वैश्यवर्गश्च सर्वत्र भुवि विलोक्यते। अविच्छिन्नधोरण्या प्रवहति सन्तायमानः। अत्र विषये विशेषविवक्षाविरहाच्छूद्रमधिकृत्य किञ्चिद् वच्मः। त्रैवर्णिकान् सेवमानः सर्वथाऽनसूयमानः स्वधर्मे रतः शुच्याचारः स्वर्गाय राध्यत्ययज[1]मानोपि, श्रुतिं वाऽनधीयानोपि, संस्कारान् वाऽभजमानोपीति न कल्याणप्रतिबन्धिका वर्णव्यवस्थितिः शूद्रस्य। तथापि शूद्रभूयिष्ठं राष्ट्रं गर्हन्ते मुनयो विनाशं चास्याशुभाविनमादिशन्ति।

महन्नामोपकृतं वर्णविभागेन लोकस्येति भङ्ग्यन्तरेण समस्य[2] विन्यस्यते। प्रतिवर्णं धर्मप्रतिनियमनेन चिराय व्यवस्थितोऽयं लोको न मर्यादामतीयाय। तत्र तत्र कुलेषु जाताः स्वं स्वं धर्मं विदाञ्चक्रुर्न जातुचिदतिचक्रमुः। यद्येषा कर्मादिकलापस्य वर्णविभागकृता क्लृप्तिर्न स्यात्साङ्कर्यं च स्यात्तदाऽभियोगशतेनापि कातर्यं गतः किरीटी घोरे क्षात्रे कर्मणि न जातु योजयितुं पार्येत भगवता वासुदेवेनापि। क्षत्रप्रकृतिरर्जुन आगन्तुकोऽस्योद्वेग इति साधु वेद सर्ववित् कृष्णः। प्रकृतिं च प्रबोधयति प्ररोचयति च वीरवृत्तम्। प्रतिनियताचारपरिशीलनेन यौनैश्च गुणदोषैः संस्कारविशेषा उपजन्यन्ते सन्ततेः, इह जन्मनि चाभिव्यज्यन्ते, सा प्रकृतिः शीलं वेत्याचार्याः। अविच्छिन्नक्षत्रधर्मप्रचारे कौरवेऽन्ववाये जातस्य धनञ्जयस्य क्षत्रियोचिता प्रकृतिरजनि। सैषा पराङ्मुखीभवन्तं ब्राह्मणवज्ज्ञानोपयोगेन शममन्विच्छन्तं तमवश्यमवशं करिष्यति कारयिष्यति च सङ्गरमित्यभिप्रेतं भगवतो वासुदेवस्य 'प्रकृतिस्त्वां नियोक्ष्यती'ति ब्रुवतः। सत्येव प्रकृतिरुद्भावयितुं शक्या नासती सद्य उपजनयितुम्। वर्णविभागेन धर्मप्रतिनियमनमेव प्रकृतिजनने मुख्यो हेतुः।

पूर्वे तत्रभवन्तो ब्राह्मणाः स्वधर्मविपरिलोपे वेदाभ्यासवैधुर्ये कुलोत्सादं जातिभ्रंशं वोत्प्रेक्षमाणाः सन्तानस्य ब्रह्मचर्याभावं न विषेहिरे। आरुणिर्हि पुत्रमायुष्मन्त श्वेतकेतुमाचार्योप[3]सत्तिकालमतियन्तं द्वादश-

---

१. यागमननुतिष्ठतोऽनधिकारात्। २. संक्षिप्य।
३. उपसत्तिः = समीपगमनम्।

वर्षतां चोपयन्तमालोक्य चिन्तामुपेयायाऽभ्युवाद[1] च—श्वेतकेतो वस ब्रह्मचर्यम् । न वै सौम्यास्मत्कुलीनोऽननूच्य ब्रह्मबन्धुरिव भवतीति। यदि साम्प्रतिका अपि ब्राह्मणा आरुणिमनुरुन्ध्युस्तथैव चापत्यान्यनुशिष्युस्तर्हि भिदुराः[2] स्थितौ रक्षेयुः कुलावपातं च वारयेयुरकीर्तिं च नियच्छेयुः ।

हिन्दवो हि सम्प्रति चातुराश्रम्यं प्रतिपन्नाः । पुराऽऽश्रमत्रयमेवाभूत्पश्चाच्चतुर्थस्योदय इति केचिदनुसन्धानरसिकाः । वेदे परिव्राजोऽश्रवणात् त्रयो धर्मस्कन्धा इति च छन्दोगानामाम्नानाद् भिक्ष्वाश्रमस्यासत्त्वं ततः कालेन समुत्पादमुन्नयन्ति । आश्रमा हि तपःस्थानानि । एत्य श्राम्यन्ति तपस्यन्त्यत्रेति व्युत्पत्तेः । श्रमु तपसि खेदे चेति पारायणिकाः । तत्र तावद् ब्रह्मचर्यं प्रथम आश्रमः । एवं हि गोपथकार इमं स्तवीति—अधीहि भोः किं पुण्यमिति । ब्रह्मचर्यमिति । किं लाक्यमिति । ब्रह्मचर्यमिति । ब्रह्मचर्येण देवा मृत्युमुपाघ्नतेति श्रुतिरपि । ब्रह्म वेदस्तदध्ययनार्थं व्रतमपि ब्रह्म तच्चरतीत्येवंशीलो ब्रह्मचारी, तस्य भावः कर्म वा ब्रह्मचर्यमिति विदितायमर्थः । इदंव्रतो वटुर्वर्णीत्यप्यभिधीयते । वर्णः प्रशस्तिरष्टविधमैथुनपरिहारलक्षणाऽस्यास्तीति यतः । अनेन प्रथमाश्रमस्थेनाचार्याधीनेन भवितव्यमन्यत्राधर्माचरणात् । अत्राश्रमे नियमेन विद्योपादानं तपश्चरणं च मिथुनीक्रियेते । अश्मा भव, परशुर्भव, हिरण्यमस्तृतं भवेति सूत्रकारवचनमनुविधीयते । भैक्षं भुज्यते, स्थूलमनुल्बणं च वासो वस्यते मनोवाक्कायेन च गुरुर्वरिवस्यते । एवं हि गुरुपरिचर्यारतो भवति छात्रो यदा ततोऽवशिष्ट एव समये स्वाध्यायमधीते । ध्वनितं चेदं छान्दोग्योपनिषदि—आचार्यकुलाद् वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्येत्यादिसमानना महर्षिणा । गौतमेनापि गुरोः कर्मशेषेण जपेदिति सूत्रयताऽयमेवार्थोऽभिव्यक्तमवादि । एषोऽत्राभिप्रायः । विद्यार्थिना[3] न केवलं पुस्तकार्थ एव धारणीयो ग्रहणीयश्च, न वाक्षराण्येव परिशोलनीयानि, बुद्धिरेव वा संस्कार्या, मन एव वाऽलङ्कार्यमपि तु लोकव्यवहारपाटवमप्यापनीयम्, पाणिपादो-

---

1. अभिसम्बोध्योवाच । २. कर्मकर्तरि प्रयोगः काशिकाप्रामाण्यात् ।
3. धर्मसूत्रादिषु बहुलं प्रयुक्तमिदमित्यस्यस्य शिष्टानुग्रहः ।

पयोगेन शारीरचेष्टया च पोषोपि सर्वाङ्गीणः[1] समासादनीयः । अतो गुरुकार्येष्वेवमासक्तिरिष्यते । पूर्वे हि विद्यातपःसमुच्चयमेव स्म रोचयन्ते । अत्र श्लोको भवति—

"यथाश्वा रथहीनाः स्यू रथो वाश्वैर्विना यथा ।
एवं तपस्त्वविद्यस्य विद्या वाप्यतपस्विनः ॥" इति ।

( वसिष्ठधर्मसूत्रे २६।१७॥ )

मनुरपि स्मरति—'तपो विद्या च विप्रस्य निःश्रेयसकरं परम् ।' इति । किं नु वर्ण्येत ब्रह्मचारिणः कृच्छ्राणाम् । बह्वस्य वर्जनीयम् । नैतेनातपनियमनाय च्छत्रं धारणीयम् , पादत्राणाय वोपानहौ प्रतिमोचनीये,[2] उपरिशय्या वाऽधिशेया, अङ्गरागो वा कल्पनीयः, मधुमांसे वाऽशनीये । नैनं ग्रामेऽन्तरभ्युदियात्सूर्योऽभिनिम्लोचेद्वा । एवंविधे तपःकलापे वर्तमानस्य तस्य विद्याविशेषाप्तये घोरतरा व्रतचर्योदिश्यते । महानाम्नीनामनुशीलनाय ब्रह्मचारिणा गोभिलोक्तानीमानि व्रतानि चर्याणि—कृष्णवस्त्रः, कृष्णभक्षः, अपन्थदायी, तपस्वी, तिष्ठेद्दिवा आसीत नक्तम् , वर्षति च नोपसर्पेच्छन्नम्[3] इति । दारुणाऽप्येषा व्रतचर्या लोकस्य प्रियाऽभूदित्यत्र गोभिलोद्धृतं रौरुकिब्राह्मणं प्रमाणम् । कुमारान् ह स्म वै मातरः पाययमाना आहुः—'शक्वरीणां पुत्रका व्रतं पारयिष्णवो भवते'ति ।

प्राञ्चोपि स्म विद्यामथयन्तेऽर्वाञ्चोपि । तत्र को विशेषः । पूर्वे हि न तथा लौकिकोर्थः साधनीयो यथात्मा सेधनीयः । आत्मानमन्विच्छ निहितं सततं गुहायामित्यार्षं वचोऽनुरुन्धानाः सन्ततं दैव्याः सम्पत्तेः सम्पादनायाऽऽत्मसाक्षात्कारायोदतिष्ठन्त । इदमेवात्राङ्गि सर्वमन्यदङ्गभावं भेजे । आर्याणां हि विनयपद्धत्यां दीर्घं पश्यत मा ह्रस्वं परं पश्यत माऽपरमित्येष भावो भावान्तराणि तिरयति[4] । एतेनोपरक्तः सर्वः क्रियाकलाप आगम्यलंप्रहश्च । अद्यत्वे तु विद्यार्थिनस्तथाऽनुशिष्यन्ते यथा महत्यै वृत्त्यै कल्पेरन् , सर्वं सुखोपकरणं च विन्देरन् , लौकिकमैश्वर्यं च लिप्सेर-

---

१. सर्वाण्यङ्गानि व्याप्नोतीति । २. बन्धनीये । ३. पटलोपेतं शरणम् ।
४. व्यवधत्ते । तिरोन्तर्हितं करोतीति व्युत्पत्तिः । ५. शिष्यार्थंमात्रः ।

अनुधावेरंश्च, संभावनां च महतीं लभेरन्। इयं नो वसुन्धरा भोगायेति बुद्धिजननाय ते सुखसंभारवत्सु सद्मसु वास्यन्ते। आत्मा नाम न तेषां कश्चिदर्थः समस्ति।

गार्हस्थ्यं क्रमेण द्वितीयोपि गौरवेण प्रथम एवाश्रमः। अयमेक एवाश्रम इति गौतमः। तथा हि सूत्रयति—ऐकाश्रम्यं त्वाचार्याः प्रत्यक्षविधानाद् गार्हस्थस्य[1] गार्हस्थेति। गार्हस्थ्यमन्तरा आश्रमान्तराणि नात्मानं लभन्ते। गार्हस्थ्यमेवोपजीवन्ति। तेन सर्वातिरेकि तन्माहात्म्यमिति को नाम सन्दिहीत। स्नातकस्य गार्हस्थ्यमनुप्रविष्टस्य चरणीयो व्रतव्रातो विवक्षितोपि विस्तरभिया नोच्यते। 'याऽधार्यो दुर्बलेन्द्रियैरि'ति मनुवचनं स्मारायत्वैव विरम्यते।

शिष्टमाश्रमद्वयमधिकृत्येदानीं किमप्युच्यते। गार्हस्थ्यात्परो वानप्रस्थाश्रमः। तत्र सदारोऽदारो वा तपस्यति मुनिरारण्यकः। न हि येन केनचिदयमाश्रमोऽनुप्रवेष्टव्यः। यः स्नातको गृहाश्रमे विधिवत्स्थितः स एवात्राधिक्रियते नेतरः। नीवारादिकं वन्यमशनमुपभुञ्जानश्चर्मं वा चीरं वा वसानः स्वाध्यायं च नित्यमधीयानो मैत्रो दान्तः समाहितः कालं नयेदित्यादेशः। अत्राश्रमे प्रथमे[2] त्रयोपि वर्णाः शास्त्रेणाधिक्रियन्ते। आश्चर्यं दुरासदमहिमानः समित्समिद्धा हविष्प्रीणिता वह्नय इवाविषह्या महाप्रतापाः परन्तपा अमितविभूतयो महीन्द्रा विहाय [3]पराघ्र्योण्यासनानि, शुद्धानि नेपथ्यानि, सौख्यधामानि सौधानि, महार्घाण्यपरिच्छिन्नानि परिबर्हणानि[4], विनीय दर्पं [5]निगीर्य, गर्वं विमुच्य मानम्, अपहत्यौद्धत्यं, वनं निर्याय मुनिवृत्तिमास्थाय श्राम्यन्त आयुषः शेषमक्षपयन्। सुष्ठु चान्वभूवन्—

स्वयं त्यक्ता ह्येते शमसुखमनन्त विदधति ॥ इति।

स न मन्येत शास्त्रकृदादेश एवायम्, अननुप्रेयत्वान्नानुष्ठितः केनापि पुरेति तत्प्रत्यायनाय साद्यमुदाहरामः। भगवान्भाष्यकारः प्रियाख्यशब्दव्युत्पत्तिप्रसङ्गेन श्लोकमिमं पठति—

---

१. सूत्रकारप्रयोग इति साधुः। २. जसि रूपम्। ३. बहुमूल्यानि।
४. परिच्छदान्। ५. न्यग्भावमापाद्य। बाधित्वेत्यर्थः।

यस्मिन्दश सहस्राणि पुत्रे जाते गवां ददौ।
ब्राह्मणेभ्यः प्रियाढ्येभ्यः सोऽयमुञ्छेन जीवति ॥ इति।

व्यक्तमत्र कश्चिन्महीक्षिद् वैखानसवृत्तिमुपाश्रितः प्रस्तूयत इति नात्र बहु वक्तव्यमस्ति। किं चैक्ष्वाकस्य[1] राज्ञो बृहद्रथस्य तपोवनगमनं तिग्म-तपश्चरणं च मैत्र्युपनिषदि श्रूयमाणं भूय एतमर्थं प्रमाणयति। अन्यच्च। खिस्तात्प्राक् चतुर्थ्यां शताब्द्यां द्वयेऽप्येत आश्रमिण आसामासुरिति यवन-दूतो मेगास्थनीज इह साक्षी। स भवाञ्श्रमणद्वैविध्यं पश्यन्नुदाहरति— एके तावद्वनौकसः कन्दमूलफलाशिनो वल्कवाससो[2]ऽपरेऽनियतवसतयो यतय इति। अन्यत्र च स एव महाभागः सम्प्रति सम्प्रतीतं पुरावृत्तविदां वृत्तमुदाहरति। भरतवर्षेस्थस्तत्त्वज्ञो दाण्डयायनो नाम दिवस्पुत्रेणाल-क्ष्येन्द्रेण सम्राजा पर्याप्तमौपहारिकं ते दास्यामि यदि मामुपैष्यसि, नो चेन्मूर्धानं ते कर्त्स्यामीति मृदुतीक्ष्णां गुर्वीं गिरं सन्दिशताऽऽजुहुवे लोभ-लेशेनापरामृष्टो मौनेये[3]नान्तस्तोषेण तृप्तः स मुनिर्विभीषिकामवमेने, आज्ञप्तिं च प्रत्याचचक्षे, इत्थं च प्रत्यूचे—न ह्येष नरेन्द्रो दिवस्पुत्रो योऽय-मर्धस्यापि भूभागस्य नेष्टे। नाहं ततः किमपि प्रत्येषितुं[4] कामये यस्य गर्धो न गतः, योऽनस्तमिताभिलाषोऽसुतर्पः[5]। तर्जनायाश्चापि ततस्त्या-या नाहं त्रस्यामि। यदि ध्रियेय, भारते खण्डे समस्ति मे सुभिक्षा, यदि म्रियेय, जराविक्लवादस्मात्कलेवरान्मोक्ष्येऽवदातां योनमुज्ज्वलं च धाम प्रपत्स्य इति। ततोऽलक्ष्येन्द्रस्तन्निशम्य सुतरां समतुषत् तस्य महात्मनो जीवितचर्यां च न व्यच्छिदत्।

चरमो हि मोक्षाश्रमः 'ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेदि'त्युक्तेः। इममाश्रमस्थो यतिर्भिक्षुः परिव्राजक इति चोच्यते। अस्य हि तीव्रतमां तपस्यां व्यादिशन्ति धर्मसूत्रकाराः। अनिचयो भिक्षुः, भिक्षार्थी ग्राममियात्, प्रहीणमेके निर्णिज्य (परिदधीत वासः), उपेक्षकः सर्वभूतानां हिंसानुग्रहपरिहारेण नैकत्रवसतिः, प्रव्राजितः स्यात्। ब्राह्मण

1. इक्ष्वाकोर्गोत्रापत्यस्य। टिलोपो निपातनात्। 2. वल्कलपरिधानाः। 3. मुनेरपत्येन। उपचारात्तदीयेन। 4. अहीतुम्। 5. दुष्करतृप्तिः। खलि रूपम्।

एव प्रव्रजेन्नान्य इति शास्त्रकाराः। तथागतेन[1] तु भिक्ष्वाश्रमप्रवेशाय सर्वस्मै द्वाराणि विवृतानि, तेन भिक्षुनिकायैर्मधुपटलमिव मक्षिकाभिराचितमभूद्भारतं वर्षम्। यत्र तत्र भैक्षार्जनेन भ्रमद्भिरेभिः शलभैरिव शाद्वलानि समुज्जासितानि ग्रामपत्तनपुटभेदनानि। योषितश्च परिव्रज्यां ग्राहयित्वा दूषितानि जनकदम्बकानीत्यालोच्याऽशिवां चार्यतिं समुत्प्रेक्ष्य नयाचार्येण कौटिल्येन पुत्रदारमप्रतिविधाय प्रव्रजतः पूर्वः साहसदण्डः, स्त्रियं च प्रव्राजयतः। लुप्तव्यवायः प्रव्रजेदापृच्छ्य धर्मस्थान् अन्यथा नियम्येत (अर्थ० २।१।१६) इति शासता साध्वकारि। परमार्थतस्तु नात्राश्रमे सामान्यो ब्राह्मणोऽप्यधिकृतः। तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्य इत्यौपनिषदोऽर्थो यत्रावितथस्त एवाविर्भूतज्योतिष इहाधिक्रियन्ते। अत एवोपपद्यते बृहदारण्यकोपनिषच्छ्रुतिः—एतमेव विदित्वा मुनिर्भवति। एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति। एतद्ध स्म वैतत्पूर्वे विद्वांसः प्रजां न कामयन्ते, किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोक इति। ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्तीति। इत्थं कियन्तस्ते भगवन्त आत्मविदो ब्राह्मणास्तदानीं बभूवुरर्हाः प्रव्रज्यायाः। अल्पा एवेत्यनुक्तमपि सुग्रहम्। अद्यापि यदि श्रुतिरेषा मान्येत, केचन विरला एव संन्यस्येयुः। सर्वे च धर्मे तिष्ठेयुः। अद्यत्वे द्वावेवाश्रमौ ब्रह्मचर्यं गार्हस्थ्यं च। तत्रापि बटूनां पूर्वेषां छात्राणां चाधुनातनानां महदन्तरमिति पुरस्तादवोचाम। अद्यापि हिन्दवोऽहिन्दवश्च जरापरीतात्मानो वलिनपलिता[2] उपरमन्ति कार्यव्यापृतेः, परं तन्न तपसेऽपि तु सञ्चितस्यार्थस्योपयोगेन सुखं चिरतरं च जीवितु ह्रसन्तीं शक्तिं च विनियन्तुम्।

इदानीमस्मदीयामाश्रमव्यवस्थितिमधिकृत्य श्रमण्यदेशललामभूतस्वस्त्विद्वृन्दारकोऽद्वैती डासनमहाभागो यदाह तेन पर्यवसाययाम इद नो वक्तव्यम्। सर्वमायुरार्येण चतुर्भिराश्रमैरुत्तरोत्तरं तीव्रतरैस्तपोभिर्व्रतैरुपवासैश्च यापनीयं विरक्तिश्च परमाऽऽपादनीया येन परमानन्दलब्धिः

---

१. सुगतेन (बुद्धेन)। २. वलिमन्तः पलितकेशाश्च।

स्यादित्याश्रमव्यवस्था। सर्वत्र भूवलये मानवमात्रस्येतिहासे नेमां समुज्ज्वलां कल्याणीं विचारसरणीं किमपि कथं चिदपि तुलयतीति।

अकारि हिन्दुधर्मस्य व्याख्या नव्यार्थसंभृता।
चार्वीयं चारुदेवेन तां जुषन्तां मनीषिणः॥



## (९) पदार्थविकासः

कोऽयं पदार्थविकासो नाम? उच्यते। न वयं वैशेषिकस्य सप्तपदार्थीं विवरीतुं प्रवृत्ताः। शाब्दिका वयम्, यद्यपि व्यपदेशिवद्भावेन। तर्हि शब्दमेवाधिकृत्य किञ्चिद् विवक्षामः। पदवाक्यानामर्थानां क्रमिकं विकासमेवेहाभिधित्सामः। भवति हि शब्दार्थे निमित्तद्वयम्—प्रवृत्तिव्युत्पत्तिश्चेति। तयोश्चान्यत्वमसम्भेदो वा विदितो विदुषाम्। तत्र प्रवृत्तिनिमित्तमेव प्राधान्यमियर्ति। न हि व्युत्पत्तिलभ्यैरर्थैर्लोके व्यवहारः क्वचिदस्ति। न च शब्दा अर्थान्तरसङ्क्रमे व्युत्पत्तिमनुरुन्धन्ति। यत्र यत्र चार्थे लोके प्रयुज्यन्ते तत्र तत्र व्युत्पत्तिरङ्गभावं भजते, उपपत्तिं चाधत्ते। यथा गौरिति सास्नादिमन्तमर्थमाह प्रवृत्तिनिमित्तेन, व्युत्पत्तिश्चात्र गोपदार्थे गमनान्वयं दर्शयन्ती गोशब्दे शक्ततामुपपादयति। यथा वाऽश्वशब्दे चतुष्पाज्जातिविशेषवाचके 'अश्नुतेऽध्वानमि'ति निरुक्तिरश्वे पदार्थेऽश्वशब्द उपपन्नो भवतीति साधु दर्शयति। एवं प्रवृत्तिनिमित्तलभ्योऽर्थो मुख्यः, व्युत्पत्तिश्च तत्रोपकारिणी। क्रियाशब्देष्वेव व्युत्पत्त्यर्थः प्रधानमित्यभ्युपगमः। यावच्चास्य मुख्यार्थस्य न जायते बाधो न तावदर्थान्तरमात्मानं लभते। अतः सर्वो वक्ष्यमाणः पदार्थविकासो मुख्यार्थबाधमाश्रित्यैव प्रवर्तते न चान्यथा।

अयं च पदार्थविकासः क्वचिदपि शास्त्रे नवे पुराणे वा प्रबन्धे नास्माभिर्दृष्टचरः। कामं तत्र तत्र लक्षणामुदाहरद्भिरालङ्कारिकैः श्रीमम्मटभट्टप्रभृतिभिः कुशलप्रवीणादयो द्वित्राः शब्दा वितत्य व्याख्याताः, क्वचिच्चान्यत्र काव्यनाटकादिं व्याचक्षाणैर्मल्लिनाथादिभिरयं शब्दोऽस्मिन्नर्थे लाक्ष-

णिकोऽयं गौण इत्युदाहारि, क्रमस्तु न क्वापि प्रादर्शि । कोऽत्र मुख्यार्थः, कथं चास्य बाधः, कथं चार्थान्तरसङ्क्रम इति प्रपञ्चस्तु सर्वत्र पर्यहारि । अनवकाशस्तत्र तत्र तादृशस्य प्रपञ्चस्येति चेत् । सत्यम् । अन्यत्राप्यवकाशो नास्ति । के ते प्रदेशा यत्र स विकासो मृग्यः । इद तर्ह्यवश्याभ्युपेयं रूढार्थाभिधानेन प्रकृतिप्रत्ययार्थप्रदर्शनेन च कृतकृत्यंमन्याः प्रायेण प्रतिपत्तारः प्रतिपादयितारश्चेति ।

संस्कृते वाङ्मये बहूनां पदानामेकार्थता कथं समजनीत्यत्रापि नोद्येमिरे[1] प्राञ्चः, नोद्यच्छन्ते चार्वाञ्चः । अनवसर एष तद्विषयस्य व्युत्पादनस्य । कुशला[2] ह्यत्र प्रधानवक्तार उपसर्जनं वयम् । अतो मितेन सन्दर्भेण प्रतिज्ञातोऽर्थ उदाह्रियते ।

दिङ्नागप्रणीतं कुन्दमालां नाम नाटकं परिष्कुर्वता मया कविनाऽसकृत्प्रयुक्ते निभृतशब्दे वाचाऽऽङ्गल्या यदवाचि तदेवेहार्थत उद्ध्रियते तावत् । तदालोचयन्तु सन्तः ।

निभृतशब्दः साक्षात्प्रकृतिप्रत्ययप्रयोगेनोपसर्गयोगेन चाकण्ठपूर्णमर्थमाचष्टे । तथा च चिन्तया निभृत इति श्रीमद्भागवते प्रयोगः । यन्नाम निभृतं भवति न तच्छब्दायते । सम्पूर्णकुम्भो न करोति शब्दमिति ह्याभणन्ति लोकाः । अतो निभृतं नीरवं प्रशान्तमित्यनर्थान्तरम् । भवन्ति चात्रार्थे कवीनां प्रयोगाः—"कोऽयं निभृतं तपोवनमिदं ग्रामीकरोत्याज्ञये"ति स्वप्ननाटके । "निष्कम्पवृक्षं निभृतद्विरेफं कानन"मि"ति कुमारे । कारणेन खलु मया नैभृत्यमवलम्बितमिति च मालविकाग्निमित्रे । यस्माद्यः कश्चिदिह शब्दः श्रूयते स आघातजन्यं मारुतकम्पमन्तरेण नोदयते तस्माच्छब्दाभाव कम्पविरहे शक्यं लिङ्गमास्थातुम् । अतो नीरवमर्थमभिधाय निभृतशब्दो निष्कम्पमभिधत्ते । यथा—"निष्कम्पचामरशिखा निभृतोर्ध्वकर्णा" इति शाकुन्तले । "अनिभृतकरे-

---

१. उत्पूर्वाद्यमेर्लिटि रूपम् । कर्त्रभिप्राये क्रियाफलेऽत्रात्मनेपदविधिः । २. लवपुरस्थसरस्वतीसमाजोपवेशने मासिके प्रबन्धोयं वाचितः । अत्र कुशला इति पदेन स्वर्याताः कुशलोपाह्वाः श्रीरामचन्द्रशास्त्रिणोऽभिप्रेताः ।

ण्वाक्षिपत्सु प्रियेष्वि"ति मेघदूते । "वारिधीनिव युगान्तवायवः क्षोभयन्त्य-निभृता गुरूनपी"ति किराते । "नानिभृतोऽग्निमुपासीते"ति च चरके । निष्कम्पताया नीरवतायाश्च बाह्याथा न दूरं विप्रकृष्यते शान्तिराभ्यन्तरी । कल्पते नाम बहिरङ्गप्रशमोऽन्तरङ्गप्रशमाय । यथा स्नातस्य ध्यानैकसर्गता[1] न तथाऽस्नातस्य । सौम्या ह्यापः । अतो युज्यते यन्निभृतशब्दोऽन्तःशान्तं प्रश्रितमाचक्षीत । यथा निभृतात्मेत्यत्र ।

मनोविषये सन्देहान्तगमनं संशयदोलानधिरोहणमेव वा कम्पाद्य-भावः । तेन निभृतशब्दो दार्ढ्यं स्थैर्यं वा लक्षयति । यथा—"तया व्याहृतसन्देशा सा बभौ निभृता प्रिय" इति कुमारे । ततो नीरवनिष्क-म्पार्थद्वयव्यतिकरेण रहस्यार्थलब्धिः, यतो हि रहस्यं नाम नीरवताया निष्कम्पतायाश्च साहचर्यं न जहाति । सति चेष्टादिलेशे सति चारावलवे[2] न जातु सन्तिष्ठते रहस्यं तैलबिन्दुरिव चाप्सु प्रसरति सद्यो लोके । प्रमाणयति चैतमर्थं निभृतमिति चिन्तनीयं शीघ्रमिति सुकरमिति शाकु-न्तले कविकुलपतेरुक्तिः । रहस्यं च पुनर्गोप्यं तिरस्करणीयं च भवति, तेन निभृतशब्दः प्रच्छन्नतिरोहितादिना समानाभिधेयतां याति । यथा "निभृतो भूत्वे"ति पञ्चतन्त्रे, "नभसा निभृतेन्दुने"ति रघौ ।

परिपूर्णतारूपो मुख्यार्थ एव भूयोऽप्यर्थान्तरं संक्रामति । दृश्यते हि लोके परिपूर्णता गौरवाय भवति, गौरवं च [3]प्रावण्यायेति । नमन्ति हि फलभरेण शाखिनः, विलम्बन्ते च नवाम्बुभिर्घनाः । तेन निभृतेन प्रणतोऽव-नतकायो वोच्यते । यथा "प्रणामनिभृता कुलवधूरिवे"ति मुद्राराक्षसे ।

अत्र बहूनामन्येषां शब्दानां व्याचिख्यासितानां केचिदेव विविच्यन्ते । विशारदशब्दः कस्यचिच्छात्रस्योपाध्यायस्य वा नावगतः । अयं हि प्रग-ल्भापरपर्यायः । तत्पर्यायत्वे वक्तव्यो हेतुः । विशिष्टा शारदाऽस्येति व्युत्पत्तिरेव हेतुरिति चेन्न । शारदा हि भगवत्या विद्याधिष्ठात्र्या देवतायाः संज्ञा । तस्याः सामान्यविशेषभावोऽनुपपन्नः । तस्मात्तत्र विशेषणोपादान-मपार्थम् । किञ्चात्र शारदाशब्दोऽवयवभूतो नोत्प्रेक्षितुं युज्यते । नामलि-

---

१. चिन्तनैकाग्रयम् । २. आरावः शब्दः, तस्य लवो लेशः, तस्मिन् । ३. प्रवणो निम्नो निम्नाभिमुखो वा । तस्य भावः, तस्मै ।

ङ्गानुशासने शारदविशारदशब्दयोः साहचर्येण पाठात्। कथं तर्हि प्रागल्भ्यार्थप्रतीतिः। उच्यते। विगतं शारदत्वमभिनवत्वमस्येति व्युत्पत्तेः। शारदशब्दोत्र भावप्रधानः। शारदत्वेनात्राभिनवत्वं लक्ष्यते। शरदि भवं शारदम्। आगतायां हि शरदि वर्षर्तुना कृतं सलिलाविलत्वं गगनश्यामत्वं चापैति, प्रसीदन्त्यापः, अतियन्ति दुर्दिनानि। तेन सर्वं नवतामिवोपैति। प्रयुक्तश्चायं शब्दो भगवता सूत्रकारेणाप्यत्रार्थे 'शारदेऽनार्तवे' इत्यत्र। तत्र शारदशब्दः प्रत्यग्रवाची। 'सद्योरज्जूद्धृतमुदकमनुपहतं रज्जुशारदमुच्यत' इति काशिकायां जयादित्यः। द्वौ तु शारदौ प्रत्यग्राप्रतिभाविति नानार्थेष्वमरः। यस्य हि नवत्वं विनष्टं भवति स विशारदः प्रगल्भः प्रौढ इत्युच्यते। शास्त्रेऽधीतिन एवैतं व्यपदेशं भजन्ते न प्राधीताः[1]।

आलोच्यतां वा कृपणशब्दार्थः। कृपणः किम्पचान उच्यते, तत्रार्थेऽस्य रूढिः। तत्केन हेतुना। कृपणः कृप्यते कृपाविषयीक्रियत इति व्युत्पत्तिलभ्योर्थः। सत्यं स कृपाभाजनं भवति यः सर्वस्यापेक्षितस्यार्थस्येशानोपि नात्मनि प्रकुरुते[2] न च बन्धुषु न वा लोक्येषु[3] कृत्येषु। प्रयुक्तपूर्वश्चायं शब्दो विशेषणसबाधितमुख्यार्थवृत्तिः। "यथा यो वा एतदक्षरं गार्ग्यविदित्वाऽस्माल्लोकात्प्रैति स कृपणः", यथा वा "बुद्धौ शरणमन्विच्छ कृपणाः फलहेतव" इति। पूर्वं विशेषणं भूत्वाऽयं पश्चात्केवलं विशेष्यार्थमर्पयति। एवमन्यत्रापि विशेषणानि विशेष्यतां यान्ति। तथा कस्मादिति बहुत्र कस्मात्कारणादित्यर्थे दृश्यते। अत्रापि विशेषणेन विशेष्यार्थस्य समर्पणम्। अकस्मादिति च सहसार्थे संगच्छते, अकारणादित्यर्थात्। स्मरन्ति च धर्मसूत्रकारा 'न रूढश्मश्रुरकस्मात्' इति। तत्राकारणाद् वृद्धश्मश्रुर्न स्यादिति तदर्थः।

समीक्ष्यतां वा याप्यशब्दः। 'याप्ये पाशप्' इत्यत्र पाणिनीये श्रूयतेऽयं निन्द्यार्थकश्च व्याख्यातः। 'मिथ्यावचने याप्यो दण्ड्यश्च साक्षी'ति गौतमधर्मसूत्रेपि निन्द्यार्थको दृष्टः, बहिष्कार्यो वेति व्याख्यातः। कथं निन्द्यार्थलब्धिरिति विमृश्यम्। यातेर्ण्यन्ताद्यति रूपम्। याप्यः

---

1. अध्येतुं प्रवृत्ताः। आदिकर्मणि क्तः। 2. विनियुङ्क्ते। 3. लोकहितेषु।

प्रस्थाप्यः प्रेष्यः प्राप्य इति व्युत्पत्तिलभ्योर्थः। परं नात्रार्थे कचित्प्रयुक्त-पूर्वोयं शब्दः। "शिबिका याप्ययानं स्यादि"त्यत्रापि याप्यस्याशक्तस्य यानमिति स्वामी। तत्र व्युत्पत्त्यर्थपरामर्शः कियानप्यस्तीति नापलाप्यम्। एवं याप्यश्चिकित्स्य इत्यर्थेपि। गौणार्थे निन्द्य एव तु दृश्यन्ते प्रायशः प्रयोगाः। तत्कुतो निन्द्यार्थोपलब्धिः। त्रिविधा रोगा इति वैद्याः। सुखसाध्याः कृच्छ्रसाध्या असाध्याश्चेति। तत्रासाध्याः पुनर्द्विविधाः—याप्याः प्रत्याख्येयाश्चेति। यथा—याप्यान्यर्शांसि। याप्यं कुष्ठम्। याप्यो राजयक्ष्मा। रोगो नाम सर्वोपि दुःखकरः। रुजति हि सः। परं याप्यो रोगः सुतमां दुःखकरः। न स साध्यते न च प्रत्याख्यायते। कदाचिन्मन्दतां याति कदाचित्तीव्रतां चिकित्स्यमानोपि। सततं चातुर उपचर्यते भेषजैर्न च [1]कल्यतामेति। दुःखाभिभूतो माजीवन्नसौ[2] लोकस्य निन्द्यो भवति निर्भाग्योयं यस्य रोगान्निर्मोक्षो नास्तीति। एवं योऽन्योपि दुश्चरितेन वा मौर्ख्येण वाऽनैपुणेन वा हेतुना निन्द्यो भवति सोपि याप्य इत्युच्यते। याप्य इव याप्य इत्यौपमिकः प्रयोगः।

विविच्यतां वोपपूर्वस्येक्षतेरर्थः। अयं ह्यद्यत्वे पदार्थानवलोकने पदार्थ-परिहारे वा व्यवह्रियते। तत्कुतः। निरुक्तकारेण भगवता यास्केन बहुत्र तदेतेनोपेक्षितव्यमिति वाक् सन्दृब्धा। उपेक्षितव्यं साधीयः परीक्षणीयमित्येवं च व्याकृतं दुर्गेण। उपशब्दो हि सामीप्यं वक्ति। यो ह्युपेत्य पश्यति स साधीयः पश्यति। परं योऽत्यन्तमुपेत्य पश्यति स पश्यत्येव न। न हि वयं नेत्रस्थमञ्जनं पश्यामः। अत एवोपपूर्व ईक्षतिरनवलोकनं पदार्थ-परिहार वाऽर्थान्तरं सङ्क्रान्तः कालेन।

एवं व्याक्रियमाणं शब्दजातं किमप्यपूर्वं रामणीयकं धत्ते। चार्वी ह्येषा शैली विपश्चिद्भिरवश्यं शीलनीया। न ह्येतत्समं प्रकारान्तरमस्ति। दिङ्-मात्रमिह दर्शितम्। विस्तरस्तु चिरतरमनेहसमपेक्षत इति विरमामः।

पदार्थानां विकासोऽय नूत्नः सुमनसामिव।
भूयान्मनोविनोदाय समेषां साहितीजुषाम्॥

---

१. कल्यो निरामयो भवति। २. कुत्सितं जीवति। माङ्याक्रोश इति लटःशता।

# सुभाषितनीवी

## ( पद्यरत्नानि )

पृथिव्यां त्रीणि रत्नानि जलमन्नं सुभाषितम् ।
मूढैः पाषाणखण्डेषु रत्नसंज्ञा विधीयते ॥ १ ॥
द्राक्षा म्लानमुखी जाता शर्करा चाश्मतां गता ।
सुभाषितरसस्याग्रे सुधा भीता दिवं गता ॥ २ ॥
कान्पृच्छामः सुराः स्वर्गे निवसामो वयं भुवि ।
किं वा काव्यरसः स्वादुः किं वा स्वादुः सुधारसः ॥ ३ ॥
पशुर्वेत्ति शिशुर्वेत्ति वेत्ति गानरसं फणी ।
सुभाषितस्य माधुर्यं शङ्करो वेत्ति वा न वा ॥ ४ ॥
याता यान्ति च यातारो लोकाः शोकाधिका भुवि ।
काव्यसम्बन्धिनी कीर्तिः स्थायिनी निरपायिनी ॥ ५ ॥
लौकिकानां हि साधूनामर्थं वागनुवर्तते ।
ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावति ॥ ६ ॥
शब्दशास्त्रमनधीत्य यः पुमान् वक्तुमिच्छति वचः सभान्तरे ।
बन्द्धुमिच्छति वने मदोत्कटं हस्तिनं कमलनालतन्तुना ॥७॥
नागुणी गुणिनं वेत्ति गुणी गुणिषु मत्सरी ।
गुणी च गुणरागी च विरलः सरलो जनः ॥ ८ ॥
उदेति सविता ताम्रस्ताम्र एवास्तमेति च ।
सम्पत्तौ च विपत्तौ च महतामेकरूपता ॥ ९ ॥
उपकारिषु यः साधुः साधुत्वे तस्य को गुणः ।
अपकारिषु यः साधुः स साधुः सद्भिरुच्यते ॥ १० ॥
सुजनो न याति वैरं परहितनिरतो विनाशकालेपि ।
छेदेपि चन्दनतरुः सुरभयति मुखं कुठारस्य ॥ ११ ॥
शब्दब्रह्मणि निष्णातो न निष्णायात्परे यदि ।
श्रमस्तस्य श्रमफलो ह्यधेनुमिव रक्षतः ॥ १२ ॥

शरदि न वर्षति गर्जति वर्षति वर्षासु निःस्वनो मेघः।
नीचो वदति न कुरुते न वदति सुजनः करोत्येव ॥ १३ ॥
छिन्नोपि रोहति तरुश्चन्द्रः क्षीणोपि वर्धते लोके।
इति विमृशन्तः सन्तः सन्तप्यन्ते न ते विपदा ॥ १४ ॥
सत्येन रक्ष्यते धर्मो विद्या योगेन रक्ष्यते।
मृजया रक्ष्यते रूपं कुलं वृत्तेन रक्ष्यते ॥ १५ ॥
प्रायेण श्रीमतां लोके भोक्तुं शक्तिर्न विद्यते।
दरिद्राणां तु राजेन्द्र अपि काष्ठं हि जीर्यति ॥ १६ ॥
संरोहति शरैर्विद्धं वनं परशुना हतम्।
वाचा दुरुक्तं बीभत्सं न संरोहति वाक्क्षतम् ॥ १७ ॥
चलन्ति गिरयः कामं युगान्तपवनाहताः।
कृच्छ्रेपि न चलत्येव धीराणां निश्चलं मनः ॥ १८ ॥
वदनं प्रसादसदनं सदयं हृदयं सुधामुचो वाचः।
करणं परोपकरणं येषां केषां न ते वन्द्याः ॥ १९ ॥

पिबन्ति नद्यः स्वयमेव नाम्भः
स्वयं न खादन्ति फलानि वृक्षाः।
नादन्ति सस्यं खलु वारिवाहाः
परोपकाराय सतां विभूतयः ॥ २० ॥

पतितोपि राहुवदने तरणिर्बोधयति पद्मषण्डानि।
जनयन्ति हि प्रकाशं दीपशिखाः स्वाङ्गदाहेन ॥ २१ ॥

अद्यापि नोज्झति हरः किल कालकूटं
कूर्मो बिभर्ति धरणीं खलु पृष्ठकेन।
अम्भोनिधिर्वहति दुस्तरवाडवाग्नि-
मङ्गीकृतं सुकृतिनः परिपालयन्ति ॥ २२ ॥

लक्ष्मीश्चन्द्रादपेयाद्वा हिमवान्वा हिमं त्यजेत्।
अतीयात्सागरो वेलां न प्रतिज्ञामहं पितुः ॥ २३ ॥
द्विः शरं नाभिसन्धत्ते द्विः स्थापयति नाश्रितान्।
द्विर्ददाति न चार्थिभ्यो रामो द्विर्नाभिभाषते ॥ २४ ॥

उदयति यदि भानुः पश्चिमे दिग्विभागे
प्रचलति यदि मेरुः शीततां याति वह्निः ।
विकसति यदि पद्मं पर्वताग्रे शिलायां
न भवति पुनरुक्तं भाषितं सज्जनानाम् ॥ २५ ॥
विदुषां वदनाद्वाचः सहसा यान्ति नो बहिः ।
याताश्चेन्न पराञ्चन्ति द्विरदानां रदा इव ॥ २६ ॥
मनसि वचसि काये पुण्यपीयूषपूर्णा-
स्त्रिभुवनमुपकारश्रेणिभिः प्रीणयन्तः ।
परगुणपरमाणून्पर्वतीकृत्य नित्यं
निजहृदि विकसन्तः सन्ति सन्तः कियन्तः ॥ २७ ॥
घृष्टं घृष्टं पुनरपि पुनश्चन्दनं चारुगन्धं
छिन्नं छिन्नं पुनरपि पुनः स्वादु चैवेक्षुदण्डम् ।
दग्धं दग्धं पुनरपि पुनः काञ्चनं कान्तवर्णं
न प्राणान्ते प्रकृतिविकृतिर्जायते चोत्तमानाम् ॥ २८ ॥

विद्या विवादाय धनं मदाय शक्तिः परेषां परिपीडनाय ।
खलस्य साधोर्विपरीतमेतज्ज्ञानाय दानाय च रक्षणाय ॥ २९ ॥
स्वयं महेशः श्वशुरो नगेशः सखा धनेशस्तनयो गणेशः ।
तथापि भिक्षाटनमेव शम्भोर्बलीयसी केवलमीश्वरेच्छा ॥ ३० ॥
न निर्मिता केन न दृष्टपूर्वा न श्रूयते हेममयी कुरङ्गी ।
तथापि तृष्णा रघुनन्दनस्य विनाशकाले विपरीतबुद्धिः ॥ ३१ ॥
सीदन्ति सन्तो विलसन्त्यसन्तः पुत्रा म्रियन्ते जनकश्चिरायुः ।
परेषु मैत्री स्वजनेषु वैरं पश्यन्तु लोकाः कलिकौतुकानि ॥ ३२ ॥
बन्धनानि खलु सन्ति बहूनि प्रेमरज्जुकृतबन्धनमन्यत् ।
दारुभेदनिपुणोऽपि षडङ्घ्रिर्निष्क्रियो भवति पङ्कजकोषे ॥ ३३ ॥
श्रोत्रं श्रुतेनैव न कुण्डलेन दानेन पाणिर्न तु कङ्कणेन ।
विभाति कायः करुणापराणां परोपकारेण न चन्दनेन ॥ ३४ ॥
क्षारं जलं वारिमुचः पिबन्ति तदेव कृत्वा मधुरं वमन्ति ।
सन्तस्तथा दुर्जनदुर्वचांसि पीत्वा च सूक्तानि समुद्गिरन्ति ॥ ३५ ॥

किं मधुना किं विधुना किं सुधया किं वसुधयाऽखिलया ।
यदि हृदयहारिचरितः पुरुषः पुनरेति नयनयोरयनम् ।। ३६ ।।

सज्जनस्य हृदयं नवनीतं यद् वदन्ति कवयस्तदलीकम् ।
अन्यदेहविलसत्परितापात् सज्जनो द्रवति नो नवनीतम् ।। ३७ ।।

कल्पद्रुमः कल्पितमेव सूते सा कामधुक कामितमेव दोग्धि ।
चिन्तामणिश्चिन्तितमेव दत्ते सतां तु सङ्गः सकलं प्रसूते ।। ३८ ।।

निरक्षरे वीक्ष्य महाधनत्वं विद्याऽनवद्या विदुषा न हेया ।
रत्नावतंसाः कुलटाः समीक्ष्य किमार्यनार्यः कुलटा भवन्ति ।। ३९ ।।

वज्रादपि कठोराणि मृदूनि कुसुमादपि ।
लोकोत्तराणां चेतांसि को नु विज्ञातुमर्हति ।। ४० ।।

उदीरितार्थः पशुनाऽपि गृह्यते हयाश्च नागाश्च वहन्त्यदेशिताः ।
अनुक्तमप्यूहति पण्डितो जनः परेङ्गितज्ञानफला हि बुद्धयः ।। ४१ ।।

स्वायत्तमेकान्तगुणं विधात्रा विनिर्मितं छादनमज्ञतायाः ।
विशेषतः सर्वविदां समाजे विभूषणं मौनमपण्डितानाम् ।। ४२ ।।

रात्रिर्गमिष्यति भविष्यति सुप्रभातं
भास्वानुदेष्यति हसिष्यति पङ्कजश्रीः ।
इत्थं विचिन्तयति कोषगते द्विरेफे
हा हन्त हन्त नलिनीं गज उज्जहार ।। ४३ ।।

भवन्ति नम्रास्तरवः फलोद्गमैर्नवाम्बुभिर्दूरविलम्बिनो घनाः ।
अनुद्धताः सत्पुरुषाः समृद्धिभिः स्वभाव एवैष परोपकारिणाम् ।।४४।।

साधूनामुपकर्तुं लक्ष्मीं द्रष्टुं विहायसा गन्तुम् ।
न कुतूहलि कस्य मनश्चरितं च महात्मनां श्रोतुम् ।। ४५ ।।

क्वचिद् विद्वद्गोष्ठी क्वचिदपि सुरामत्तकलहः
क्वचिद् वीणावादः क्वचिदपि च हा हेति रुदितम् ।
क्वचिद्रम्या रामा क्वचिदपि जराजर्जरतनु-
र्न जाने संसारः किममृतमयः किं विषमयः ।। ४६ ।।

वेधा द्वेधा भ्रमं चक्रे कान्तासु कनकेषु च ।
तासु तेष्वप्यनासक्तः साक्षाद्भर्गो नराकृतिः ।। ४७ ।।

एतेषु हा तरुणमारुतधूयमान-
दावानलैः कवलितेषु महीरुहेषु।
अम्भो न चेज्जलद मुञ्चसि मा विमुञ्च
वज्रं पुनः क्षिपसि निर्दय कस्य हेतोः ॥ ४८ ॥

अघटितघटितं घटयति सुघटितघटितानि दुर्घटीकुरुते।
विधिरेव तानि घटयति यानि पुमान्नैव चिन्तयति ॥ ४९ ॥

कुमुदवनमपश्रि श्रीमदम्भोजषण्डं
त्यजति मुदमुलूकः प्रीतिमांश्चक्रवाकः।
उदयमहिमरोचिर्याति शीतांशुरस्तं
हतविधिलसितानां ही विचित्रो विपाकः ॥ ५० ॥

अर्थानामीशिषे त्वं वयमपि च गिरामीश्महे यावदर्थं
शूरस्त्वं वादिदर्पव्युपशमनविधावक्षयं पाटवं नः।
सेवन्ते त्वां धनाढ्या मतिमलहतये मामपि श्रोतुकामा
मय्यप्यास्था न ते चेत्त्वयि मम नितरामेव राजन्ननास्था ॥५१॥

वरं शृङ्गोत्सङ्गाद् गुरुशिखरिणः क्वापि विषमे
पतित्वाऽयं कायः कठिनदृषदन्ते विगलितः।
वरं न्यस्तो हस्तः फणिपतिमुखे तीक्ष्णदशने
वरं वह्नौ पातस्तदपि न कृतः शीलविलयः ॥ ५२ ॥

क्वचित्पृथ्वीशय्यः क्वचिदपि च पर्यङ्कशयनः
क्वचिच्छाकाहारः क्वचिदपि च शाल्योदनरुचिः।
क्वचित्कन्थाधारी क्वचिदपि च दिव्याम्बरधरो
मनस्वी कार्यार्थी न गणयति दुःखं न च सुखम् ॥ ५३ ॥

शिरः शार्वं स्वर्गात्पशुपतिशिरस्तः क्षितिधरं
महीध्रादुत्तुङ्गादवनिमवनेश्चापि जलधिम्।
अधो गङ्गा सेयं पदमुपगता स्तोकमथवा
विवेकभ्रष्टानां भवति विनिपातः शतमुखः ॥ ५४ ॥

अवश्यं यातारश्चिरतरमुषित्वाऽपि विषया
वियोगे को भेदस्त्यजति न जनो यत्स्वयममून्।

व्रजन्तः स्वातन्त्र्यादतुलपरितापाय मनसः
स्वयं त्यक्ता ह्येते शमसुखमनन्तं विदधति ॥ ५५ ॥
भिन्ना महागिरिशिलाः करजाग्रजाग्र-
दुद्दामशौर्यनिकरैः करटिभ्रमेण ।
दैवे पराचि करिणामरिणा तथापि
कुत्रापि नापि खलु हा पिशितस्य लेशः ॥ ५६ ॥

अस्ति यद्यपि सर्वत्र नीरं नीरजमण्डितम् ।
रमते न मरालस्य मानसं मानसं विना ॥ ५७ ॥
भद्रं भद्रं कृतं मौनं कोकिलैर्जलदागमे ।
वक्तारो दर्दुरा यत्र तत्र मौनं हि शोभते ॥ ५८ ॥
सुभाषितस्याध्ययनानुषक्तं शुकं वराकाः प्रहसन्ति काकाः ।
तमेव संसत्सु गिरं किरन्तं दृष्ट्वा भवन्ति त्रपयानतास्याः ॥५९॥
प्रारम्भे कुसुमाकरस्य परितो यस्योल्लसन्मञ्जरी-
पुञ्जे मञ्जुलगुञ्जितानि रचयंस्तानातनोरुत्सवान् ।
तस्मिन्नद्य रसालशाखिनि दशां दैवात्कृशामञ्चति
त्वं चेन्मुञ्चसि चञ्चरीक विनयं नीचस्त्वदन्योऽस्ति कः ॥६०॥

यत्कृत्वा न भवेद् धर्मो न कीर्तिर्न यशो भुवि ।
शरीरस्य भवेत् खेदः कस्तत्कर्म समाचरेत् ॥ ६१ ॥
अधर्मयुक्तं न च कामयेत
राज्यं सुराणामपि धर्मराजः ।
धर्मार्थयुक्तं तु महीपतित्वं
ग्रामेऽपि कस्मिंश्चिदयं बुभूषेत् ॥ ६२ ॥
भूतानां प्राणिनः श्रेष्ठाः प्राणिनां बुद्धिजीविनः ।
बुद्धिमत्सु नराः श्रेष्ठा नरेष्वपि द्विजातयः ॥ ६३ ॥
द्विजेषु वैद्याः श्रेयांसो वैद्येषु कृतबुद्धयः ।
कृतबुद्धिषु कर्तारः कर्तृषु ब्रह्मवादिनः ॥ ६४ ॥
प्राणान्तिकैरप्युपायैः प्रयतद्भिरनेकशः ।
शेषवन्तो न शकिता नेतुं वै यमसादनम् ॥ ६५ ॥

न कर्मणां विप्रणाशोऽस्त्यमुत्र
पुण्यानां वाप्यथवा पापकानाम् ।
पूर्वं कर्तुर्गच्छति पुण्यपापं
पश्चात्त्वेनमनुयात्येव कर्ता ॥ ६६ ॥

निर्वनो वध्यते व्याघ्रो निर्व्याघ्रं छिद्यते वनम् ।
तस्माद् व्याघ्रो वनं रक्षेद्वनं व्याघ्रं च पालयेत् ॥ ६७ ॥

प्रवृत्तवाक् चित्रकथ ऊहवान् प्रतिभानवान् ।
आशु ग्रन्थस्य वक्ता च यः स पण्डित उच्यते ॥ ६८ ॥

एकः क्षमावतां दोषो द्वितीयो नोपपद्यते ।
यदेनं क्षमया युक्तमशक्तं मन्यते जनः ॥ ६९ ॥

द्वाविमौ पुरुषव्याघ्र परप्रत्ययकारिणौ ।
स्त्रियः कामितकामिन्यो लोकः पूजितपूजकः ॥ ७० ॥

न्यायागतस्य द्रव्यस्य बोद्धव्यौ द्वावतिक्रमौ ।
अपात्रे प्रतिपत्तिश्च पात्रे चाप्रतिपादनम् ॥ ७१ ॥

द्वावम्भसि निवेष्टव्यौ गले बद्ध्वा दृढां शिलाम् ।
धनवन्तमदातारं दरिद्रं चातपस्विनम् ॥ ७२ ॥

आरोग्यमानृण्यमविप्रवासः
सद्भिर्मनुष्यैः सह सम्प्रयोगः ।
स्वप्रत्यया वृत्तिरभीतवासः
षड् जीवलोकस्य सुखानि राजन् ॥ ७३ ॥

दश धर्मं न जानन्ति धृतराष्ट्र निबोध तान् ।
मत्तः प्रमत्त उन्मत्तः श्रान्तः क्रुद्धो बुभुक्षितः ।
त्वरमाणश्च लुब्धश्च भीतः कामी च ते दश ॥ ७४ ॥

अप्युन्मत्तात्प्रलपतो बालाच्च परिजल्पतः ।
सर्वतः सारमादद्यादश्मभ्य इव काञ्चनम् ॥ ७५ ॥

विद्यामदो धनमदस्तृतीयोऽभिजनो मदः ।
मदा एतेऽवलिप्तानामेत एव सतां दमाः ॥ ७६ ॥

सम्पन्नतरमेवान्नं दरिद्रा भुञ्जते सदा।
क्षुत्स्वादुतां जनयति सा चाढ्येषु सुदुर्लभा ॥ ७७ ॥
यस्मै देवाः प्रयच्छन्ति पुरुषाय पराभवम्।
बुद्धिं तस्यापकर्षन्ति सोऽवाचीनानि पश्यति ॥ ७८ ॥
न देवा दण्डमादाय रक्षन्ति पशुपालवत्।
यं तु रक्षितुमिच्छन्ति बुद्ध्या संविभजन्ति तम् ॥ ७९ ॥
वाक्संयमो हि नृपते सुदुष्करतमो मतः।
अर्थवच्च विचित्रं च न शक्यं बहु भाषितुम् ॥ ८० ॥
पूर्वे वयसि तत्कुर्याद्येन वृद्धः सुखं वसेत्।
यावज्जीवेन तत्कुर्याद्येन प्रेत्य सुखं वसेत् ॥ ८१ ॥
सुवर्णपुष्पां पृथिवीं चिन्वन्ति पुरुषास्त्रयः।
शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम् ॥ ८२ ॥
वृत्तं यत्नेन संरक्षेद् वित्तमेति च याति च।
अक्षीणो वित्ततः क्षीणो वृत्ततस्तु हतो हतः ॥ ८३ ॥

न वै भिन्ना गौरवं प्राप्नुवन्ति
न वै भिन्नाः प्रशमं रोचयन्ति।
न वै तेषां स्वदते पथ्यमुक्तं
योगक्षेमं कल्पते नैव तेषाम् ॥ ८४ ॥
यस्मिन्यथा वर्तते यो मनुष्य-
स्तस्मिंस्तथा वर्तितव्यं स धर्मः।
मायाचारो मायया बाधितव्यः
साध्वाचारः साधुना प्रत्युपेयः ॥ ८५ ॥

सुलभाः पुरुषा राजन् सततं प्रियवादिनः।
अप्रियस्य तु पथ्यस्य वक्ता श्रोता च दुर्लभः ॥ ८६ ॥
मलं पृथिव्या बाह्लीकाः पुरुषस्यानृतं मलम्।
कौतूहलमला साध्वी विप्रवासमलाः स्त्रियः ॥ ८७ ॥
सहस्रिणोऽपि जीवन्ति जीवन्ति शतिनस्तथा।
धृतराष्ट्र विमुञ्चेच्छां न कथंचिन्न जीव्यते ॥ ८८ ॥

यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः ।
नालमेकस्य तत्सर्वमिति पश्यन्न मुह्यति ॥ ८९ ॥
यावता भ्रियते जठरं तावत्स्वत्वं हि देहिनः ।
अधिकं तु समागृह्णन्स नरः स्तेन उच्यते ॥ ९० ॥
कियती पञ्चसाहस्री कियती लक्षाऽथ कोटिरपि कियती ।
औदार्योन्नतमनसां रत्नवती वसुमती कियती ॥ ९१ ॥
योऽन्यथासन्तमात्मानमन्यथा प्रतिपद्यते ।
किं तेन न कृतं पापं चौरेणात्मापहारिणा ॥ ९२ ॥
आचार्यात्पादमादत्ते पादं शिष्यः स्वमेधया ।
कालेन पादमादत्ते पादं सब्रह्मचारिभिः ॥ ९३ ॥
संभोजनं संकथनं सम्प्रश्नोथ समागमः ।
एतानि ज्ञातिकार्याणि न विरोधः कदाचन ॥ ९४ ॥
धूमायन्ते व्यपेतानि ज्वलन्ति सहितानि च ।
धृतराष्ट्रोल्मुकानीव ज्ञातयो भरतर्षभ ॥ ९५ ॥
लोभः प्रज्ञानमाहन्ति प्रज्ञा हन्ति हता ह्रियम् ।
ह्रीर्हता बाधते धर्मं धर्मो हन्ति हतः श्रियम् ॥ ९६ ॥
ये धनादपकर्षन्ति नरं स्वबलमास्थिताः ।
ते धर्ममर्थं कामं च प्रमथ्नन्ति नरं च तम् ॥ ९७ ॥
एतामवस्थां प्राप्यैके मरणं वव्रिरे जनाः ।
ग्रामायैके वनायैके नाशायैके प्रवव्रजुः ॥ ९८ ॥
उन्मादमेके पुष्यन्ति यान्त्यन्ये द्विषतां वशम् ।
दास्यमेके च गच्छन्ति परेषामर्थहेतुना ॥ ९९ ॥
न तथा बाध्यते कृष्ण प्रकृत्या निर्धनो जनः ।
यथा भद्रां श्रियं प्राप्य तया हीनः सुखैधितः ॥ १०० ॥
न हि वैराणि शाम्यन्ति दीर्घकालधृतान्यपि ।
आख्यातारश्च विद्यन्ते पुमाँश्चेद्विद्यते कुले ॥ १०१ ॥
न चापि वैरं वैरेण केशव व्युपशाम्यति ।
हविषाऽग्निर्यथा कृष्ण भूय एवाभिवर्धते ॥ १०२ ॥

अनित्यं किल मर्त्यस्य चित्तं पार्थ चलाचलम् ।
वातवेगप्रचलिता अष्ठीला शाल्मलेरिव ॥ १०३ ॥
सुमन्त्रितं सुनीतं च न्यायतश्चोपपादितम् ।
कृतं मानुष्यकं कर्म दैवेनापि विरुध्यते ॥ १०४ ॥
तदिदं निश्चितं बुद्ध्या पूर्वैरपि महात्मभिः ।
दैवे च मानुषे चैव संयुक्तं लोककारणम् ॥ १०५ ॥
यत्र सूक्तं दुरुक्तं च समं स्यान्मधुसूदन ।
न तत्र प्रलपेत्प्राज्ञो बधिरेष्विव गायनः ॥ १०६ ॥
योऽसत्सेवी वृथाचारो न श्रोता सुहृदां सताम् ।
परान्वृणीते स्वान्द्वेष्टि तं गौस्त्यजति भारत ॥ १०७ ॥
न युद्धे तात कल्याणं न धर्मार्थौ कुतः सुखम् ।
न चापि विजयो नित्यं मा युद्धे चेत आधिथाः ॥ १०८ ॥
कालो वा कारणं राज्ञो राजा वा कालकारणम् ।
इति ते संशयो मा भूद्राजा कालस्य कारणम् ॥ १०९ ॥
सुपूरा वै कुनदिका सुपूरो मूषिकाञ्जलिः ।
सुसन्तोषः कापुरुषः स्वल्पकेनैव तुष्यति ॥ ११० ॥
अलातं तुन्दकस्येव मुहूर्त्तमपि हि ज्वल ।
मा तुषाग्निरिवानर्चिर्धूमायस्व जिजीविषुः ॥
मुहूर्त्तं ज्वलितं श्रेयो न च धूमायितं चिरम् ॥ १११ ॥
दाने तपसि सत्ये च यस्य नोच्चरितं यशः ।
विद्यायामर्थलाभे वा मातुरुच्चार एव सः ॥ ११२ ॥
एतावानेव पुरुषो यदमर्षी यदक्षमी ।
क्षमावान्निरमर्षश्च नैव स्त्री न पुनः पुमान् ॥ ११३ ॥
इह प्राज्ञो हि पुरुषः स्वल्पमप्रियमिच्छति ।
यस्य स्वल्पं प्रियं लोके ध्रुवं तस्याल्पमप्रियम् ॥ ११४ ॥
बलज्येष्ठं स्मृतं क्षत्रं मन्त्रज्येष्ठा द्विजातयः ।
धनज्येष्ठाः स्मृता वैश्याः शूद्रास्तु वयसाधिकाः ॥ ११५ ॥

श्रोतव्यं खलु वृद्धानामिति शास्त्रनिदर्शनम्।
न त्वेव ह्यतिवृद्धानां पुनर्बाला हि ते मताः॥ ११६॥
गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः।
उत्पथप्रतिपन्नस्य न्याय्यं भवति शासनम्॥ ११७॥
शरदम्बुधरच्छाया गत्वर्यो यौवनश्रियः।
आपातरम्या विषयाः पर्यन्तपरितापिनः॥ ११८॥
यदि सन्ति गुणाः पुंसां विकसन्त्येव ते स्वयम्।
न हि कस्तूरिकामोदः शपथेन विभाव्यते॥ ११९॥
अद्यापि दुर्निवारं स्तुतिकन्या वहति कौमारम्।
सद्भ्यो न रोचते साऽसन्तस्तस्यै न रोचन्ते॥ १२०॥
आदानस्य प्रदानस्य कर्तव्यस्य च कर्मणः।
क्षिप्रमक्रियमाणस्य कालः पिबति तद्रसम्॥ १२१॥
सन्तोषस्त्रिषु कर्तव्यः स्वदारे भोजने धने।
त्रिषु चैव न कर्तव्यो दाने तपसि पाठने॥ १२२॥
यदीच्छसि वशीकर्तुं जगदेकेन कर्मणा।
परापवादसस्येभ्यो गां चरन्तीं निवारय॥ १२३॥
शनैः पन्थाः शनैः कन्था शनैः पर्वतलङ्घनम्।
शनैर्विद्या शनैर्वित्तं पञ्चैतानि शनैः शनैः॥ १२४॥
द्वाविमौ पुरुषौ लोके शिरःशूलकरावुभौ।
गृहस्थश्च निरारम्भो यतिश्च सपरिग्रहः॥ १२५॥
कालो हि सकृदभ्येति यन्नरं कालकाङ्क्षिणम्।
दुर्लभः स पुनस्तेन कालः कर्माचिकीर्षता॥ १२६॥
लक्ष्मीवन्तो न जानन्ति प्रायेण परवेदनाम्।
शेषे धराभराक्रान्ते शेते नारायणः सुखम्॥ १२७॥
कस्यापि कोप्यतिशयोस्ति स तेन लोके
ख्यातिं प्रयाति न हि सर्वविदस्तु सर्वे।
किं केतकी फलति किं पनसः सुपुष्पः
किं नागवल्ल्यपि च पुष्पफलैरुपेता॥ १२८॥

उद्घाटितनवद्वारे पञ्जरे विहगोऽनिलः।
यत्तिष्ठति तदाश्चर्यं प्रयाणे विस्मयः कुतः॥ १२९॥
किं कुलेनोपदिष्टेन शीलमेवात्र कारणम्।
भवन्ति नितरां स्फीताः सुक्षेत्रे कण्टकिद्रुमाः॥ १३०॥
अम्भोजिनीवननिवासविलासमेव
हंसस्य हन्ति नितरां कुपितो विधाता।
न त्वस्य दुग्धजलभेदविधौ प्रसिद्धां
वैदग्ध्यकीर्तिमपहर्तुमसौ समर्थः॥ १३१॥
काष्ठादग्निर्जायते मथ्यमानाद्
भूमिस्तोयं खन्यमाना ददाति।
सोत्साहानां नास्त्यसाध्यं नराणां
मार्गारब्धाः सर्वयत्नाः फलन्ति॥ १३२॥
हस्ती स्थूलतनुः स चाङ्कुशवशः किं हस्तिमात्रोऽङ्कुशो
वज्रेणाभिहताः पतन्ति गिरयः किं शैलमात्रः पविः।
दीपे प्रज्वलिते विनश्यति तमः किं दीपमात्रं तम-
स्तेजो यस्य विराजते च बलवान्स्थूलेषु कः प्रत्ययः॥ १३३॥
गीर्भिर्गुरूणां परुषाक्षराभिस्तिरस्कृता यान्ति नरा महत्त्वम्।
अलब्धशाणोत्कषणा नृपाणां न जातु मौलौ मणयो वसन्ति॥ १३४॥
किमिष्टमन्नं खरसूकराणां किं रत्नहारो मृगपक्षिणां च।
अन्धस्य दीपो बधिरस्य गीतं मूर्खस्य किं शास्त्रकथाप्रसङ्गः॥ १३५॥
न साहसैकान्तरसानुवर्तिना न चाप्यपायोपहतान्तरात्मना।
विभूतयः शक्यमवाप्तुमूर्जिता नये च शौर्ये च वसन्ति सम्पदः॥ १३६॥
सम्पत्सु महतां चित्तं भवत्युत्पलकोमलम्।
आपत्सु च महाशैलशिलासंघातकर्कशम्॥ १३७॥
उपकर्तुं प्रियं वक्तुं कर्तुं स्नेहमकृत्रिमम्।
सज्जनानां स्वभावोऽयं केनेन्दुः शिशिरीकृतः॥ १३८॥
विकृतिं नैव गच्छन्ति सङ्गदोषेण साधवः।
आवेष्टितं महासर्पैश्चन्दनं न विषायते॥ १३९॥

पतितो राहुवदने तरणिर्बोधयति पद्मखण्डानि ।
भवति विपद्यपि महतामङ्गीकृतवस्तुनिर्वाहः ॥ १४० ॥

इह तुरगशतैः प्रयान्तु मूढा
धनरहितास्तु बुधाः प्रयान्तु पद्भ्याम् ।
गिरिशिखरगतापि काकपङ्क्तिः
पुलिनगतैर्न समत्वमेति हंसैः ॥ १४१ ॥

सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः ।
संयोगा विप्रयोगान्ता मरणान्तं च जीवितम् ॥ १४२ ॥
यथा काष्ठं च काष्ठं च समेयातां महोदधौ ।
समेत्य च व्यपेयातां तद्वद्भूतसमागमः ॥ १४३ ॥
उपायकुशलं वैद्यं भृत्यं सन्दूषणे रतम् ।
शूरमैश्वर्यकामं च यो न हन्ति स हन्यते ॥ १४४ ॥
अहो तम इवेदं स्यान्न प्रज्ञायेत किञ्चन ।
राजा चेन्न भवेल्लोके विभजन्साध्वसाधुनी ॥ १४५ ॥
न लुब्धो बुध्यते दोषान् किम्पाकमिव भक्षयन् ।
यदाचरति कल्याणि शुभं वा यदि वाऽशुभम् ।
तदेव लभते भद्रे कर्ता कर्मजमात्मनः ॥ १४६ ॥
कश्चिदाम्रवणं छित्त्वा पलाशांश्च निषिञ्चति ।
पुष्पं दृष्ट्वा फले गृध्नुः स शोचति फलागमे ॥ १४७ ॥
न परेणाहृतं भक्ष्यं व्याघ्रः खादितुमिच्छति ।
एवमेव नरव्याघ्रः परलीढं न मन्यते ॥ १४८ ॥
अर्थधर्मौ परित्यज्य यः काममनुवर्तते ।
एवमापद्यते क्षिप्रं राजा दशरथो यथा ॥ १४९ ॥
नातन्त्रीर्विद्यते वीणा नाचक्रो विद्यते रथः ।
नापतिः सुखमेधेत या स्यादपि शतात्मजा ॥ १५० ॥
यो हि दत्त्वा द्विपश्रेष्ठं कक्ष्यायां कुरुते मनः ।
रज्जुस्नेहेन किं तस्य त्यजतः कुञ्जरोत्तमम् ॥ १५१ ॥

आम्रं छित्त्वा कुठारेण निम्बं परिचरेत्तु कः ।
यश्चैनं पयसा सिञ्चेन्नैवास्य मधुरो भवेत् ॥ १५२ ॥
विक्लवो वीर्यहीनो यः स दैवमनुवर्तते ।
वीराः सम्भावितात्मानो न दैवं पर्युपासते ॥ १५३ ॥
न वनं गन्तुकामस्य त्यजतश्च वसुन्धराम् ।
सर्वलोकातिगस्येव लक्ष्यते चित्तविक्रिया ॥ १५४ ॥
न ह्यतो धर्मचरणं किञ्चिदस्ति महत्तरम् ।
यथा पितरि शुश्रूषा तस्य वा वचनक्रिया ॥ १५५ ॥
कश्च प्रत्यक्षमुत्सृज्य संशयस्थमलक्षणम् ।
आयतिस्थं चरेद्धर्मं क्षत्रबन्धुरनिश्चितम् ॥ १५६ ॥
नाराजके जनपदे बीजमुष्टिः प्रकीर्यते ।
नाराजके पितुः पुत्रो भार्या वा वर्तते वशे ॥ १५७ ॥
नाराजके जनपदे यज्ञशीला द्विजातयः ।
सत्राण्यन्वासते दान्ता ब्राह्मणाः शंसितव्रताः ॥ १५८ ॥
नाराजके जनपदे प्रहृष्टनटनर्तकाः ।
उत्सवाश्च समाजाश्च वर्धन्ते राष्ट्रवर्धनाः ॥ १५९ ॥
नाराजके जनपदे तूद्यानानि समागताः ।
सायाह्ने क्रीडितुं यान्ति कुमार्यो हेमभूषिताः ॥ १६० ॥
नाराजके जनपदे चरत्येकचरो वशी ।
भावयन्नात्मनात्मानं यत्र सायंगृहो मुनिः ॥ १६१ ॥
नाराजके जनपदे स्वकं भवति कस्यचित् ।
मत्स्या इव जना नित्यं भक्षयन्ति परस्परम् ॥ १६२ ॥
हृदयं तद् विविङ्क्ते यद्भावमन्यच्चलं पलम् ।
शतैकीयाः सहृदशा गण्यन्ते कथमन्यथा ॥ १६३ ॥

नरपतिहितकर्ता द्वेष्यतां याति लोके
जनपदहितकर्ता त्यज्यते पार्थिवेन ।
इति महति विरोधे विद्यमाने समाने
नृपतिजनपदानां दुर्लभः कार्यकर्ता ॥ १६४ ॥

अनुगन्तुं सतां वर्त्म कृत्स्नं यदि न शक्यते ।
स्वल्पमप्यनुगन्तव्यं मार्गस्थो नावसीदति ॥ १६५ ॥
प्रत्यहं प्रत्यवेक्षेत नरश्चरितमात्मनः ।
किं नु मे पशुभिस्तुल्यं किं नु सत्पुरुषैरिति ॥ १६६ ॥
आशा नाम मनुष्याणां काचिदाश्चर्यशृङ्खला ।
यया बद्धाः प्रधावन्ति मुक्तास्तिष्ठन्ति पङ्गुवत् ॥ १६७ ॥
यो न संचरते देशान्यो न सेवेत पण्डितान् ।
तस्य संकुचिता बुद्धिर्घृतबिन्दुरिवाम्भसि ॥ १६८ ॥
देशे देशे किमपि कुतुकादद्भुतं लोकमानाः
सम्पाद्यैव द्रविणमतुलं सद्म भूयोऽप्यवाप्य ।
संयुज्यन्ते सुचिरविरहोत्कण्ठिताभिः प्रियाभिः
सौख्यं धन्याः किमपि दधते सर्वसम्पत्समृद्धाः ॥ १६९ ॥
आकिञ्चन्यादतिपरिचयाज्जाययोपेक्ष्यमाणो
भूपालानामननुसरणाद् बिभ्यदेवाखिलेभ्यः ।
गेहे तिष्ठन्कुमतिरलसः कूपकूर्मः सधर्मा
किं जानीते भुवनचरितं किं सुखं वोपभुङ्क्ते ॥ १७० ॥

---

## सुभाषितेषु गद्यपद्यखण्डानि

सुलभा रम्यता लोके दुर्लभं हि गुणार्जनम् ।

विचित्ररूपाः खलु चित्तवृत्तयः ।

को दैवशप्तो हि वृणीत युद्धम् ।

परप्रयुक्तः पुरुषो विचेष्टते ।

कोऽद्धा वेद यच्छ्वो भविता ।

चौराः प्रमत्ते जीवन्ति व्याधितेषु चिकित्सकाः ।

निर्बन्धो हि दारुणः ।

न खलु धीमतां कश्चिदविषयो नाम ।

अस्त्येतदन्यसमाधिभीरुत्वं देवानाम् ।

अतिस्नेहः पापशङ्की ।

प्रत्युत्पन्नमति स्त्रैणम् ।

निसर्गनिपुणाः स्त्रियः ।

स्निग्धजनसंविभक्तं हि दुःखं सह्यवेदनं भवति ।

भुजे वीर्यं निवसति न वाचि ।

अवज्ञासोदर्यं दारिद्र्यम् ।

न ह्याकृतिः सुसदृशं विजहाति वृत्तम् ।

सुखमुपदिश्यते परस्य ।

दुःखं न्यासस्य रक्षणम् ।

सर्वः कान्तमात्मीयं पश्यति ।

गुरुकमपि विरहदुःखमाशाबन्धः साहयति ।

छिन्नबन्धे मत्स्ये पलायिते निर्विण्णो धीवरो भणति धर्मो मे भविष्यतीति ।

का वर्णना चन्द्रः सुधोद्गारीति ।

पर्याप्तो ह्येकः पुलाकः स्थाल्या निदर्शनाय ।

आर्जवं हि कुटिलेषु न नीतिः ।
पित्तेन दूने रसने सितापि तिक्तायते ।
जितक्रोधेन सर्वं हि जगदेतद्विजीयते ।
करुणार्द्रा हि सर्वस्य सन्तोऽकारणबान्धवाः
न दुर्बलः प्रातिभाव्यं करोति ।
शुष्केणार्द्रं दह्यते मिश्रभावात् ।
अनिर्वेदः श्रियो मूलं लाभस्य च शुभस्य च
उन्मत्ता गौरिवान्धा श्रीः क्वचिदेवावतिष्ठते ।
मधु पश्यसि दुर्बुद्धे प्रपातं नैव पश्यसि ।
विषमं न हि मन्यन्ते प्रपातं मधुदर्शिनः ।
अप्यपर्वणि भज्येत न नमेतेह कस्यचित् ।
न हि शुश्रुम वातेन मेरुमुन्मथितं गिरिम् ।
असदाचरितं ह्येतद्यदात्मानं प्रशंसति ।
दारिद्र्यमिति यत्प्रोक्तं पर्यायमरणं हि तत् ।
अर्थज्येष्ठा हि राजानः ।
कर्णवन्ति हि भूतानि ।
कर्णिनी वै भूमिः ।
निरुत्क्रमेनः कनीयो भवति ।
न हि निम्बात्स्रवेत्क्षौद्रम् ।
पितॄन् समनुजायन्ते नरा मातरमङ्गनाः ।
ऋद्धियुक्ता हि पुरुषा न सहन्ते परस्तवम् ।
कामात्मता खल्वपि न प्रशस्ता ।
दुर्लभं हि सदा सुखम् ।
गतोदके सेतुबन्धो न कल्याणि विधीयते ।
न सुखाल्लभते सुखम् ।
यद्वृत्ताः सन्ति राजानस्तद्वृत्ताः सन्ति हि प्रजाः ।
मुमूर्षूणां तु सर्वेषां यत्पथ्यं तन्न रोचते ।
परेतकल्पा हि गतायुषो नरा हितं न गृह्णन्ति सुहृद्भिरीरितम् ।

न हि कठोरकण्ठीरवस्य कुरङ्गशावकः प्रतिभटो भवति ।
मर्कटस्य सुरापानं ततो वृश्चिकदंशनम् ।
भक्षितेपि लशुने न शान्तो व्याधिः ।
न हि कोटरसंस्थेऽग्नौ तरुर्भवति शाद्वलः ।
सर्वं दुःखं विवेकिनः ।
प्रायेणाकृतकृत्यत्वान्मृत्योरुद्विजते जनः ।
संगरो विक्रियाकरः ।
मात्राशी सर्वकालं स्यात् ।
व्यायामी पथ्याशी स्त्रीषु जितात्मा नरो न रोगी स्यात् ।
न शत्रोः प्रत्ययं गच्छेत् ।
आराच्छत्रोः सदा वसेत् ।
आधिं प्राप्तो यो न मुह्येत्स धीरः ।
वितर गिरमुदारां येन मूकाः पिकाः स्युः ।
यथातथं वक्ति सभासु विद्वान् ।
न हि प्रेम प्रयोजनापेक्षम् ।
शारदाभ्रमिव पेलवमायुः ।
सर्वस्यैव हि दानस्य प्रहीता गुरुरुच्यते ।
कन्यायाश्चैव विद्यायाः प्रदाता पूज्यते गुरुः ।
पुनः पुनर्वारि पिबेदभूरि ।
शश्वद्वक्ति कुशिक्षितः ।
नये च शौर्ये च वसन्ति सम्पदः ।
न खलु सोपानपङ्क्तिमन्तरेण वलभ्याः समारोहः ।
न प्रेम नव्यं सहतेऽन्तरायम् ।
सलिलरूपाऽपि दहति हिमानी । कुसुममय्यपि स्वभावचण्डा
मदनपञ्चशरी ।
पुराणपत्त्रमदूरीकृत्य न नवपल्लवः समुल्लसति ।
विषयेच्छानुबन्धिन्यो निसर्गात्प्राणिनां धियः ।
शिल्पिनः सह शाठ्येन जायन्त इति घुष्यताम् ।

रूपं गुणो वयस्त्याग इति सुभगंकरणम् ।
न रम्यमाहार्यमपेक्षते गुणम् ।
न मौक्तिकच्छिद्रकरी शलाका प्रगल्भते कर्मणि टङ्किकायाः ।
निम्नेन सलिलं याति ।
न खलु व्यापारमन्तरेण करतलकलितापि शुक्तिर्विमुञ्चति मौक्तिकानि ।



# अभ्यासार्थाः निबन्धविषयाः

१ अहिंसा नाम विक्रान्तस्यायुधं मतं न तु भीरुकस्य ।

२ किमिह सङ्करेणैव सङ्करः शक्य उपरमयितुम् ।

३ किं जीवः कर्मसु स्वतन्त्र उत परतन्त्रः ।

४ प्रजातन्त्रस्य शासनस्य राजतन्त्रस्य च को विशेषः ।

५ गङ्गातीरमपि त्यजन्ति मलिनं ते राजहंसा वयम् ।

६ देशविभाजनकारिता पञ्चनददशा ।

७ विमानस्थो गगने सञ्चरामीति कल्पयित्वा यथाऽनुभवसि तथा वर्णय ।

८ स्वस्य विद्यालयस्योपाधिवितरणोत्सवः ।

९ द्वितीयं विश्वयुद्धम् ।

१० वसन्ते जानपदं दृश्यम् ।

११ संहतिः कार्यसाधिका ।

१२ स्वात्मावबोधादपरं न किञ्चित् ।

१३ भूयोऽपि सिक्तः पयसा घृतेन न निम्बवृक्षो मधुरत्वमेति ।

१४ न प्राणान्ते प्रकृतिविकृतिर्जायते चोत्तमानाम् ।

१५ न हि दुष्करमस्तीह किञ्चिदध्यवसायिनाम् ।

१६ बहुशास्त्रकथाकन्थारोमन्थेन वृथैव किम् । अन्वेष्टव्यं प्रयत्नेन तत्त्वज्ञैर्ज्योतिरान्तरम् ॥

१७ नायं लोकोऽस्ति न परो न सुखं संशयात्मनः ।

१८ सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः ।

१९ प्रायो गच्छति यत्र भाग्यरहितस्तत्रैव यान्त्यापदः ।

२० परहितनिरतानामादरो नात्मकार्ये ।

२१ विधेर्विचित्राणि विचेष्टितानि ।

२२ धीरास्ते कीर्तिशुभ्राणां भाजनं सर्वसम्पदाम् । न ये प्रचण्डकोपाग्नेर्यान्ति क्रीडापतङ्गताम् ॥

२३ प्रत्यासन्नविपत्तिमूढमनसां प्रायो मतिः क्षीयते ।

२४ सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः ।

२५ गुणेषु क्रियतां यत्नः किमाटोपैः प्रयोजनम् ।

२६ लोके गुरुत्वं विपरीततां वा स्वचेष्टितान्येव नरं नयन्ति ।

२७ आर्जवं हि कुटिलेषु न नीतिः ।

२८ सर्वं दुःखं विवेकिनः ।

२९ संस्कृताध्ययनाध्यापनविधिः ।

३० गीर्वाणवाण्याः समुन्नतेरभ्युपायाः ।

३१ यद्यहं महाविद्यालयाध्यक्षः स्याम् ।

३२ नागरिकस्य कर्तव्यकलापोऽधिकारसमुदयश्च ।

३३ यदि त्वं नगरपालिकायाः सभाया अध्यक्षः स्याः ।

३४ शरीरमाद्यं खलु धर्मसाधनम् ।

३५ यादृशी भावना यस्य सिद्धिर्भवति तादृशी ।

समाप्तश्चायं ग्रन्थः ।